णं वासे मणुया अरुणा अरुणाभासा सेया संखदलसंनिकासा हरिवासे य एत्थ देवे महिड्ढिए जाव पलिउवमट्ठिईए परिवसति, से एएणट्ठेणं गोयमा ! एवं वुच्चइ हरिवासे हरिवासे" इति । यदा च मनुष्ययोगात् हरिशब्दः क्षेत्रे वर्तते तदा स्वभावाद्बहुवचनान्तः प्रयुज्यत इति. यदाह तत्त्वार्थमूलटीकाकृत् गन्धहस्ती—"हरयो विदेहाश्च पञ्चालादितुल्या" इति ।

तथा महानतिशयेन विकृष्टो गरीयान् देहः शरीरमाभोग इति यावत् येषां ते महाविदेहाः, तथाहि—भरतैरावतहैमवतहैरण्यवतहरिवर्षरम्यकवर्षापेक्षया महान्तावस्य क्षेत्रस्यायामविष्कम्भौ, प्रतीतश्चायमर्थः प्रवचनवेदिना, वक्ष्यते चाग्रे स्वयमेवाचार्येण, ततो भवति तत्क्षेत्रं महाविदेहम् । अथवा महान्—अतिशयेन विकृष्टो गरीयान् देहः शरीरं कलेवरं येषां ते महाविदेहास्तत्रत्या मनुष्याः, तथाहि—तत्र विजयेषु सर्वेष्वपि सर्वदैव पञ्चधनुःशतप्रमाणोच्छ्रया देवकुरूत्तरकुरुषु तु त्रिगव्यूतोच्छ्रया मनुष्याः, ततो महाविदेहमनुष्ययोगात्तदपि क्षेत्रं महाविदेहाः, महाविदेहशब्दश्च स्वभावाद्बहुवचनान्तः, एतच्च प्रागेवोक्तं, ततो बहुवचनेन व्यवह्रियते, दृश्यते च क्वचिदेकवचनान्तोऽपि, तदपि प्रमाणं, पूर्वमहर्षिभिस्तथा प्रयोगकरणात् । यदिवा महाविदेहनामा देवः पल्योपमस्थितिकस्तत्राधिपत्यं परिपालयति, तेन तद्योगान्महाविदेह इति । उक्तं च—"से केणट्ठेणं भंते एवं वुच्चइ महाविदेहे वासे महाविदेहे वासे ? इति, गोयमा ! महाविदेहे णं वासे भरहेरवयहेमवयहिरण्णवयहरिवासरम्मगवासेहिंतो आयामविक्खंभेणं संठाणपरिणाहेणं विच्छिन्नतरागे चेव विपुलतरागे चेव महन्तरागे चेव सुप्पमाणतरागे चेव महाविदेहा एत्थ मणुसा परिव-

संति,महाविदेहे य एत्थ देवे महिड्ढिए महज्जुइए जाव पलिओवमठिईए परिवसइ, से एएणट्ठेणं गोयमा ! एवं वुच्चइ महाविदेहे वासे महाविदेहे वासे इति ।

तथा रम्यते क्रीड्यते नानाविधैः कल्पपादपैः सुवर्णमणिखचितैश्च तैस्तैः प्रदेशैरतिरमणीयतया रतिविषयतां नीयते इति रम्यं, रम्यमेव रम्यकं । यदिवा रम्यकनामा देवस्तत्र पल्योपमस्थितिक आधिपत्यं परिपालयति, तेन तद्योगात् रम्यकमिति व्यवह्रियते. उक्तं च—"से केणट्ठेणं भंते ! एवं वुच्चइ रम्मए वासे रम्मए वासे ? इति, गोयमा ! रम्मगवासे णं रम्मे रम्मए रमणिज्जे रम्मए य एत्थ देवे जाव परिवसइ, से एएणट्ठेणं गोयमा ! एवं वुच्चइ रम्मए वासे रम्मए वासे" इति ।

तथा रुक्मी शिखरी च एतौ द्वावपि पर्वतौ यथाक्रमं रूप्यसुवर्णमयौ, यच्च यन्मयं तत्र तद्विद्यते, हिरण्यं सुवर्णमिति चानर्थान्तरं, ततो हिरण्यं सुवर्णं विद्यते यस्यासौ हिरण्यवान् शिखरी पर्वतः, तस्येदं हैरण्यवतं, तथाहि—तत् द्वाभ्यामपि रुक्मिशिखरिभ्यां पर्वताभ्यां यथाक्रममुत्तरयोर्दक्षिणोत्तररूपयोः पार्श्वयोः कृतसीमाकं, ततो भवति हिरण्यवतः शिखरिणोऽपि संबन्धीति हैरण्यवतं । यदिवा हिरण्यं जनेभ्य आसनप्रदानादितया प्रयच्छति । अथवा दर्शनमनोहारितया तत्र तत्र प्रदेशे हिरण्यं जनेभ्यः प्रकाशयति, तथाहि—बहवस्तत्र मिथुनकमनुष्याणामुपवेशनशयनादिरूपोपभोगयोग्याः कनकमयाः शिलापट्टकाः सन्ति, पश्यन्ति च ते मिथुनकमनुष्यास्तत्र तत्र प्रदेशे मनोहारिणो हिरण्यमयान्निवेशान्, ततो हिरण्यं प्रभूतं प्रशस्यं नित्ययोगि चास्यास्तीति हिरण्यवत्, हिरण्यवदेव हैरण्यवतं, स्वार्थेऽण्

प्रत्ययः। यदिवा हैरण्यवतनामा तत्र देवः पल्योपमस्थितिक आधिपत्यं परिपालयति, तेन तद्योगात् हैरण्यवतमित्यभिधीयते. उक्तं च—"से केणट्ठेणं भंते ! एवं वुच्चइ हेरन्नवए वासे हेरन्नवए वासे ? इति, गोयमा ! हेरन्नवए णं वासे रुप्पिसिहरीहिं वासहरपव्वएहिं दुहतो समवगूढे निच्चं हिरन्नं दलयति निच्चं हिरन्नं पयासइ हेरन्नवए य एत्थ देवे जाव परिवसइ, से एएणट्ठेणं गोयमा ! एवं वुच्चइ हेरन्नवए वासे हेरन्नवए वासे" इति।

तथा ऐरावते क्षेत्रे ऐरावतनामा देवः पल्योपमस्थितिकः परिवसति, तेन तद्योगादैरावतमिति तत्प्रसिद्धं. तथा चोक्तं—"से केणट्ठेणं भंते ! एवं वुच्चइ एरवते वासे एरवते वासे ? इति, गोयमा ! एरावते नामं देवे जाव पलिओवमट्ठिइए परिवसइ, से एएणट्ठेणं गोयमा ! एवं वुच्चइ एरवते वासे एरवते वासे" इति ॥ २३ ॥

सम्प्रति वर्षधरान्नामत आह—

हिमवंत महाहिमवंत-पव्वया निसढनीलवंता य।
रुप्पी सिहरी एए, वासहरगिरी मुणेयव्वा ॥ २४ ॥

व्याख्या—एते गाथायामुपन्यस्ता वर्षधरा वर्षधररूपा गिरयः पर्वता ज्ञातव्याः। क इत्याह—हिमवान्, पदैकदेशे पदसमुदायोपचारात् क्षुद्रहिमवान्, महाहिमवान्, निषधो, नीलवान्, रुक्मी, शिख-

रीति, एते च षडपि वर्षधरपर्वताः प्रज्ञापकापेक्षया क्रमेण व्यवस्थिता वेदितव्याः। तथाहि—एतत्क्षेत्रनिवासिनं प्रज्ञापकमपेक्ष्योत्तरतः प्रथमतो वर्षधरः क्षुल्लहिमवान्, तदनन्तरं महाहिमवान्, ततो निषधः, तदनन्तरं नीलवान्, ततो रुक्मी, ततः परं शिखरीति। सम्प्रति नाम्नां यथार्थता ज्ञाप्यते—तत्राद्ये वर्षधरे पर्वते महाहिमवन्तमचलं प्रणिधाय विष्कम्भायामोद्वेधोच्चैस्त्वपरिरयाः क्षुल्लास्तेन क्षुल्लहिमवान्। यदि वा क्षुल्लहिमवन्नामा तत्र देवः पल्योपमस्थितिक आधिपत्यमुपभुङ्क्ते, तेन तद्योगात्क्षुल्लहिमवानभिधीयते. उक्तं च—"से केणट्ठेणं भंते! एवं वुच्चइ चुल्लहिमवंते वासहरपव्वते चुल्लहिमवंते वासहरपव्वए? इति, गोयमा! महाहिमवंतवासहरपव्वयं पणिहाय आयामुच्चमुव्वेहविक्खंभपरिक्खेवाईहिं खुड्डतरा चेव नीयतरा चेव हस्सतरा चेव चुल्लहिमवंते य एत्थ देवे महिड्ढीए जाव पलिओवमट्ठिईए परिवसइ, से एएणट्ठेणं गोयमा! एवं वुच्चइ चुल्लहिमवंते वासहरपव्वते चुल्लहिमवंते वासहरपव्वते" इति।

तथा क्षुल्लहिमवन्नामानं प्रथमं वर्षधरमपेक्ष्य द्वितीये वर्षधरपर्वते आयामविष्कम्भोद्वेधोच्चैस्त्वपरिरया अतीव महत्तरा महाहिमवन्नामा च देवस्तत्र पल्योपमस्थितिक आधिपत्यं परिपालयति तेन तद्योगतो महाहिमवानिति व्यपदिश्यते. तथा चोक्तं—"से केणट्ठेणं भंते! एवं वुच्चइ महाहिमवंते वासहरपव्वए महाहिमवंते वासहरपव्वए? इति, गोयमा! चुल्लहिमवंतं वासहरपव्वयं पणिहाय आयामुच्चत्तुव्वेहविक्खंभपरिक्खेवा महंततरा चेव दीहतरा चेव महाहिमवंते य एत्थ देवे महिड्ढिए जाव पलिओवमट्ठिईए परिवसति, से एएणट्ठेणं गोयमा एवं वुच्चइ महाहिमवंते वासहरपव्वए महाहिमवंते वासहरपव्वए" इति।

तथा नितरां सहते स्कन्धे पृष्ठे वा समारोपितं भारमिति निषधो वृषभः, पृषोदरादित्वादिष्टरूपनिष्पत्तिः । तत्र तृतीये वर्षधरे पर्वते भूयांसि निषधाकाराणि कूटानि वर्तन्ते, यदिवा निषधनामा देवस्तत्र पल्योपमस्थितिक आधिपत्यं परिपालयति, तेन निषधाकारकूटयोगान्निषधदेवयोगाद्वा स निषध इति व्यवह्रियते. उक्तं च—"से केणट्ठेणं भंते एवं वुच्चइ निसहे वासहरपव्वते निसहे वासहरपव्वते ? इति, गोयमा ! निसहे णं वासहरपव्वते बहवे कूडा निसहसंठाणसंठिया-उसभसंठाणसंठिया निसहे य एत्थ देवे महिड्ढीए जाव पलिओवमट्ठिईए परिवसइ, से एएणट्ठेणं गोयमा ! एवं वुच्चइ निसहे वासहरपव्वते निसहे वासहरपव्वते" इति ।

तथा नीला वैडूर्याख्या मणयो भूयांसो यत्र स नीलवान्, तथाहि—चतुर्थो वर्षधरपर्वतः सर्ववैडूर्यरत्नमयस्तेनासौ नीलमणियोगान्नीलवानिति व्यपदिश्यते, अथवा नीलवन्नामा देवस्तत्र पल्योपमस्थितिक आधिपत्यं परिपालयति, तेन तद्योगान्नीलवान् विख्यातः. उक्तं च—"से केणट्ठेणं भंते ! एवं वुच्चइ नीलवंते वासहरपव्वए नीलवंते वासहरपव्वए ? ( इति ) गोयमा ! नीले नीलोभासे नीलवंते य एत्थ देवे महिड्ढिए जाव पलिओवमट्ठिईए परिवसति, से एएणट्ठेणं गोयमा ! एवं वुच्चइ नीलवंते वासहरपव्वते नीलवंते वासहरपव्वते सव्वे वेरुलियमए" इति ।

तथा रुक्मं रूप्यं शब्दानामनेकार्थत्वात् तद्यस्यास्तीति रुक्मी, अत्र नित्ययोगलक्षणमर्थमधिकृत्येन्प्रत्ययः, स हि पर्वतो रूप्यमयः शाश्वतिक इति नित्ययोग इन् प्रत्ययः, यदिवा रुक्मिनामा देवस्तत्र पल्यो-

पमस्थितिक आधिपत्यं परिपालयति, तेन तद्योगात् रुक्मीति व्यपदिश्यते, उक्तं च—"से केणट्ठेणं भंते ! एवं वुच्चइ रुप्पी वासहरपव्वए रुप्पी वासहरपव्वए ? इति, गोयमा ! रुप्पी णं वासहरपव्वते रुप्पी रुप्पपट्टभासे रुप्पमए रुप्पी य एत्थ देवे महिड्ढीए जाव पलिओवमट्ठिईए परिवसइ, से एएणट्ठेणं गोयमा ! एवं वुच्चइ रुप्पी वासहरपव्वते रुप्पी वासहरपव्वते" इति ।

तथा शिखराणि पादपास्तदाकाराणि कूटान्यस्य सन्तीति शिखरी, यद्वा शिखरिणः पादपास्तदाकाराणि सर्वरत्नमयानि कूटानि वर्तन्ते, तेन तद्योगाच्छिखरी, अथवा शिखरिनामा देवस्तत्र पल्योपमस्थितिक आधिपत्यं परिपालयति, तेन तद्योगतः शिखरीति विख्यातः, उक्तं च—"से केणट्ठेणं भंते ! एवं वुच्चइ सिहरी वासहरपव्वते सिहरी वासहरपव्वते ? ( इति ), गोयमा ! सिहरम्मि वासहरपव्वते बहवे कूडा सिहरिसंठाणसंठिया सव्वरयणामया सिहरी य एत्थ देवे महिड्ढीए जाव पलिओवमट्ठिईए परिवसइ, से एएणट्ठेणं गोयमा ! एवं वुच्चइ सिहरी वासहरपव्वते सिहरी वासहरपव्वते" इति ॥ २४ ॥

तदेवमुक्तानि नामतो वर्षाणि वर्षधराश्च पर्वताः, सम्प्रत्येषां विष्कम्भादि वक्तव्यं, तत्र प्रथमतो येन भरतक्षेत्रं द्विधा कृतं यकाभ्यां च नामभ्यां ते अर्धे विख्याते तत्प्ररूपयति—

वेयड्ढनगवरेणं, पुव्वावरलवणसागरगएणं ।
भरहं दुहा विहत्तं, दाहिणभरहड्ढमियरं च ॥ २५ ॥

व्याख्या—इह भरतक्षेत्रे पूर्वापरायतो दक्षिणोत्तरविस्तीर्णो वैताढ्यनामा पर्वतः, स च पूर्वापरलवणसागरगतः, तथाहि—पूर्वया कोट्या पूर्वभागं लवणसमुद्रस्य स्पृष्टवान् अपरया कोट्या पश्चिमं भागं लवणसमुद्रस्य। तेन वैताढ्येन पर्वतेन पूर्वापरलवणसागरस्पर्शिना भरतक्षेत्रं द्विप्रकारं विभक्तं, तद्यथा—एकं दक्षिणभरतार्धं इतरत्वेन (चेति) अपरमुत्तरभरतार्धम्। यथा चैतद्भरतक्षेत्रं वैताढ्येन यथोक्तस्वरूपेण द्विधा कृतं तथैरावतक्षेत्रमिति, तथाहि—ऐरावते क्षेत्रे द्विधाभागकारी वैताढ्यो नाम यथोक्तस्वरूपः पर्वतः ततस्तदपि द्विधा व्यवस्थितं, तद्यथा—एकं दक्षिणैरावतार्धमपरमुत्तरैरावतार्धमिति ॥ २५ ॥

साम्प्रतमेकैकस्मिन् भरतार्धे साक्षादेकैकस्मिन्नैरावतार्धे(च)अतिदेशेन विष्कम्भपरिमाणमाह—

विक्खंभो भरहद्धे, दोन्नि सए जोयणाण अडतीसे ।
तिन्नि (य) कलाउ अवरा, एरवयद्धेऽवि एमेव ॥ २६ ॥

व्याख्या—भरतार्धे दक्षिणभरतार्धे उत्तरभरतार्धे च प्रत्येकं विष्कम्भो योजनानां द्वे शते अष्टात्रिंशे अष्टात्रिंशदधिके, यैश्चैकोनविंशतिभागैर्योजनं भवति ते भागाः कला इति व्यपदिश्यन्ते, ताश्च कलास्तिस्रोऽपरा अधिका वेदितव्याः यो० २३८ क० ३। तथाहि—भरतक्षेत्रस्य विष्कम्भो योजनानां पञ्च शतानि षड्विंशत्यधिकानि षट् च कलाः यो० ५२६ क० ६। वैताढ्यस्य विष्कम्भः पञ्चाशद्योजनानि ५०। तानि भरतविष्कम्भादपनीयन्ते, ततो जातो भरतविष्कम्भश्चत्वारि योजनशतानि षट्सप्तत्यधिकानि षट् च

कलाः ४७६ क० ६। अस्यार्धीकरणे लब्धे द्वे योजनानां शते अष्टात्रिंशदधिके तिस्रश्चापराः कलाः १२८
क० ३। यथा चैतद्विष्कम्भपरिमाणं दक्षिणभरतार्धे उत्तरभरतार्धे च प्रत्येकमुक्तं, एवमैरावतार्धेऽपि
दक्षिणरूप उत्तररूपे च प्रत्येकमवगन्तव्यं, यत ऐरावतस्यापि क्षेत्रस्य विष्कम्भः पञ्चशतयोजनानि षड्विं-
शत्यधिकानि षट् चापराः कलाः ५२६ क० ६। वैताढ्यस्यापि तत्र विष्कम्भः पञ्चाशद्योजनानि ५०।
तत्र ऐरावतविष्कम्भाद्वैताढ्यस्यापि विष्कम्भेऽपनीते शेषस्यार्धीकरणे भवति यथोक्तमैरावतार्धे विष्क-
म्भपरिमाणमिति ॥ २६ ॥

सम्प्रति शेषाणां वर्षवर्षधराणां विष्कम्भपरिमाणमाह—

भरहेरवयप्पभिई, दुगुणा दुगुणो उ होइ विक्खंभो।
वासावासहराणं, जाव य वासं विदेह त्ति ॥ २७ ॥

व्याख्या—इतो भरतक्षेत्रात्प्रभृति परत ऐरावतक्षेत्रादारभ्य वर्षवर्षधराणां हिमवच्छिखरिप्रमुखाणां
वर्षधराणां वर्षाणां हैमवतहैरण्यवतादीनां यथाक्रमं द्विगुणो द्विगुणो विष्कम्भस्तावदवसेयो यावद्वर्ष
महाविदेहा इति। तथाहि—भरतक्षेत्रापेक्षया द्विगुणविष्कम्भः क्षुद्रहिमवान्, ततोऽपि द्विगुणविष्कम्भं
हिमवन्तं क्षेत्रं, ततोऽपि द्विगुणविष्कम्भो महाहिमवान्, ततो द्विगुणविष्कम्भं हरिवर्षक्षेत्रं, ततो द्विगुण-
विष्कम्भो निषधपर्वतः, ततोऽपि द्विगुणविष्कम्भा महाविदेहाः। तथा ऐरवतक्षेत्रात् द्विगुणविष्कम्भः

शिखरी पर्वतः, ततो द्विगुणविष्कम्भं हैरण्यवतं क्षेत्रं, ततो द्विगुणविष्कम्भो रुक्मी पर्वतः, ततो द्विगुणविष्कम्भं रम्यकनामकं क्षेत्रं, ततो द्विगुणविष्कम्भो नीलवान् वर्षधरः, ततोऽपि द्विगुणविष्कम्भा महाविदेहा इति ॥ २१ ॥

साम्प्रतमेतेषामेव वर्षवर्षधराणां विष्कम्भपरिज्ञानाय करणमाह—

एगाई डुगुणेहिं, चउसट्ठिं तेहिं गुणिय विक्खंभं ।
खित्तनगाणं कमसो, सएण नउएण हियभागे ॥ २८ ॥

व्याख्या—विष्कम्भं प्रकरणसामर्थ्याज्जम्बूद्वीपस्य सत्कं भरतक्षेत्रादिस्थानीयैरेकादिभिरङ्कैर्द्विगुणैश्चतुःषष्टिपर्यन्तैः, किमुक्तं भवति ? एककद्विकचतुरष्टषोडशद्वात्रिंशच्चतुःषष्टिरूपैरङ्कैर्गुणयित्वा शतेन एकेन नवत्यधिकेन भागे हृते सति यदागच्छति तद्यथाक्रमं क्षेत्राणां भरतैरावतादीनां नगानां हिमवच्छिखरिप्रमुखाणां पर्वतानां विष्कम्भपरिमाणं जानीहि । तथाहि—जम्बूद्वीपस्य विष्कम्भो योजनलक्षं, तदेकेन गुण्यते, एकेन च गुणितं तदेव भवतीति जातमेकमेव लक्षं, तस्य नवत्यधिकेन शतेन भागो ह्रियते, लब्धानि योजनानां पञ्च शतानि षड्विंशत्यधिकानि ५२६ । शेषस्य च राशेश्छेदराशिगतेन शून्येन सह शून्यस्यापवर्तना क्रियते, लब्धा एकोनविंशतिरूपाः कलाः षट्, एतावत्परिमाणो भरतक्षेत्रस्य विष्कम्भ इति ॥ २८ ॥

तथा चाह—

पंच सए बवीसे, बच्च कला वित्थरं जरहवासं ।

व्याख्या—सुगमम् ॥

तथा जम्बूद्वीपस्य विष्कम्भो योजनलक्षप्रमाणः क्षुल्लहिमवद्विष्कम्भानयनाय द्विकेन गुणयते, जाते द्वे लक्षे, तयोर्नवत्यधिकेन शतेन भागो ह्रियते, लब्धानि दश योजनशतानि द्विपञ्चाशदधिकानि कलाश्चैकोनविंशतिभागरूपा द्वादश १०५२ क० १२। एतावान् हिमवद्वर्षधरपर्वतस्य विष्कम्भः। आह च—

दस सय बावन्नहिया, बारस य कलाउ हिमवंते ॥ २ए ॥

व्याख्या—सुगमम्। नवरं विष्कम्भ इति प्रकरणात्संबध्यते इति ॥ २ए ॥

तथा स एव जम्बूद्वीपविष्कम्भो योजनलक्षमानो हैमवतक्षेत्रविष्कम्भानयनाय चतुर्भिर्गुणयते, जाताश्चतस्रो लक्षाः, तासां नवत्यधिकेन शतेन भागहरणं, लब्धानि पञ्चाधिकान्येकविंशतिशतानि योजनानामेकोनविंशतिभागरूपाश्च कलाः पञ्च २१०५ क० ५ । एतावद्विष्कम्भपरिमाणं हैमवतस्य क्षेत्रस्य। तथा चाह—

हेमवए पंचहिया, इगवीससयाइ पंच य कलाउ ।

व्याख्या—सुगमम् ॥

तथा महाहिमवन्नगविष्कम्भानयनाय जम्बूद्वीपविष्कम्भो योजनलक्षप्रमाणोऽष्टभिर्गुण्यते, जाता अष्टौ लक्षाः, तासां नवत्यधिकेन शतेन भागे हृते लब्धानि दशाधिकानि द्विचत्वारिंशच्छतानि योजनानां दश चैकोनविंशतिभागरूपाः कलाः ४२१० क० १०। एतावत्परिमाणो महाहिमवतो विष्कम्भः। एतदेवाह—

दसहियबायालसया, दस य कलाउ महाहिमवंते ॥ ३० ॥

व्याख्या—सुगमम् ॥ ३० ॥

तथा हरिवर्षक्षेत्रविष्कम्भानयनाय जम्बूद्वीपविष्कम्भो योजनलक्षप्रमाणः षोडशभिर्गुण्यते, जातानि षोडश लक्षाणि, तेषां नवत्यधिकेन शतेन भागहरणं, लब्धान्येकविंशत्यधिकानि चतुरशीतिशतानि योजनानामेका चैकोनविंशतिभागरूपा कला ८४२१ क० १। एतावान् हरिवर्षस्य विष्कम्भः, तथाहि—

हरिवासे इगवीसा, चुलसीइ सया कला य एका य।

व्याख्या—सुगमम्।

तथा निषधपर्वतस्य विष्कम्भानयनाय जम्बूद्वीपविष्कम्भो लक्षप्रमाणो द्वात्रिंशता गुण्यते, जाता द्वात्रिंशल्लक्षाः, तासां नवत्यधिकेन शतेन भागो ह्रियते, लब्धानि योजनानां षोडश सहस्राण्यष्टौ शतानि द्विचत्वारिंशदधिकानि अपरे चैकोनविंशतिभागरूपे द्वे कले १६८४२ क० २। एतावन्निषधपर्वतस्य विष्कम्भपरिमाणम्। तथा चाह—

सोलस सहस्स अठ सय, बायाला दो कला निसढे ॥ ३१ ॥

व्याख्या—सुगमम् ॥ ३१ ॥

तथा महाविदेहक्षेत्रविष्कम्भानयनाय जम्बूद्वीपविष्कम्भो योजनलक्षप्रमाणश्चतुःषष्ट्या गुण्यते, जाताश्चतुःषष्टिर्लक्षाः, तासां नवत्यधिकेन शतेन भागहरणं, लब्धानि योजनानां त्रयस्त्रिंशत्सहस्राणि षट् शतानि चतुरशीत्यधिकानि चत्वारश्चैकोनविंशतिभागाः ( कलाः ) ३३६८४ क० ४ । एतावत्परिमाणो विदेहानां विष्कम्भः । तथा चाह—

तेत्तीसं च सहस्सा, छच्च सया जोयणाण चुलसीया ।

अउणावीसइ भागा, चउरो य विदेहविक्खंभो ॥ ३२ ॥

व्याख्या—सुगमम् ॥ यथा च भरतादीनां विष्कम्भानयनाय करणभावना कृता तथैरावतादीनामपि विष्कम्भानयनार्थमैरावतक्षेत्रमादिं कृत्वा करणभावना भावनीया, तेन तत्रापि यथोक्तं विष्कम्भपरिमाणं भवति । तत्रैरावतक्षेत्रविष्कम्भः पञ्च योजनशतानि षड्विंशत्यधिकानि षट् चैकोनविंशतिभागरूपाः कला अपराः । दश योजनशतानि द्विपञ्चाशदधिकानि द्वादश कला इति विष्कम्भः शिखरिणः । पञ्चाधिकानि योजनानामेकविंशतिशतानि कलाश्च पञ्चेति विष्कम्भो हैरण्यवतस्य क्षेत्रस्य । दशाधिकानि योजनानां द्विचत्वारिंशच्छतानि दश चैकोनविंशतिभागरूपाः कला इति विष्कम्भो रुक्मिपर्वतस्य ।

योजनानां चतुरशीतिशतानि एकविंशत्यधिकानि एकश्चैकोनविंशतिभाग इति विष्कम्भो रम्यकक्षेत्रस्य। योजनानां षोडश सहस्राण्यष्टौ शतानि द्विचत्वारिंशदधिकानि द्वौ चैकोनविंशतिभागौ नीलवतो वर्षधरपर्वतस्य विष्कम्भः ॥ ३२ ॥

तदेवमुक्तं वर्षवर्षधराणां विष्कम्भपरिमाणं, सम्प्रति दक्षिणभरतार्धादीनामिषवः प्रतिपादयितव्याः, यत इषुपरिमाणवशादग्रे जीवादिकमानेतव्यं, इषुपरिमाणं च न परिपूर्णयोजनसङ्ख्याकं, किंतु क्वापि कियत्यः कला अधिका अपि वर्तन्ते, ततो जीवाद्यानयने सुखेन तत्करणं न प्रवर्तते इति सुखप्रतिपत्त्यर्थं कलारूपाविषू प्रथमतो दक्षिणभरतार्धवैताढ्ययोराह—

दाहिणभरहद्ध उसू, पणयाल सया कलाणुपणुवीसा।
वेयड्ढे पणसयरी, चउपन्न सया कलाणं तु ॥ ३३ ॥

व्याख्या—दक्षिणभरतार्धस्य वैताढ्यादर्वाग्भागवर्तिन इषुरिषुप्रमाणं कलानां पञ्चचत्वारिंशच्छतानि पञ्चविंशत्यधिकानि। तथाहि—दक्षिणभरतार्धस्य विष्कम्भो द्वे शते योजनानामष्टात्रिंशदधिके तिस्रश्चापराः कलाः, ततो योजनराशिः कलाकरणार्थमेकोनविंशत्या गुण्यते, जातानि पञ्चचत्वारिंशच्छतानि द्वाविंशत्यधिकानि, ततः कलात्रिकमुपरितनं तत्र परिक्षिप्यते, जातानि सर्वसङ्ख्यया कलानां पञ्चचत्वारिंशच्छतानि पञ्चविंशत्यधिकानि ४५२५। तथा वैताढ्ये वैताढ्यपर्वते इषुपरिमाणं कलानां चतुःपञ्चाश-

च्छतानि पञ्चसप्तत्यधिकानि । तथाहि—वैताढ्यविष्कम्भः पञ्चाशद्योजनानि, तानि कलाकरणार्थमेकोनविंशत्या गुण्यन्ते, जातानि कलानां नव शतानि पञ्चाशदधिकानि, तानि पूर्वेषु पञ्चचत्वारिंशच्छतेषु पञ्चविंशत्यधिकेषु प्रक्षिप्यन्ते, ततो भवन्ति कलानां चतुःपञ्चाशच्छतानि पञ्चसप्तत्यधिकानि ५४७५ ॥ ३३ ॥

सम्प्रति भरतादीनामिषूनाह—

**एग तिग सत्त पनरस, इगतीस तिसठि होइ पणनउई ।**
**सयवग्गसंगुणंसो, वियाण भरहाइणं उसुणो ॥ ३४ ॥**

व्याख्या—एकस्त्रिकः सप्त पञ्चदश एकत्रिंशत् त्रिषष्टिः पञ्चनवतिरित्येते सप्त एकादिसङ्ख्या राशयः शतवर्गेण सहस्रदशकरूपेण संगुणाः संगुण्यन्ते संगुणाः संगुणिताः क्रियन्ते, ततः संगुणिताः सन्तो यावत्परिमाणा भवन्ति तावत्प्रमाणानंशान् कलारूपान् भरतादीनां भरतक्षेत्रहिमवन्नगहैमवतवर्षमहाहिमवद्वर्षधरहरिवर्षक्षेत्रनिषधवर्षधरमहाविदेहानामिषून् जानीहि । तद्यथा—एकः शतवर्गेण सहस्रदशकरूपेण गुण्यते, जातानि दश सहस्राणि, एतावत्यः कला भरतक्षेत्रस्यैरावतक्षेत्रस्य वा इषोः परिमाणं । तथाहि—भरतक्षेत्रस्यैरावतक्षेत्रस्य वा विष्कम्भपरिमाणं पञ्च शतानि षड्विंशत्यधिकानि योजनानां षट् च कलाः, तत्र योजनराशिः कलाकरणार्थमेकोनविंशत्या गुण्यते, जातानि नव सहस्राणि नव शतानि चतुर्नवत्यधिकानि कलाषट्कं चोपरितनं तत्र प्रक्षिप्यते जातानि कलानां दश सहस्राणि १०००० । तथा

त्रिकः शतवर्गेण गुण्यते, जातानि त्रिंशत्सहस्राणि ३०००० । एतावत्यः कलाः क्षुल्लहिमवतः शिखरिणश्च वर्षधरपर्वतस्येषुपरिमाणं । तथाहि—क्षुल्लहिमवतः शिखरिणश्च विष्कम्भमानं दश शतानि द्विपञ्चाशदधिकानि योजनानां कलाश्च अपरा द्वादश, ततो योजनराशिः कलाकरणार्थमेकोनविंशत्या गुण्यते, जातान्येकोनविंशतिसहस्राणि नव शतान्यष्टाशीत्यधिकानि, ततः कलाद्वादशकमुपरितनं तत्र प्रक्षिप्यते, जातानि कलानां विंशतिसहस्राणि, ततः प्राक्तनं भरतेषुपरिमाणं ऐरावतेषुपरिमाणं वा कलासहस्रदशकं संमील्यते, जातानि कलानां त्रिंशत्सहस्राणि । एवमग्रेऽपि तस्य क्षेत्रस्य पर्वतस्य वा विष्कम्भपरिमाणं कलात्वेन संकलय्य पूर्वपूर्वेषुपरिमाणं च तत्र परिक्षिप्य यथोक्तमिषुपरिमाणं भावनीयं । तथा सप्त शतवर्गेण सहस्रदशकरूपेण गुण्यते, जातानि सप्तति सहस्राणि ७०००० । एतावत्परिमाणाः कला हैमवतक्षेत्रस्य हिरण्यवतक्षेत्रस्य चेषुपरिमाणं । तथा पञ्चदश शतवर्गेण सहस्रदशकरूपेण गुण्यन्ते, जातमेकं शतसहस्रं पञ्चाशत्सहस्राधिकं १५०००० । एतावत्यः कला महाहिमवतो रुक्मिणश्च वर्षधरपर्वतस्येषुपरिमाणं । तथा एकत्रिंशत् शतवर्गेण सहस्रदशकरूपेण गुण्यते, जातानि त्रीणि शतसहस्राणि दशसहस्राधिकानि ३१०००० । एतावत्परिमाणाः कला हरिवर्षस्य रम्यकस्य चेषुपरिमाणं । तथा त्रिषष्टिः शतवर्गेण सहस्रदशकरूपेण गुण्यते, जातानि षड् लक्षाणि त्रिंशत्सहस्राधिकानि ६३०००० । एतावत्यः कला निषधपर्वतस्य नीलवन्तपर्वतस्य चेषुपरिमाणं । तथा पञ्चनवतिः शतवर्गेण सहस्रदशकरूपेण गुण्यते,

जातानि नव शतसहस्राणि पञ्चाशत्सहस्राधिकानि ९५०००० । एतावत्परिमाणा कला दक्षिणविदेहार्धस्योत्तरविदेहार्धस्य च प्रत्येकमिषुपरिमाणम् ॥ ३४ ॥

तदेवमुक्ता भरतादीनामिषवः, सम्प्रत्येतेषामेव जीवानयनाय करणमाह—

भरहाइउसू सोहिय, विक्खंभ इगुणवीसइगुणाउ ।
भागोऽवि य दायव्वो, एगुणवीसा य सव्वत्थ ॥ ३५ ॥

व्याख्या—विष्कम्भाज्जम्बूद्वीपसत्काद्योजनैकलक्षपरिमाणादेकोनविंशतिगुणात् एकोनविंशतिर्गुणो गुणाकारो यस्य स तथा तस्मादेकोनविंशतिगुणितादित्यर्थः भरतादीनामिषून् प्रागुक्तस्वरूपान् शोधयित्वा विशोध्यापनीयेत्यर्थः, अत ऊर्ध्वं यज्जीवानयने वक्तव्यं तत् द्वितीयायां गाथायामभिधास्यते, सम्प्रति पुनः सर्वत्र भागनिर्देशमाह—'भागोऽवि य' इत्यादि, भागोऽपि च, न केवलं कलाकरणार्थमेकोनविंशत्या जम्बूद्वीपविष्कम्भो गुणनीय इत्यपिशब्दार्थः, दातव्यः सर्वत्र जीवानयने धनुःपृष्ठाद्यानयने च योजनकरणार्थमेकोनविंशत्या, एतच्चाग्रे भावयिष्यते ॥ ३५ ॥

साम्प्रतं जम्बूद्वीपविष्कम्भादेकोनविंशतिगुणिताद्भरतादिसंबन्धिष्विषुषु शोधितेषु यत्कर्तव्यं तदाह—

उगाहूणं विक्खंभ, मोय उगाहसंगुणं कुज्जा ।
चउहिं गुणियस्स मूलं, मंडलखित्तस्स सा जीवा ॥ ३६ ॥

व्याख्या—अवगाहेन विवक्षितदक्षिणभरतार्धादिसंबन्धिना प्रागुक्तस्वरूपेण बाणेन ऊनं विष्कम्भं जम्बूद्वीपविष्कम्भं कलारूपमेकोनविंशतिलक्षप्रमाणं, 'मोय' इति पादपूरणे, अवगाहसंगुणं अवगाहो विवक्षितदक्षिणभरतार्धादिसंबन्धी यथोक्तस्वरूप इषुः स सम्यग्गुणो गुणाकारो यस्य स तथा तं, किमुक्तं भवति ? येनावगाहेन ऊनः कृतस्तेन गुणितं कुर्यात्, तस्य विवक्षितावगाहगुणितस्य भूयोऽपि चतुर्भिर्गुणितस्य यन्मूलं "विषमात्पदतस्त्यक्त्वा वर्गं स्थानच्युतेन मूलेन" इत्यादिना करणेन यद्वर्गमूलमागच्छति सा मण्डलक्षेत्रस्य वृत्तक्षेत्रस्य प्रस्तावादिह जम्बूद्वीपस्य संबन्धिनो विवक्षितस्यैकदेशस्य भरतादेरारोपितधनुराकारस्य जीवा प्रत्यञ्चा भवति ॥ ३६ ॥

तत्र प्रथमतो दक्षिणभरतार्धजीवायामिदं करणं भाव्यते—जम्बूद्वीपविष्कम्भो योजनलक्षं, स च कलात्वेन कृतः सन् जात एकोनविंशतिलक्षप्रमाणः १९००००० । ततोऽस्माद्दक्षिणभरतार्धेषुः पञ्चविंशत्यधिकपञ्चचत्वारिंशच्छतप्रमाणकलारूपः ४५२५ शोध्यते, शोधिते च तस्मिन् जातः पाश्चात्यो राशिरष्टादश लक्षाः पञ्चनवतिसहस्राणि चत्वारि शतानि पञ्चसप्तत्यधिकानि १८९५४७५ । एषोऽवगाहेन दक्षिणभरतार्धसंबन्धिना पञ्चविंशत्यधिकपञ्चचत्वारिंशच्छतप्रमाणेन ४५२५ गुण्यते, जातोऽष्टकः पञ्चकः सप्तकः सप्तकः शून्यं द्विकः चतुष्कः त्रिकः सप्तकः पञ्चकः ८५७७०२४३७५ । अयं राशिर्भूयश्चतुर्भिर्गुण्यते, जातः त्रिकः चतुष्कः त्रिकः शून्यं अष्टकः शून्यं नवकः सप्तकः पञ्चकः शून्यं शून्यं ३४३०८०९७५०० । ततोऽस्य वर्गमूलमानीयते, लब्धं कलानामेकं लक्षं पञ्चाशीतिसहस्राणि द्वे शते

चतुर्विंशत्यधिके १०५२२४ । शेषस्तूपरितनो राशिरवतिष्ठते लक्षमेकं सप्तषष्टिसहस्राणि त्रीणि शतानि चतुर्विंशत्यधिकानि १६७३२४ । छेदराशिरधस्तात्तिस्रो लक्षाः सप्ततिसहस्राणि चत्वारि शतानि अष्टाचत्वारिंशदधिकानि ३७०४४८ । वर्गमूललब्धस्य च राशेर्योजनानयनार्थमेकोनविंशत्या भागो ह्रियते, लब्धानि नव सहस्राणि सप्त शतानि अष्टाचत्वारिंशदधिकानि, कलाश्च शेषा द्वादश ९७४८ क० १२ । एतावती दक्षिणभरतार्धस्य जीवा । तथा चाह—

जोयणसहस्सनवगं, सत्तेव सया हवंति अडयाला ।
बारस य कला सकला, दाहिणभरहद्धजीवाउ ॥ ३७ ॥

व्याख्या—सुगमा ॥ ३७ ॥

तदेवमुक्ता दक्षिणभरतार्धजीवा, शेषास्तु वैताढ्यादिजीवा अग्रे वक्ष्यन्ते, सम्प्रति विष्कम्भानयनाय करणमाह—

जीवावग्गं उसुणा, चउरप्पत्थेण विभय जं लद्धं ।
तं उसुसहियं जाणसु, नियमा वट्टस्स विक्खंभं ॥ ३८ ॥

व्याख्या—जीवाया दक्षिणभरतार्धादिसंबन्धिन्या वर्गो जीवावर्गस्तं इषुणा तस्यैव दक्षिणभरतार्धादेः संबन्धिना चतुरभ्यस्तेन चतुर्गुणितेन विभजेत् ( भागहारविषमं कुर्यात् ), भागहारे च कृते सति यल्लब्धं

तदिषुणा विवक्षितस्य दक्षिणभरतार्धादेः संबन्धिना सहितं युक्तं जानीहि नियमादवश्यंतया वृत्तस्य मूल-वृत्तक्षेत्रस्य जम्बूद्वीपस्येत्यर्थः विष्कम्भं विष्कम्भपरिमाणं। तथाहि—दक्षिणभरतार्धजीवा नव सहस्राणि सप्त शतानि अष्टाचत्वारिंशदधिकानि कलाश्चापरा द्वादश ९७४८ क० १२। ततः कलाकरणार्थं योजनराशिरेकोनविंशत्या गुण्यते, गुणयित्वा च द्वादश कला उपरितन्यः प्रक्षिप्यन्ते, ततो जातो राशिरेकं लक्षं पञ्चाशीतिसहस्राणि द्वे शते चतुर्विंशत्यधिके १८५२२४। अस्य वर्गो विधीयते, जातः त्रिकः चतुष्कः त्रिकः शून्यं सप्तको नवकः त्रिकः शून्यं एककः सप्तकः षट्कः ३४३०७९३०१७६। ततो यः प्राग् वर्गमूलानयने शेषो राशिरुद्धरित आसीत् लक्षमेकं सप्तषष्टिसहस्राणि त्रीणि शतानि चतुर्विंशत्यधिकानि १६७३२४, स प्रक्षिप्यते, ततो जातः परिपूर्णो जीवावर्गः, स चायं—त्रिकः चतुष्कः त्रिकः शून्यं अष्टकः शून्यं नवकः सप्तकः पञ्चकः शून्यं शून्यं ३४३०८०९७५००। एष राशिः प्रागेव जीवानयने दर्शितो वर्तते। ततो दक्षिणभरतार्धेषुः पञ्चविंशत्यधिकपञ्चचत्वारिंशच्छतप्रमाणः ४५२५ चतुर्भिर्गुण्यते, जातान्यष्टादश सहस्राणि शताधिकानि १८१००। अनेनानन्तरोक्तस्य जीवावर्गस्य भागो ह्रियते, लब्धा अष्टादश लक्षाः पञ्चनवतिसहस्राणि चत्वारि शतानि पञ्चसप्तत्यधिकानि १८९५४७५। एष राशिः प्रस्तुतेन दक्षिणभरतार्धेषुणा पञ्चविंशत्यधिकपञ्चचत्वारिंशच्छतप्रमाणेन ४५२५ सहितः क्रियते, जाता एकोनविंशतिलक्षाः १९०००००। एतासां योजनानयनार्थमेकोनविंशत्या भागो ह्रियते, लब्धं योजनानामेकं लक्षं १०००००। एवं वैताढ्यादिजीवावर्गेषुभ्यामपि जम्बूद्वीपविष्कम्भ आनेयः ॥ ३८ ॥

सम्प्रति धनुःपृष्ठानयनाय करणमाह—

उसुवग्गं छग्गुणियं, जीवावग्गम्मि पक्खिवित्ता णं।
जं तस्स वग्गमूलं, तं धणुपट्ठं वियाणाहि ॥ ३९ ॥

व्याख्या—इषुर्दक्षिणभरतार्धादीनां प्रागुक्तस्वरूपस्तस्य वर्गः (इषुवर्गः तं) इषुवर्गं षड्गुणितं षड्भिस्ताडितं जीवावर्गे प्रक्षिप्य संयोज्य तस्य राशेर्यद्वर्गमूलं लभ्यते तत् विवक्षितस्य दक्षिणभरतार्धादेर्धनुःपृष्ठं विजानीहि। उक्तं चान्यत्रापि—"इषुवर्गस्य षड्गुणस्य जीवावर्गयुतस्य मूलं धनुःपृष्ठं" इति। एतच्च करणं यत्राग्रे प्रतिवर्षं प्रतिवर्षधरं वा धनुःपृष्ठपरिमाणं निर्देक्ष्यति तत्र भावयिष्यामः ॥ ३९ ॥

साम्प्रतमिषोरानयनाय करणमाह—

धणुवग्गाउ नियमा, जीवावग्गं विसोहियत्ता णं।
सेसस्स य छब्भाए, जं मूलं तं उसू होइ ॥ ४० ॥

व्याख्या—नियमादवश्यंतया धनुःपृष्ठवर्गात् जीवावर्गं विशोध्य अपनीय शेषस्य षड्भागे षड्भिर्भागे हृते यन्मूलमागच्छति तत् इषुर्भवति इषुपरिमाणं भवति। तथाहि—दक्षिणभरतार्धस्य धनुःपृष्ठं नव सहस्राणि सप्त शतानि षट्षष्ट्यधिकानि योजनानां कला चैका ९७६६ क० १। तत्र योजनराशिः कलाकरणार्थमेकोनविंशत्या गुण्यते, कला चैकोपरितनी प्रक्षिप्यते, जातमेकं लक्षं पञ्चाशीतिसहस्राणि पञ्च

शतानि पञ्चपञ्चाशदधिकानि १०५५५५। ततोऽस्य राशेर्वर्गो विधीयते, जातः त्रिकः चतुष्कः चतुष्कः त्रिकः शून्यं षट्कः पञ्चकः अष्टकः शून्यं द्विकः पञ्चकः ३४४३०६५८०२५। यदा च धनुःपृष्ठानयनाय वर्गमूलमानीयते तदा य उपरितनो राशिः कलारूपः शेषीभूतो वर्तते द्वे लक्षे त्रिनवतिसहस्राणि द्वे शते पञ्चविंशत्यधिके २९३२२५ स पूर्वराशौ प्रक्षिप्यते, ततो जातो राशिरयं त्रिकः चतुष्कः चतुष्कः त्रिकः शून्यं नवकः पञ्चकः एककः द्विकः पञ्चकः शून्यं ३४४३०९५१२५० एष दक्षिणभरतार्धस्य धनुःपृष्ठवर्गः, अस्माद्धनुःपृष्ठवर्गाज्जीवावर्गः त्रिकः चतुष्कः त्रिकः शून्यं अष्टकः शून्यं नवकः सप्तकः पञ्चकः शून्यं शून्यं ३४३०८०९७५०० इत्येवंरूपः प्रागुक्तस्वरूपः शोध्यते, शोधिते च सति तस्मिन् जातः शेषो राशिरेवंरूपः—एककः द्विकः द्विकः अष्टकः पञ्चकः त्रिकः सप्तकः पञ्चकः शून्यं १२२८५३७५०, अस्य षड्भिर्भागो ह्रियते लब्धो द्विकः शून्यं चतुष्कः सप्तकः पञ्चकः षट्कः द्विकः पञ्चकः २०४७५६२५। ततोऽस्य राशेर्वर्गमूलानयने लब्धानि कलानां पञ्चविंशत्यधिकानि पञ्चचत्वारिंशच्छतानि ४५२५।

ततो वैताढ्यस्य धनुःपृष्ठवर्गः चतुष्कः एककः षट्कः षट्कः नवकः नवकः पञ्चकः एककः द्विकः पञ्चकः शून्यं ४१६६९९५१२५०, एष चाग्रे भावयिष्यते। वैताढ्यस्य जीवावर्गः चतुष्कः एककः चतुष्कः नवकः शून्यं शून्यं नवकः सप्तकः पञ्चकः शून्यं शून्यं ४१४९००९७५००, एषोऽपि वैताढ्यसत्को जीवावर्गः पुरस्ताज्जीवानयने भावयिष्यते। अमुं च जीवावर्गमनन्तरोक्ताद्धनुःपृष्ठवर्गाच्छोधयेत्, शोधिते च सति तस्मिन् जातः शेषो राशिः एककः सप्तकः नवकः अष्टकः पञ्चकः त्रिकः सप्तकः पञ्चकः शून्यं

१७९८५२७५०, अस्य षड्भिर्भागे हृते लब्धो द्विकः नवकः नवकः सप्तकः पञ्चकः षट्कः द्विकः पञ्चकः २९९७५६२५ । अस्य वर्गमूलानयने लब्धानि कलानां चतुःपञ्चाशच्छतानि पञ्चसप्तत्यधिकानि ५४७५ एतावान् वैताढ्यपर्वतस्येषुः । एवं भरतादीनामपीषव आनेतव्याः ॥ ४० ॥

साम्प्रतमिषोरानयनाय करणान्तरमाह—

जीवाविक्खंभाणं, वग्गविसेसस्स वग्गमूलं जं ।

विक्खंभाओ सुद्धं, तस्सद्धमिसुं वियाणाहि ॥ ४१ ॥

व्याख्या—जीवाविष्कम्भयोर्दक्षिणभरतार्धादिजीवाजम्बूद्वीपविष्कम्भयोर्यौ वर्गौ तयोः परस्परं विश्लेषः, किमुक्तं भवति? जम्बूद्वीपविष्कम्भवर्गाद्विवक्षितदक्षिणभरतार्धादिजीवावर्गो विशोध्यते, विशोधिते च सति तस्मिन् यदवशिष्यते, तस्य यद्वर्गमूलं तज्जम्बूद्वीपविष्कम्भात् शुद्धं तस्यार्धं दलमिषुं विजानीहि । उक्तं चान्यत्र—"ज्याविष्कम्भयोर्वर्गविश्लेषमूलं विष्कम्भाच्छोध्यं शेषार्धमिषुः" इति ॥४१॥

एतदेव करणं व्याचिख्यासुराह—

गुणवीसलक्खतग्गुण, जीवावग्गं विसोहिऊणित्तो ।

मूलं लक्खेगुणवीससुद्धदलमेव उसुकरणं ॥ ४२ ॥

व्याख्या—इह जम्बूद्वीपविष्कम्भो योजनलक्षं, स कलाकरणार्थमेकोनविंशत्या गुण्यते, जातान्येको-

नविंशतिलक्षाणि, एतावान् कलारूपो जम्बूद्वीपविष्कम्भः, एष वर्गकरणाय तद्गुणः क्रियते एकोनविंशतिलक्षगुणः क्रियते. तत 'एत्तो' इति अस्मादेवंरूपाज्जम्बूद्वीपविष्कम्भवर्गाद्विवक्षितदक्षिणभरतार्धादिजीवावर्गं विशोध्य शेषस्य यन्मूलं तज्जम्बूद्वीपविष्कम्भादेकोनविंशतिलक्षरूपाच्छोध्यते, शोधिते च सति तस्मिन् यदवशिष्यते तस्यार्धं विवक्षितस्य क्षेत्रस्येषुरिति सर्वस्य वृत्तक्षेत्रान्तर्गतस्य क्षेत्रस्येदमिषुकरणं, इदं दक्षिणभरतार्धस्येष्वानयने भाव्यते—दक्षिणभरतार्धजीवावर्गः त्रिकः चतुष्कः त्रिकः शून्यं अष्टकः शून्यं नवकः सप्तकः पञ्चकः शून्यं शून्यं ३४३०८०९७५०० । जम्बूद्वीपविष्कम्भवर्गः कलारूपः त्रिकः षट्क एककः शून्यानि दश ३६१००००००००००, अस्माज्जम्बूद्वीपविष्कम्भवर्गादनन्तरोक्तो जीवावर्गो विशोध्यते, विशोधिते च सति तस्मिन् जातं शेषमिदं—त्रिकः पञ्चकः सप्तकः पञ्चकः षट्कः नवकः एककः नवकः शून्यं द्विकः पञ्चकः शून्यं शून्यं ३५७५६९१९०२५०० । अस्य वर्गमूलानयने लब्धा अष्टादश लक्षा नवतिसहस्राणि नव शतानि पञ्चाशदधिकानि १८९०९५०, एतज्जम्बूद्वीपविष्कम्भादेकोनविंशतिलक्षरूपाच्छोध्यते, जातं शेषमिदं—नव सहस्राणि पञ्चाशदधिकानि ९०५०, एषामर्धे लब्धानि कलानां पञ्चचत्वारिंशच्छतानि पञ्चविंशत्यधिकानि ४५२५ । एवं वैताढ्यादीनामपीषव आनेतव्याः ॥ ४२ ॥

सम्प्रति दक्षिणभरतार्धधनुःपृष्ठमाह—

नव चेव सहस्साइं, छावट्ठाइं सयाइं सत्तेव ।
सविसेसकला चेगा, दाहिणभरहद्धधणुपट्ठं ॥ ४३ ॥

व्याख्या—दक्षिणभरतार्धधनुःपृष्ठं धनुःपृष्ठपरिमाणं नव सहस्राणि सप्त शतानि षट्षष्टानि षट्षष्टाधिकानि, कला चैकोनविंशतिभागरूपा एका सविशेषा ९७६६ क० १ किञ्चिद्विशेषाधिका, तथाहि—धनुःपृष्ठस्य करणमिदं—इषुवर्गं षड्गुणं जीवावर्गे प्रक्षिप्य यत्तस्य वर्गमूलं तद्धनुःपृष्ठमिति । तत्र दक्षिणभरतार्धस्येषुः कलारूपः पञ्चचत्वारिंशच्छतानि पञ्चविंशत्यधिकानि ४५२५, अस्य वर्गो द्विकः शून्यं चतुष्कः सप्तकः पञ्चकः षट्कः द्विकः पञ्चकः २०४७५६२५ । एष षड्भिर्गुण्यते, जात एककः द्विकः द्विकः अष्टकः पञ्चकः त्रिकः सप्तकः पञ्चकः शून्यं १२२८५३७५०, एष राशिर्दक्षिणभरतार्धस्य सत्के जीवावर्गे त्रिकश्चतुष्कस्त्रिकः शून्यमष्टकः शून्यं नवकः सप्तकः पञ्चकः शून्यं शून्यं ३४३०८०९७५०० इत्येवंरूपे प्रक्षिप्यते, ततो जातो राशिः त्रिकः चतुष्कः चतुष्कः त्रिकः शून्यं नवकः पञ्चकः एककः द्विकः पञ्चकः शून्यं ३४४३०९५१२५० । अस्य वर्गमूले लब्धं ( ब्धः ) एककः अष्टकः चत्वारः पञ्चकाः १८५५५५ । शेषस्तूपरितनो राशिर्द्विकः नवकः त्रिकः द्विकः द्विकः पञ्चकः २९३२२५, छेदराशिः त्रिकः सप्तकः त्रय एककाः शून्यं ३७१११० । वर्गमूललब्धस्य तु राशेर्योजनकरणार्थमेकोनविंशत्या भागो ह्रियते, लब्धानि योजनानां नव सहस्राणि सप्त शतानि षट्पष्ट्यधिकानि कला चैका ९७६६ क० १ ॥ ४३ ॥

अधुना वैताढ्यजीवामाह—

दस चेव सहस्साइं, जीवा सत्त सयाइं वीसाइं ।
बारस य कला ऊणा, वेयड्ढगिरिस्स विन्नेया ॥ ४४ ॥

व्याख्या—दश सहस्राणि सप्त शतानि विंशानि विंशत्यधिकानि योजनानां द्वादश च कलाः १०७२० क० १२ किञ्चिदूनाः, एतावत्प्रमाणा वैताढ्यगिरेर्जीवा ज्ञेया । तथाहि—जम्बूद्वीपविष्कम्भः कलारूप एकोनविंशतिलक्षप्रमाणोऽवगाहेन वैताढ्यस्य संबन्धिना इषुणा पञ्चसप्तत्यधिकचतुःपञ्चाशच्छत-रूपेण ५४७५ ऊनः क्रियते, जातः शेषो राशिरयं—अष्टादश लक्षाश्चतुर्नवतिसहस्राणि पञ्च शतानि पञ्चविंशत्यधिकानि १८९४५२५ । एषोऽवगाहेन यथोक्तपरिमाणेन ५४७५ गुण्यते, जात एककः शून्यं त्रिकः सप्तकः द्विकः पञ्चकः द्विकः चतुष्कः त्रिकः सप्तकः पञ्चकः १०३७२५२४३७५ । एष भूय-श्चतुर्भिर्गुण्यते, जातः चतुष्कः एककः चतुष्कः नवकः शून्यं शून्यं नवकः सप्तकः पञ्चकः द्वे शून्ये ४१४९००९७५०० । अस्य राशेर्वर्गमूलानयने लब्धे द्वे लक्षे त्रीणि सहस्राणि षट् शतानि एकनवत्यधि-कानि २०३६९१ । शेषस्तु राशिरुद्धरति चतुःसप्ततिसहस्राणि एकोनविंशत्यधिकानि ७४०१९ । छेदरा-शिश्चतस्रो लक्षाः सप्त सहस्राणि त्रीणि शतानि द्व्यशीत्यधिकानि ४०७३८२, वर्गमूललब्धस्य तु कला-राशेर्योजनकरणार्थमेकोनविंशत्या भागो ह्रियते, लब्धानि योजनानां दश सहस्राणि सप्त शतानि विंश-त्यधिकानि कलाश्चैकादश १०७२० क० ११ । उद्धरितशेषराश्यपेक्षया तु किञ्चिदूनैका कला विवक्षितेति 'बारस य कला ऊणा' इत्युक्तम् ॥ ४४ ॥

साम्प्रतमस्यैव वैताढ्यपर्वतस्य धनुःपृष्ठमाह—

**दस चेव सहस्साइं, सत्तेव सया हवंति तेयाला ।**
**धणुपठं वेयड्ढे, कला य पन्नरस हवंति ॥ ४५ ॥**

व्याख्या—दश सहस्राणि सप्त शतानि त्रिचत्वारिंशानि त्रिचत्वारिंशदधिकानि योजनानां कलाश्च पञ्चदश भवन्ति १०७४३ क० १५ वैताढ्यस्य धनुःपृष्ठं । तथाहि—वैताढ्यस्येषुः कलानां चतुःपञ्चाशच्छतानि पञ्चसप्तत्यधिकानि ५४७५, अस्य वर्गो विधीयते जातो द्विकः नवकः नवकः सप्तकः पञ्चकः षट्कः द्विकः पञ्चकः २९९७५६२५ । भूय एष राशिः षड्भिर्गुण्यते, जात एककः सप्तकः नवकः अष्टकः पञ्चकः त्रिकः सप्तकः पञ्चकः शून्य १७९८५३७५० । एष राशिर्वैताढ्यसत्के जीवावर्गे चतुष्कः एककः चतुष्कः नवकः शून्यं शून्यं नवकः सप्तकः पञ्चकः शून्यं शून्यं ४१४९००९७५०० इत्येवंरूपे प्रक्षिप्यते, ततो जातमिदं—चतुष्कः एककः षट्कः षट्कः नवकः नवकः पञ्चकः एककः द्विकः पञ्चकः शून्यं ४१६६९९५१२५० । अस्य वर्गमूलानयने लब्धं द्वे लक्षे चत्वारि सहस्राणि शतमेकं द्वात्रिंशदधिकं कलानां २०४१३२ । शेषस्तूपरितनो राशिस्तिष्ठति सप्तसप्ततिसहस्राणि अष्टौ शतानि षड्विंशत्यधिकानि ७७८२६, छेदराशिश्चतस्रो लक्षा अष्टौ सहस्राणि द्वे शते चतुःषष्ट्यधिके ४०८२६४ । वर्गमूललब्धस्तु राशिर्योजनकरणार्थमेकोनविंशत्या भज्यते, लब्धानि योजनानां दश सहस्राणि सप्त शतानि त्रिचत्वारिंशदधिकानि कलाः पञ्चदश १०७४३ क० १५ ॥ ४५ ॥

सम्प्रति वैताढ्यबाहा वक्तव्या, तत्र सामान्यतो बाहानयनाय करणमाह—

महया धणुपट्ठाओ, लहुयागं सोहियाहि धणुपट्ठं ।
जं तत्थ हवइ सेसं, तस्सद्धं निद्दिसे बाहं ॥ ४६ ॥

व्याख्या—महतो धनुःपृष्ठात् लघुकं लघु धनुःपृष्ठं शोधय स्फेटय, तस्मिन् स्फेटिते सति यदवतिष्ठते शेषं तस्यार्धे बाहां निर्दिशेत् अर्धं बाहात्वेन प्रतिपादयेत् । एतच्च करणमग्रे बाहापरिमाणनिर्देशे भावयिष्यते ॥ ४६ ॥

सम्प्रति मतान्तरेण बाहायामेव करणान्तरमाह—

जीवाण विसेसदलं, वग्गियमोलंबवग्गसंजुत्तं ।
जं तस्स वग्गमूलं, सा बाहा होइ नायव्वा ॥ ४७ ॥

व्याख्या—जीवयोर्लघुवृहत्योर्विश्लेषः, किमुक्तं भवति ? बृहत्या जीवायाः सकाशात् लघुजीवाया-स्त्वपनयनं, तस्मिन् कृते सति यदवशिष्यते तस्य दलं—अर्धं क्रियते, तस्य चार्धस्य वर्गः, वर्गितं च तद्दलं, अवलम्बको नाम विवक्षितक्षेत्रविस्तारस्तस्य वर्गस्तेन संयुक्तं क्रियते, तस्य चैवं कृतस्य यद्वर्गमूलं सा बाहा भवतीति ज्ञातव्या ॥ ४७ ॥

तदेवमुक्तं बाहायाः करणं, सम्प्रति वैताढ्यबाहामानमाह—

सोलस चेव कलाओ, अहियाओ हुंति अद्धभागेणं ।
बाहा वेयड्ढस्स उ, अट्ठासीया सया चउरो ॥ ४८ ॥

व्याख्या—वैताढ्यस्य पर्वतस्य बाहा योजनानां चत्वारि शतानि अष्टाशीत्यधिकानि कलाश्च षोडश ४८८ क० १६ अर्धभागेन कलाया अर्धेनाधिका भवति। तथाहि—वैताढ्यस्य यद्धनुःपृष्ठं तन्महद्धनुःपृष्ठं, यत्पुनर्दक्षिणभरतार्द्धस्य तल्लघु, तत्र वैताढ्यस्य धनुःपृष्ठं दश सहस्राणि सप्त शतानि त्रिचत्वारिंशदधिकानि योजनानां कलाः पञ्चदश १०७४३ क० १५, एवंप्रमाणाद्वैताढ्यधनुःपृष्ठाद्दक्षिणभरतार्धधनुःपृष्ठं नव सहस्राणि सप्त शतानि षट्षष्ठ्यधिकानि योजनानां कला चैका ९७६६ क० १ इत्येवंपरिमाणं शोध्यते, शोधिते च सति तस्मिन् जातं शेषमिदं—नव शतानि सप्तसप्तत्यधिकानि योजनानां कलाश्चतुर्दश ९७७ क० १४। एतेषामर्धे लब्धं चत्वारि योजनानां शतानि अष्टाशीत्यधिकानि कलाः षोडश एकं च कलाया अर्धं ४८८ क०१६ अर्धं। एतावत्परिमाणा वैताढ्यस्य पूर्वस्यामपरस्यां च दिशि प्रत्येकं वक्रीभूता बाहुः। द्वितीयं तु मतान्तरप्रयुक्तं करणं गणितबहुलं व्यभिचारि चेति तदुपेक्ष्य सर्वत्र प्रथममेव करणमनुसर्तव्यम् ॥ ४८ ॥

साम्प्रतमुत्तरभरतार्धजीवामाह—

चउद्दस य सहस्साइं, सयाइ चत्तारि एगसयराइं ।

भरहुत्तरऊजीवा, छच्च कला ऊणिया किंचि ॥ ४९ ॥

व्याख्या—चतुर्दश सहस्राणि चत्वारि शतानि एकसप्ततानि एकसप्तत्यधिकानि षट् च कलाः १४४७१ क० ६ किञ्चिदूना इत्येतावत्परिमाणा उत्तरभरतार्धजीवा । तथाहि—उत्तरभरतार्धस्येषुपरिमाणं कलारूपं दश सहस्राणि, तेन जम्बूद्वीपविष्कम्भः कलारूप एकोनविंशतिलक्षप्रमाण ऊनः क्रियते, जातं शेषमष्टादश लक्षा नवतिसहस्राणि १८९०००० । एतच्च यथोक्तपरिमाणेनेषुणा १०००० गुण्यते, गुणिते च सति जात एककः अष्टकः नवकः शून्यानि चाष्टौ १८९०००००००० । एष राशिर्भूयश्चतुर्भिर्गुण्यते, जातः सप्तकः पञ्चकः षट्कः अष्टौ च शून्यानि ७५६०००००००० । अस्य वर्गमूलानयने लब्धो द्विकः सप्तकः चतुष्कः नवकः पञ्चकः चतुष्कः २७४९५४ । शेषमुद्धरति द्विकः नवकः सप्तकः अष्टकः अष्टकः चतुष्कः २९७८८४, छेदराशिस्तु पञ्चकः चतुष्कः नवकः नवकः शून्यं अष्टौ ५४९९०८ । वर्गमूललब्धस्य तु कलाराशेर्योजनानयनार्थमेकोनविंशत्या भागो ह्रियते, लब्धानि योजनानां चतुर्दश सहस्राणि चत्वारि शतानि एकसप्तत्यधिकानि कलाश्च पञ्च १४४७१ क० ५, उद्धरितशेषकलाराश्यपेक्षया च किञ्चिदूना एककला लभ्यते इति तदपेक्षया 'छच्च कला ऊणिया किंचि' इत्युक्तम् ॥ ४९ ॥

साम्प्रतमुत्तरभरतार्धस्यैव धनुःपृष्ठमाह—

चोद्दस य सहस्साइं, सयाइं पंचेव अठ्ठवीसाइं ।
एक्कारस य कलाओ, धणुपठं उत्तरद्धस्स ॥ ५० ॥

व्याख्या—चतुर्दश सहस्राणि पञ्च शतानि अष्टाविंशानि अष्टाविंशत्यधिकानि योजनानां कलाश्चैकादश, एतावत्परिमाणं उत्तरभरतार्धस्य धनुःपृष्ठं। तथाहि—उत्तरभरतार्धस्येषुः कलारूपः सहस्रदशकरूपो वर्ग्यते, वर्गितश्च सन् जात एककः अष्टौ च शून्यानि १०००००००० । एष भूयः षड्भिर्गुण्यते, जातः षट्कः अष्टौ च शून्यानि ६०००००००० । एष राशिरुत्तरभरतार्धसंबन्धिनि जीवावर्गे सप्तकः पञ्चकः षट्कः अष्टौ शून्यानि ७५६०००००००० इत्येवंरूपे प्रक्षिप्यते, ततो जातो राशिरेवंरूपः—सप्तकः षट्कः द्विकः अष्टौ शून्यानि ७६२०००००००० । अस्य वर्गमूलानयने लब्धो द्विकः सप्तकः षट्कः शून्यं चतुष्कः त्रिकः २७६०४३, शेषस्तु राशिरुद्धरति—द्विकः षट्कः द्विकः एककः पञ्चकः एककः २६२१५१ । छेदराशिः पञ्चकः पञ्चकः द्विकः शून्यं अष्टकः षट्कः ५५२०८६ । वर्गमूललब्धस्तु कलाराशिर्योजनकरणार्थमेकोनविंशत्या भज्यते, लब्धानि योजनानां चतुर्दश सहस्राणि पञ्च शतानि अष्टाविंशत्यधिकानि कलाश्चैकादश १४५२८ क० ११ ॥ ५० ॥

साम्प्रतमस्यैवोत्तरभरतार्धस्य बाहामाह—

भरहद्धुत्तर बाहा, अट्ठारस हुंति जोयणसयाइं।
बाणउइ जोयणाणि य, अद्ध कला सत्त य कला उ ॥ ५१ ॥

व्याख्या—अष्टादश योजनशतानि द्विनवतिर्योजनानि सप्त कला अर्धकला चेत्येवंपरिमाणा उत्तरभरतार्धस्य बाहा। तथाहि—महतो धनुःपृष्ठादुत्तरभरतार्धसत्कात् चतुर्दश सहस्राणि पञ्च शतानि अष्टाविंशत्यधिकानि कलाश्चैकादशेत्येवंपरिमाणात् लघुनि धनुःपृष्ठे वैताढ्यसत्के दश योजनसहस्राणि सप्त शतानि त्रिचत्वारिंशदधिकानि कलाः पञ्चदश १०७४३ क० १५ इत्येवंपरिमाणे शोधिते च सति जातं शेषमिदं—त्रीणि सहस्राणि सप्त शतानि चतुरशीत्यधिकानि योजनानां कलाः पञ्चदश ३७८४ क० १५। एतस्यार्धे लब्धानि योजनानामष्टादश शतानि द्विनवत्यधिकानि कलाः सार्धाः सप्त १८९२ क० ७ अर्धम् ॥ ५१ ॥

अधुना क्षुल्लहिमवतो जीवामाह—

चउवीस सहस्साइं, नव य सया जोयणाण बत्तीसा।
चुल्लहिमवंतजीवा, आयामेणं कलद्धं च ॥ ५२ ॥

व्याख्या—योजनानां चतुर्विंशतिसहस्राणि नव शतानि द्वात्रिंशानि द्वात्रिंशदधिकानि एकं च कलार्धमित्येतावत्परिमाणायामेन पूर्वापरतया दैर्घ्येण क्षुल्लहिमवतो जीवा। तथाहि—जम्बूद्वीपविष्कम्भः कलारूप एकोनविंशतिलक्षप्रमाणोऽवगाहेन क्षुल्लहिमवतः संबन्धिना त्रिंशत्सहस्रपरिमाणेन ३०००० इषुणा हीनः क्रियते, ततो जातं शेषमिदं—अष्टादश लक्षाः सप्ततिसहस्राणि १८७०००० । एतद्यथोक्तपरिमाणेन ३०००० अवगाहेन गुण्यते, जातः पञ्चकः षट्कः एककः अष्टौ शून्यानि ५६१०००००००० । एष राशिर्भूयश्चतुर्भिर्गुण्यते, जातो द्विकः द्विकः चतुष्कः चतुष्कः अष्टौ शून्यानि २२४४०००००००० । अस्य वर्गमूलानयने लब्धः चतुष्कः सप्तकः त्रिकः सप्तकः शून्यं अष्टकः ४७३७०८ । शेषस्तु राशिरुद्धरति सप्तकः त्रिकः शून्यं सप्तकः त्रिकः षट्कः ७३०७३६ । छेदराशिः नवकः चतुष्कः सप्तकः चतुष्कः एककः षट्कः ९४७४१६ । ततः कलार्धानयनार्थमुद्धरितो राशिर्द्विकेन गुण्यते छेदराशिना च भज्यते, ततो लब्धमेकं कलार्धं । वर्गमूललब्धस्य तु कलाराशेर्योजनानयनार्थमेकोनविंशत्या भागो ह्रियते, लब्धानि योजनानां चतुर्विंशतिसहस्राणि नव शतानि द्वात्रिंशदधिकानि २४९३२ एकं च कलार्धम् ॥ ५२ ॥

अधुनाऽस्यैव क्षुल्लहिमवतो धनुःपृष्ठं बाहां चाह—

धणुपठ्ठ कलचउक्कं, पणुवीससहस्स दु सय तीसहिया ।
बाहा सोलद्धकला, तेवन्न सया य पन्नहिया ॥ ५३ ॥

व्याख्या—पञ्चविंशतिसहस्राणि द्वे शते त्रिंशदधिके योजनानां कलाश्चतस्रः २५२३० क० ४ इत्येतावत्परिमाणं क्षुद्रहिमवतो धनुःपृष्ठं । तथाहि—क्षुद्रहिमवतः इषुपरिमाणं त्रिंशत्सहस्राणि कलानां ३००००, अस्य वर्गो विधीयते, जातो नवकः अष्टौ शून्यानि ९००००००००। एष राशिर्भूयः षड्भिर्गुण्यते, जातः पञ्चकः चतुष्कः अष्टौ शून्यानि ५४००००००००। एतत् क्षुद्रहिमवतो जीवावर्गे प्रागुक्तस्वरूपे द्विकः द्विकः चतुष्कः चतुष्कः अष्टौ शून्यानि २२४४०००००००० इत्येवंपरिमाणे प्रक्षिप्यते। ततो जातो राशिरयं—द्विकः द्विकः नवकः अष्टकः अष्टौ शून्यानि २२९८०००००००० । अस्य वर्गमूलानयने लब्धः चतुष्कः सप्तकः नवकः त्रिकः सप्तकः चतुष्कः ४७९३७४ । शेषं तूद्धरितं पञ्चकः षट्कः अष्टकः एककः द्विकः चतुष्कः ५६८१२४ । छेदराशिः नवकः पञ्चकः अष्टकः सप्तकः चतुष्कः अष्टकः ९५८७४८ । वर्गमूललब्धस्तु कलाराशिर्योजनकरणार्थमेकोनविंशत्या भज्यते, लब्धानि योजनानां पञ्चविंशतिसहस्राणि द्वे शते त्रिंशदधिके चतस्रः कलाः २५२३० क० ४ ॥ तथा त्रिपञ्चाशच्छतानि पञ्चाशदधिकानि योजनानां षोडशार्धकलाः सार्धपञ्चदशकलाः ५३५० क० १५½ इत्येतावत्प्रमाणा पूर्वस्यामपरस्यां च दिशि प्रत्येकं बाहा । तथाहि—महतो धनुःपृष्ठात् क्षुद्रहिमवतः संबन्धिनः पञ्चविंशतिसहस्राणि द्वे शते त्रिंशदधिके योजनानां कलाश्चतस्रः २५२३० क० ४ इत्येवंपरिमाणात् लघु धनुःपृष्ठमुत्तरभरतार्धसंबन्धि चतुर्दश सहस्राणि पञ्च शतानि अष्टाविंशत्यधिकानि योजनानां कलाश्चैकादश १४५२८ क० ११ इत्येवंप्रमाणं शोध्यते, शोधिते च सति जातं शेषमिदं दश सहस्राणि सप्त शतानि एकोत्त-

राणि योजनानां कलाश्च द्वादश १०७०१ क० १२ । एतेषामर्धे लब्धानि त्रिपञ्चाशच्छतानि पञ्चाशदधिकानि योजनानां कलाः पञ्चदश एकं कलार्धं ५३५० क० १५ अर्ध १ ॥ ५३ ॥

साम्प्रतं हैमवतवर्षस्य जीवामाह—

सत्तत्तीस सहस्सा, छच्च सया जोयणाण चउसयरा ।
हेमवयवासजीवा, किंचूणा सोलस कला य ॥ ५४ ॥

व्याख्या—सप्तत्रिंशत्सहस्राणि षट् शतानि चतुःसप्ततानि चतुःसप्तत्यधिकानि योजनानां कलाश्च षोडश किञ्चिदूना, एतावती हैमवतवर्षस्य जीवा । तथाहि—हैमवतवर्षस्यावगाह इष्वपरपर्यायः सप्ततिसहस्रप्रमाणं ७०००० । तेन जम्बूद्वीपविष्कम्भः कलारूप एकोनविंशतिलक्षप्रमाण ऊनः क्रियते, जाता अष्टादश लक्षास्त्रिंशत्सहस्राणि १८३०००० । एष राशिर्यथोक्तेनावगाहेन ७०००० गुण्यते, गुणिते च सति जात एककः द्विकः अष्टकः एककः अष्टौ शून्यानि १२८१०००००००० । एष राशिर्भूयश्चतुर्भिर्गुण्यते, जातः पञ्चकः एककः द्विकः चतुष्कः अष्टौ शून्यानि ५१२४०००००००० । अस्य वर्गमूलानयने लब्धः सप्तकः एककः पञ्चकः अष्टकः द्विकः एककः ७१५८२१ । शेषं तूद्धरति द्विकः नवकः पञ्चकः नवकः पञ्चकः नवकः २९५९५९ । छेदराशिः एककः चतुष्कः त्रिकः एककः षट्कः चतुष्कः द्विकः १४३१६४२ । वर्गमूललब्धस्य तु कलाराशेर्योजनकरणार्थमेकोनविंशत्या भागो ह्रियते, लब्धानि योजनानां सप्तत्रिंश-

त्सहस्राणि षट् शतानि चतुःसप्तत्यधिकानि कलाश्च पञ्चदश २७६७४ क० १५, उद्धरितराश्यपेक्षया किञ्चिदूनैका कला लभ्यते इति परिज्ञाप्य 'किंचूणा सोलस कला य' इत्युक्तम् ॥ ५४ ॥

अधुनाऽस्यैव हैमवतवर्षस्य धनुःपृष्ठं बाहां चाह—

**चत्तारि य सत्त सया, अडतीस सहस्स दस कला य ।**
**धणु बाहा सत्तट्ठि सया, पणपन्ना तिन्नि य कलाउ ॥ ५५ ॥**

व्याख्या—अष्टात्रिंशत्सहस्राणि सप्त शतानि चत्वारिंशदधिकानि योजनानां दश च कला इत्येतावत्प्रमाणं हैमवतवर्षस्य धनुःपृष्ठं । तथाहि—हैमवतवर्षस्येषुपरिमाणं सप्ततिसहस्राणि ७०००० । अस्य वर्गे जातः चतुष्कः नवकः शून्यान्यष्टौ ४९०००००००० । एष राशिर्भूयः षड्भिर्गुण्यते, जातः द्विकः नवकः चतुष्कः अष्टौ च शून्यानि २९४०००००००० । एतत् प्रागुक्ते हैमवतवर्षजीवावर्गे पञ्चकः एककः द्विकः चतुष्कः अष्टौ शून्या.नि ५१२४००००००००इत्येवंपरिमाणे प्रक्षिप्यते, जातः पञ्चकः चतुष्क एककः अष्टकः अष्टौ शून्यानि ५४१८०००००००० । अस्य वर्गमूलानयने लब्धः सप्तकः त्रिकः षट्कः शून्यं सप्तकः शून्यं ७३६०७० । शेषमुद्धरितं नवकः पञ्चकः पञ्चकः एककः शून्यं शून्यं ९५५१०० । छेदराशिरेककः चतुष्कः सप्तकः द्विकः एककः चतुष्कः शून्यं १४७२१४० । वर्गमूललब्धः कलाराशिरेकोनविंशत्या योजनकरणाय भज्यते, लब्धानि योजनानामष्टात्रिंशत्सहस्राणि सप्त शतानि चत्वारिंशदधिकानि योज-

नानां कलाः दश ३०७४० क० १० ॥ तथा सप्तषष्टिशतानि पञ्चपञ्चाशानि पञ्चपञ्चाशदधिकानि योज-
नानां कलास्तिस्रः ६७५५ क० ३ हैमवतवर्षस्य बाहा । तथाहि—महतो धनुःपृष्ठात् हैमवतवर्षसत्कात्
अष्टात्रिंशत्सहस्राणि सप्त शतानि चत्वारिंशदधिकानि योजनानां कला दश ३०७४० क०१० इत्येवं-
परिमाणात् महत्कं धनुःपृष्ठं क्षुल्लहिमवतः सत्कन्धि पञ्चविंशतिसहस्राणि द्वे शते त्रिंशदधिके कलाश्चतस्रः
२५२३० क० ४ इत्येवंप्रमाणं शोध्यते, शोधिते च सति तस्मिन् जातं शेषमिदं—एककः त्रिकः पञ्चकः
एककः शून्यं १३५१० कलाश्च षट् ६ । अस्यार्धे लब्धानि योजनानां सप्तषष्टिशतानि पञ्चपञ्चाशदधि-
कानि तिस्रः कलाः ६७५५ क० ३ ॥ ५५ ॥

साम्प्रतं महाहिमवतो जीवामाह—

तेवन्न सहस्साइं, नव य सया जोयणाण इगतीसा ।
जीवा महाहिमवए, अद्ध कला छक्कलाउ य ॥ ५६ ॥

व्याख्या—महाहिमवति पर्वते जीवा त्रिपञ्चाशत्सहस्राणि नव शतानि एकत्रिंशदधिकानि योजनानां
षट् कलाः परिपूर्णाः अर्धकला च । तथाहि—महाहिमवतोऽवगाहो लक्षं पञ्चाशत्सहस्राणि १५०००० ।
अनेन जम्बूद्वीपविष्कम्भः कलारूप एकोनविंशतिलक्षप्रमाण ऊनः क्रियते, ततो जातं शेषं सार्धाः सप्त-
दश लक्षाः १७५०००० । एतावदवगाहेनोकरूपेण १५०००० गुण्यते, जातो द्विकः षट्कः द्विकः पञ्चकः

अष्टौ शून्यानि २६२५०००००००० । एष राशिः पुनश्चतुर्भिर्गुण्यते, जातः एककः शून्यं पञ्चकः शून्यानि दश १०५००००००००००, एष महाहिमवतो जीवावर्गः, अस्य वर्गमूलमानीयते, लब्धः एककः शून्यं द्विकः चतुष्कः षट्कः नवकः पञ्चकः १०२४६९५ । शेषमुद्धरितमेककः पञ्चकः षट्कः नवकः सप्तकः पञ्चकः १५६९७५ । छेदराशिः द्विकः शून्यं चतुष्कः नवकः त्रिकः नवकः शून्यं २०४९३९० । वर्गमूललब्धस्य तु राशेर्योजनकरणार्थमेकोनविंशत्या भागो ह्रियते, लब्धानि योजनानां त्रिपञ्चाशत्सहस्राणि नव शतानि एकत्रिंशदधिकानि कलाः षट् ५३९३१ क० ६ । उद्धरितस्तु कलाराशिरर्धकलानयनाय द्विकेन गुण्यते, ततश्छेदराशिना भज्यते इति लब्धमेकं कलार्धमिति ॥ ५६ ॥

साम्प्रतमस्यैव महाहिमवतो धनुःपृष्ठं बाहां चाह—

सत्तावन्न सहस्सा, धणुपंठ तेणउय दुसय दस य कला ।
बाहा बाणउइ सया, छसत्तरा नव कलऊं च ॥ ५७ ॥

व्याख्या—महाहिमवतो धनुःपृष्ठं सप्तपञ्चाशत्सहस्राणि द्वे शते त्रिनवत्यधिके योजनानां कला दश । तथाहि—महाहिमवत इषुः सार्धलक्षप्रमाणः १५००००, तस्य वर्गो द्विकः द्विकः पञ्चकः शून्यान्यष्टौ २२५०००००००० । एष राशिः षड्भिर्गुण्यते, जात एककः त्रिकः पञ्चकः शून्यानि नव १३५०००००००००, एतत्प्रागभिहिते महाहिमवतो जीवावर्गे एककः शून्यं पञ्चकः शून्यानि दश १०५०००००००००० इत्ये-

वंपरिमाणे प्रक्षिप्यते, जात एककः एककः अष्टकः पञ्चकः शून्यानि नव ११८५०००००००००, अस्य वर्गमूलानयने लब्ध एककः शून्यं अष्टकः अष्टकः पञ्चकः सप्तकः सप्तकः १०८८५७७। शेषमिदं एककः एककः पञ्चकः शून्यं सप्तकः एककः ११५०७१। छेदराशिर्द्विकः एककः सप्तकः सप्तकः एककः पञ्चकः चतुष्कः २१७७१५४। वर्गमूललब्धस्य कलाराशेर्योजनानयनार्थमेकोनविंशत्या भागो ह्रियते, लब्धानि योजनानां सप्तपञ्चाशत्सहस्राणि द्वे शते त्रिनवत्यधिके कला दश ५७२९३ क० १०॥ तथा द्विनवतिशतानि षट्सप्ततानि षट्सप्तत्यधिकानि योजनानां नव कला एकं च कलार्धमित्येतावत्प्रमाणा पूर्वस्यामपरस्यां च दिशि प्रत्येकं महाहिमवतो बाहा। तथाहि—महतो धनुःपृष्ठान्महाहिमवतः सत्कात्सप्तपञ्चाशत्सहस्राणि द्वे शते त्रिनवत्यधिके कला दश ५७२९३ क० १० इत्येवंपरिमाणात् लघु धनुःपृष्ठं हैमवतवर्षसंबन्धि योजनानामष्टात्रिंशत्सहस्राणि सप्त शतानि चत्वारिंशदधिकानि कला दश ३८७४० क० १० एवंसङ्ख्यमपनीयते, अपनीते च सति तस्मिन् जातं शेषमिदं एककः अष्टकः पञ्चकः पञ्चकः त्रिकः १८५५३, अस्यार्धे लब्धानि योजनानां द्विनवतिशतानि षट्सप्तत्यधिकानि नव कला एकं कलार्धं ९२७६ क० ९ अर्धं १ ॥ ५७ ॥

अधुना हरिवर्षस्य जीवामाह—

एगुत्तरा नव सया, तेवत्तरिमेव जोयणसहस्सा।
जीवा सत्तरस कला, अद्धकला चेव हरिवासे ॥ ५८ ॥

व्याख्या—हरिवर्षे हरिवर्षाभिधस्य क्षेत्रस्य जीवा त्रिसप्ततिसहस्राणि नव शतानि एकोत्तराणि योजनानां कलाः सप्तदश अर्धकला च। तथाहि—हरिवर्षस्यावगाहस्त्रीणि लक्षाणि दश सहस्राणि ३१००००, अनेन जम्बूद्वीपविष्कम्भः कलारूप एकोनविंशतिलक्षप्रमाणो हीनः क्रियते, जाताः शेषाः पञ्चदश लक्षा नवतिसहस्राणि १५९०००० एतदुक्तप्रमाणेनावगाहेन ३१०००० गुण्यन्ते, जातः चतुष्कः नवकः द्विकः नवकः अष्टौ शून्यानि ४९२९०००००००० । एष राशिर्भूयश्चतुर्भिर्गुण्यते, जात एककः नवकः सप्तकः एककः षट्कः शून्यानि चाष्टौ १९७१६०००००००० । एष हरिवर्षस्य जीवावर्गः, अस्य वर्गमूलानयने लब्ध एककः चतुष्कः शून्यं चतुष्कः एककः त्रिकः षट्कः १४०४१३६ । शेषं तिष्ठति द्विकः शून्यं नवकः त्रिकः पञ्चकः शून्यं चतुष्कः २०९३५०४ । छेदराशिः द्विकः अष्टकः शून्यं अष्टकः द्विकः सप्तकः द्विकः २८०८२७२ । ततो योजनकरणार्थं वर्गमूललब्धमेकोनविंशत्या भज्यते, लब्धानि योजनानां त्रिसप्ततिसहस्राणि नव शतानि एकोत्तराणि कलाः सप्तदश ७३९०१ क० १७ । उद्धरितस्तु कलाराशिरर्धकलानयनाय द्विकेन गुण्यते, गुणयित्वा च यथोक्तप्रमाणेन छेदराशिना भज्यते लब्धमेकं कलार्धं, शेषस्त्वर्धकलाराशिरेवंरूपस्तिष्ठति एककः त्रिकः सप्तकः अष्टकः सप्तकः त्रिकः षट्कः १३७८७३६ ॥ ५८ ॥

साम्प्रतमस्यैव हरिवर्षस्य वाहां धनुःपृष्ठं चाह—

वाहा तेर सहस्सा, एगठा तिसय छक्कलऽद्धकला ।
धणुपठ कलं चउकं, चुलसीइ सहस्स सोलहिया ॥ ५९ ॥

व्याख्या—हरिवर्षस्य पूर्वस्यामपरस्यां च दिशि प्रत्येकं बाहापरिमाणं त्रयोदश सहस्राणि त्रीणि शतानि एकषष्टानि एकषष्ट्यधिकानि योजनानां षट् कलाः एकं च कलार्धम्। तथाहि—महतो धनुःपृष्ठात् हरिवर्षसत्कात् चतुरशीतिर्योजनानां सहस्राणि षोडशाधिकानि कलाश्चतस्रः ८४०१६ क० ४ इत्येवंपरिमाणात् ऋहरकं धनुःपृष्ठं महाहिमवतः संबन्धि सप्तपञ्चाशत्सहस्राणि द्वे शते त्रिनवत्यधिके कला दश ५७२९३ क० १० इत्येवंपरिमाणं शोध्यते, शोधिते च सति जातं शेषमिदं—षड्विंशतिः सहस्राणि सप्त शतानि द्वाविंशत्यधिकानि योजनानां त्रयोदश कलाः २६७२२ क० १३, एतेषामर्धे लब्धानि योजनानां त्रयोदश सहस्राणि त्रीणि शतानि एकषष्ट्यधिकानि षट् च कलाः सार्धाः १३३६१ कलाः ६ अर्धं १॥ तथा चतुरशीतिर्योजनानां सहस्राणि षोडशाधिकानि चतस्र कलाः ८४०१६ क० ४ इत्येतावत्परिमाणं हरिवर्षस्य धनुःपृष्ठम्। तथाहि—हरिवर्षस्येषुपरिमाणं तिस्रो लक्षा दश सहस्राणि ३१००००, अस्य वर्गो विधीयते, जातो नवकः षट्कः एककः शून्यान्यष्टौ ९६१००००००००, भूय एष राशिः षड्भिर्गुण्यते, आगतः पञ्चकः सप्तकः षट्कः षट्कः अष्टौ शून्यानि ५७६६००००००००। एतत् हरिवर्षक्षेत्रस्य सत्के एककः नवकः सप्तकः एककः षट्कः शून्यान्यष्टौ १९७१६००००००००० इत्येवंरूपे जीवावर्गे प्रक्षिप्यते, ततो जातो राशिरेवंप्रमाणः—द्विकः पञ्चकः चतुष्कः अष्टकः द्विकः शून्यान्यष्टौ २५४८२००००००००। अस्य वर्गमूलानयने लब्ध एककः पञ्चकः नवकः षट्कः त्रिकः शून्यं अष्टौ (ष्टकः) १५९६३०८। शेषमुद्धरति सप्तकः षट्कः नवकः एककः त्रिकः षट्कः ७६९१३६। छेदराशिः त्रिकः एककः नवकः द्विकः षट्कः

एककः षट्कः ३१९२६१६ । वर्गमूललब्धस्तु कलाराशिर्योजनकरणार्थमेकोनविंशत्या भज्यते, लब्धानि योजनानां चतुरशीतिसहस्राणि षोडशाधिकानि चतस्रः कलाः ८४०१६ क० ४ ॥ ५९ ॥

सम्प्रति निषधस्य जीवामाह—

चउणउइ सहस्साइं, छप्पन्नहियं सयं कला दो य ।
जीवा निसहस्सेसा, धणुपट्ठं से इमं होइ ॥ ६० ॥

व्याख्या—निषधस्य निषधवर्षधरस्य जीवा एषा यदुत चतुर्नवतिर्योजनानां सहस्राणि शतमेकं षट्पञ्चाशदधिकं द्वे च कले । तथाहि—निषधस्यावगाहः षड् लक्षाः त्रिंशत्सहस्राणि ६३००००, अनेन जम्बूद्वीपविष्कम्भः कलारूप एकोनविंशतिलक्षप्रमाण ऊनः क्रियते, जातं शेषं द्वादश लक्षाः सप्ततिसहस्राणि १२७००००, एतद्यथोक्तेनावगाहेन गुण्यते, जातः अष्टकः शून्यं शून्यं एककः अष्टौ शून्यानि ८००१०००००००० । एष राशिर्भूयश्चतुर्भिर्गुण्यते, जातः त्रिकः द्विकः शून्यं शून्यं चतुष्कः शून्यान्यष्टौ ३२००४०००००००० । एष निषधस्य जीवावर्गः, अस्य वर्गमूलानयने लब्ध एककः सप्तकः अष्टकः अष्टकः नवकः षट्कः षट्कः १७८८९६६ । शेषमिदं षट्कः पञ्चकः शून्यमष्टकः चतुष्कः चतुष्कः ६५०८४४ । छेदराशिः त्रिकः पञ्चकः सप्तकः सप्तकः नवकः त्रिकः द्विकः ३५७७९३२ । वर्गमूललब्धस्य तु राशेर्योजनकरणार्थमेकोनविंशत्या भागो ह्रियते, लब्धानि योजनानां चतुर्नवतिसहस्राणि शतमेकं षट्पञ्चाशदधिकं द्वे च कले ९४१५६ क० २ । धनुःपृष्ठं धनुःपृष्ठपरिमाणं 'से' तस्य निषधपर्वतस्येदं वक्ष्यमाणं भवति ॥६०॥

तदेवाह—

लक्खं चउवीस सह—स्स ति सय छायाल नव कलाउ य ।

व्याख्या—योजनानां लक्षं चतुर्विंशतिसहस्राणि त्रीणि शतानि षट्चत्वारिंशदधिकानि नव च कला इत्येतावत्परिमाणं निषधस्य धनुःपृष्ठं । तथाहि—निषधस्येषुः कलारूपः षट् लक्षाः त्रिंशत्सहस्राणि ६३००००। अस्य वर्गो विधीयते, जातः त्रिकः नवकः षट्कः नवकः अष्टौ शून्यानि ३९६९०००००००० । एष राशिर्भूयः षड्भिर्गुण्यते, जातः द्विकः त्रिकः अष्टकः एककः चतुष्कः शून्यान्यष्टौ २३८१४००००००००, एतत् प्रागुक्ते त्रिकः द्विकः शून्यं शून्यं चतुष्कः अष्टौ शून्यानि ३२००४०००००००० इत्येवंपरिमाणे जीवावर्गे प्रक्षिप्यते, जातः पञ्चकः पञ्चकः अष्टकः एककः अष्टकः अष्टौ शून्यानि ५५८१८00000000 । अस्य वर्गमूलानयने लब्धः द्विकः त्रिकः षट्कः द्विकः पञ्चकः अष्टकः त्रिकः २३६२५८३ । शेषमुद्धरितं एककः पञ्चकः षट्कः अष्टकः त्रयः एकका: १५६८१११ । छेदराशिश्चतुष्कः सप्तकः द्विकः पञ्चकः एककः षट्कः षट्कः ४७२५१६६ । वर्गमूललब्धं तु योजनकरणार्थमेकोनविंशत्या भज्यते, लब्धं योजनानां लक्षं चतुर्विंशतिसहस्राणि त्रीणि शतानि षट्चत्वारिंशदधिकानि कला नव १२४३४६ क० ९ ॥

सम्प्रति निषधस्य बाहामाह—

बाहा पन्नठ सयं, सहस्स वीसं दुकल अद्धं ॥ ६१ ॥

व्याख्या—निषधस्य पूर्वस्यामपरस्यां च दिशि प्रत्येकं बाहापरिमाणं विंशतिसहस्राणि शतमेकं पञ्चषष्टं पञ्चषष्ट्यधिकं योजनानां द्वे च कले सार्धे २०१६५ क० २$\frac{1}{2}$। तथाहि—महतो धनुःपृष्ठात् निषधसत्कात् लक्षमेकं चतुर्विंशतिसहस्राणि त्रीणि शतानि षट्चत्वारिंशदधिकानि योजनानां नव कलाः १२४३४६ क० ९ इत्येवंपरिमाणात् लघुकं धनुःपृष्ठं हरिवर्षसत्कं चतुरशीतिर्योजनानां सहस्राणि षोडशाधिकानि कलाश्चतस्रः ८४०१६ क० ४ इत्येवंपरिमाणं शोध्यते, शोधिते च सति जातं शेषमिदं—चत्वारिंशत्सहस्राणि त्रीणि शतानि त्रिंशदधिकानि योजनानां कलाः पञ्च ४०३३० क० ५। तेषामर्धे लब्धानि योजनानां विंशतिसहस्राणि शतमेकं पञ्चषष्ट्यधिकं द्वे च कले सार्धे २०१६५ क० २$\frac{1}{2}$ ॥ ६१ ॥

सम्प्रति विदेहानां दक्षिणार्धस्योत्तरार्धस्य च प्रत्येकं बाहाजीवाधनुःपृष्ठानि गाथाद्वयेन प्रतिपादयति—

सत्तट्ठा सत्त सया, तेत्तीस सहस्स सत्त य कलद्धं।
बाहा विदेहवासे, मज्झे जीवा सयसहस्सं ॥ ६२ ॥
उभओ से धणुपट्ठं, लक्खं अडवन्न जोयणसहस्सा।
सयमेगं तेरहियं, सोलस य कला कलद्धं च ॥ ६३ ॥

व्याख्या—विदेहवर्षे विदेहाभिधेये वर्षे उभयत उभयस्मिन् पार्श्वे दक्षिणार्धे उत्तरार्धे चेत्यर्थः, प्रत्येकं पूर्वस्यामपरस्यां च दिशि बाहापरिमाणं त्रयस्त्रिंशत्सहस्राणि सप्त शतानि सप्तषष्ट्यधिकानि योज-

नानां सप्त कला अर्धकला च ( ३३७६७ क० ७$\frac{1}{2}$ ) इदं दक्षिणार्धबाहापरिमाणमुत्तरार्धपरिमाणं चैकत्र संमील्योक्तं द्रष्टव्यं, यावता पुनर्दक्षिणार्धस्योत्तरार्धस्य च प्रत्येकं बाहापरिमाणमेतस्यार्धमवगन्तव्यम् । तथाहि—महतो धनुःपृष्ठात् विदेहानां दक्षिणार्धस्योत्तरार्धस्य च संबन्धिनो लक्षमेकं अष्टापञ्चाशत्सहस्राणि शतमेकं त्रयोदशाधिकं षोडश कलाः सार्धाः १५८११३ क० १६$\frac{1}{2}$ इत्येवंपरिमाणात् लघु धनुःपृष्ठं निषधपर्वतस्य संबन्धि लक्षमेकं चतुर्विंशतिः सहस्राणि त्रीणि शतानि षट्चत्वारिंशदधिकानि नव कलाः १२४३४६ क० ९ इत्येवंपरिमाणं शोध्यते, शोधिते च सति जातं शेषमिदं—त्रयस्त्रिंशत्सहस्राणि सप्त शतानि सप्तषष्ट्यधिकानि कलाः सप्त अर्धं च ३३७६७ क०७$\frac{1}{2}$ । एतेषामर्धे षोडश योजनानां सहस्राणि अष्टौ शतानि त्र्यशीत्यधिकानि त्रयोदश कलाः सपादाः १६८८३ क० १३$\frac{1}{4}$ दक्षिणार्धोत्तरार्धबाहामीलने च गाथोक्तं परिमाणमिति ॥ तथा विदेहवर्षे दक्षिणार्धस्योत्तरार्धस्य ( च ) संबन्धिनी एका मध्यभागे जीवा शतसहस्रं योजनानां शतसहस्रप्रमाणा । तथाहि—दक्षिणार्धस्योत्तरार्धस्य वा विदेहवर्षे इषुः कलारूपो नव लक्षाः पञ्चाशत्सहस्राणि ९५००००, अनेन जम्बूद्वीपविष्कम्भः कलारूप एकोनविंशतिलक्षप्रमाण ऊन· क्रियते, जातं शेषं नव लक्षाः पञ्चाशत्सहस्राणि ९५००००, एतानि यथोक्तपरिमाणेनेषुणा गुण्यन्ते, जातो नवकः शून्यं द्विकः पञ्चकः शून्यान्यष्टौ ९०२५०००००००० । एष राशिर्भूयश्चतुर्भिर्गुण्यते, जातः त्रिकः षट्कः एककः शून्यानि दश ३६१०००००००००० । अस्य वर्गमूलानयने लब्धान्येकोनविंशतिलक्षाणि १९०००००० कलानां, एतेषां योजनकरणार्थमेकोनविंशत्या भागे हृते

लब्धमेकं लक्षं योजनानां १००००० ॥ तथा जम्बूद्वीपतो दक्षिणार्धे उत्तरार्धे च प्रत्येकं धनुःपृष्ठं धनुःपृष्ठपरिमाणं लक्षमेकमष्टापञ्चाशत्सहस्राणि शतमेकं त्रयोदशाधिकं योजनानां षोडश कला एकं च कलार्धं १५८११३ क० १६½ । तथाहि—दक्षिणार्धस्योत्तरार्धस्य वा प्रत्येकमिषुः कलारूपो नव लक्षाः पञ्चाशत्सहस्राणि ९५००००, अस्य वर्गे जातो नवकः शून्यं द्विकः पञ्चकः अष्टौ शून्यानि ९०२५००००००००। एतद्भूयः षड्भिर्गुण्यते, जातः पञ्चकः चतुष्कः एककः पञ्चकः शून्यानि नव ५४१५०००००००००। एष राशिः प्रागुक्ते त्रिकः षट्कः एककः शून्यानि दश ३६१०००००००००० इत्येवंप्रमाणे जीवावर्गे प्रक्षिप्यते, जातो राशिरेवंरूपः—नवकः शून्यं द्विकः पञ्चकः शून्यानि नव ९०२५०००००००००। अस्य वर्गमूलानयने लब्धः त्रिकः शून्यं शून्यं चतुष्कः एककः षट्कः त्रिकः ३००४१६३। शेषमुद्धरति चतुष्कः षट्कः षट्कः नवकः चतुष्कः त्रिकः एककः ४६६९४३१। छेदराशिः षट्कः शून्यं शून्यं अष्टकः त्रिकः द्विकः षट्कः ६००८३२६। तत उपरितनो राशिः कलार्धानयनाय द्विकेन गुण्यते, उक्तरूपेण छेदराशिना भज्यते, ततो लभ्यते एकं कलार्धं, ततो वर्गमूललब्धस्य कलाराशेर्योजनकरणार्थमेकोनविंशत्या भागो ह्रियते, लब्धं योजनानामेकं लक्षमष्टापञ्चाशत्सहस्राणि शतमेकं त्रयोदशाधिकं षोडश कला एकं च कलार्धं १५८११३ क० १६½। ये तु शेषा अर्धकलांशा उद्धरितास्तिष्ठन्ति तदपेक्षया किञ्चिदधिकमपि द्रष्टव्यम्। अथवाऽन्यथेदं धनुःपृष्ठपरिमाणमानीयते— जम्बूद्वीपस्य परिधिस्तिस्रो लक्षाः षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके योजनानां क्रोशत्रयं अष्टाविंशं धनुःशतं त्रयोदशाङ्गुलानि एकमर्धाङ्गुलं ३१६२२७

क्रो० २ ध० १२८ अं० १३½। तत्र योजनराशिरर्धीक्रियते, लब्धमेकं लक्षमष्टपञ्चाशत्सहस्राणि शतमेकं त्रयोदशाधिकं १५८११३, यत्त्वेकं योजनमुद्धरति तत्कलाः क्रियन्ते, लब्धा एकोनविंशतिकलाः, क्रोशत्रये च लब्धाः सपादाश्चतुर्दश कलाः, मिलिता जाताः सपादास्त्रयस्त्रिंशत्, तासामर्धे लब्धाः सार्धाः षोडश कलाः, यस्तु कलाया अष्टमो भागोऽधिक उद्धरति, यानि च धनुषामर्धे लभ्यानि चतुःषष्टिधनूंषि, सार्धत्रयोदशानामर्धे पादोनानि सप्ताङ्गुलानि, तदेतत्सर्वं ये प्रागर्धकलांशा मुक्तास्तिष्ठन्ति ते यदि कलाष्टभागधनुरङ्गुलीकृत्य पूर्वोक्तेन छेदराशिना विभज्यन्ते, तत आगच्छन्ति, परं सूत्रकृता नेदं कृतमिति स्वयमेव परिभावनीयम् ॥ ६२–६३ ॥

सम्प्रति क्षेत्रस्य प्रतरगणितानयनाय मतान्तरेण करणमाह—

खित्तस्स पयरगणिए, जिट्ठकणिट्ठाण तस्स जीवाणं ।
काउं समाससमद्धं, गुणेहिं तस्सेव वासेणं ॥ ६४ ॥

व्याख्या—क्षेत्रस्य पृथ्वीपर्वतसमुद्ररूपस्य यत्प्रतरं पृथुत्वाहततद्दैर्घ्यसङ्ख्यारूपं तस्य गणिते सङ्ख्याने कर्तव्ये तस्य विवक्षितस्य क्षेत्रस्य संबन्धिन्यौ ये ज्येष्ठाकनिष्ठे जीवे, तयोः समासो मीलनं तस्यार्धं तस्यैव विवक्षितस्य क्षेत्रस्य व्यासेन विस्तारेण गुणय, ततो विवक्षितक्षेत्रस्य प्रतरगणितं भवतीति । एतच्च प्रयुक्तं करणमयुक्तं व्यभिचारात्, तथाहि—प्रतरगणितकरणमिदमग्रेतनं वा दक्षिणभरतार्धे न संभवति, तत्र

कनिष्ठजीवायाः कनिष्ठजीवावर्गस्य चाभावात्, ततो वैताढ्यादिषु परिभावनीयं, तत्र वैताढ्यस्य सत्का या जीवा सा ज्येष्ठा, सा च योजनानां दश सहस्राणि सप्त शतानि विंशत्यधिकानि कलाश्चैकादश १०७२० क० ११। या तु दक्षिणभरतार्धजीवा सा कनिष्ठा, सा च नव सहस्राणि सप्त शतानि अष्टाचत्वारिंशदधिकानि योजनानां कलाश्च द्वादश ९७४८ क० १२। अनयोर्मीलने जातानि विंशतिः सहस्राणि चत्वारि शतानि अष्टषष्ट्यधिकानि योजनानां कलाः त्रयोविंशतिः २०४६८ क० २३। एतेषामर्धे लब्धानि योजनानां दश सहस्राणि द्वे शते चतुस्त्रिंशदधिके द्वादश च कलाः किञ्चिदूनाः, ताश्च किल परिपूर्णा अपि विवक्षिताः ततो वैताढ्यस्य सत्केन विस्तारेण पञ्चाशद्योजनसङ्ख्येनानन्तरोक्तराशिर्गुण्यते, जाताः पञ्च लक्षा एकादश सहस्राणि सप्त शतानि ५११७०० । या अपि द्वादश कलास्ता अपि पञ्चाशता गुणिता जातानि कलानि(नां) षट् शतानि, तेषां च योजनकरणार्थमेकोनविंशत्या भागे हृते लब्धानि एकत्रिंशद्योजनानि शेषाश्च कला एकादश, योजनानि च योजनराशौ प्रक्षिप्यन्ते, जातानि पञ्च लक्षाणि एकादश सहस्राणि सप्त शतानि एकत्रिंशदधिकानि एकादश कलाः ५११७३१ क० ११। अथ च वैताढ्यस्य प्रतरगणितं पञ्च लक्षा द्वादश सहस्राणि त्रीणि शतानि सप्तोत्तराणि योजनानां कलाश्च द्वादश ५१२३०७ क० १२। तथा च वक्ष्यति—"सत्तहिया तिन्नि सया" इत्यादि। तस्माद्व्यभिचारीदं प्रतरगणितकरणमित्युपेक्षणीयं, किं तु यदग्रे स्वयमेव वक्ष्यति द्वितीयं करणमाचार्यस्तत्परिग्राह्यमिति ॥ ६४ ॥

सम्प्रति घनगणितं येषु पर्वतेषूपपद्यते तत्र घनगणितविषयं करणमाह—

पयरं उस्सेहगुणं, घणगणियं पव्वयाण जे उ समा ।

व्याख्या—प्रतरं प्रतरपरिमाणमुत्सेधगुणमुत्सेधसङ्ख्यागुणितं पर्वतानां घनगणितं घनसङ्ख्यापरिमाणं भवति । किं सर्वेषामपि ? नेत्याह—'जे उ समा' ये पर्वता उपर्यधश्च विस्तारमधिकृत्य समास्तेषामिदं घनगणितविषयं करणमवसेयं, न शेषाणाम् ॥

सम्प्रति समुद्रानधिकृत्य घनगणितकरणमाह—

पयरं उव्वेहगुणं, लवणविवज्जाण उयहीणं ॥ ६५ ॥

व्याख्या—लवणविवर्जानां लवणोदसमुद्ररहितानां शेषाणामुदधीनां समुद्राणां प्रतरं प्रतरगणितमुद्वेधगुणमुण्डत्वगुणं घनगणितं भवति ॥ ६५ ॥

तदेवमुक्तं पर्वतानां समुद्राणां च घनगणितविषयं करणं, यच्च प्रतरगणितविषयं करणं मतान्तरेणोक्तं, तद्व्यभिचारि, ततः स्वमतेन सम्प्रति प्रतरगणितविषयं करणमाह—

जीवावग्गं जेट्ठमि—यरं च मेलेउ तस्स अद्धस्स ।

मूलं बाहा विक्खं—भगुणिय पयरं हवइ ताहे ॥ ६६ ॥

व्याख्या—यदा वैताढ्यादेर्ज्येष्ठमितरं च कनिष्ठं जीवावर्गमेकत्र मीलयित्वा तस्यार्धस्य वर्गमूलमानीयते,

तदा यद्वर्गमूलमागतं तत् बाहा पूर्वापरायता ऋज्वी दीर्घा बाहा भवति, सा च विष्कम्भगुणिता सती प्रतरं । तत्र सर्वत्र वैताढ्यादौ जीवावर्गानयनाय करणमिदम्—"अवगाहोनो वृत्तविष्कम्भोऽवगाहगुणितो भूयश्चतुर्गुणो जीवावर्ग" इति । उक्तं च प्रागपि—"उंगाहूणं विक्खंभमोय उंगाहसंगुणं कुज्जा चउहिं गुणियस्स त्ति" । एतच्च प्रत्येकं सर्वत्रापि प्रागेव जीवानयने भावितमिति न भूयो भाव्यते ॥६६॥

तत्रानेन करणेन यः प्राग्दक्षिणभरतार्धस्य जीवावर्ग आनीतस्तं सूत्रकृत्साक्षाद्दर्शयति—

तीसहिया चोत्तीसं, कोडिसया लक्ख सीइ भरहद्धे ।
सत्ताणवइ सहस्सा, पंच सया जीववग्गो उ ॥ ६७ ॥

व्याख्या—त्रिंशत्कोट्यधिकानि चतुस्त्रिंशत्कोटिशतानि अशीतिर्लक्षाः सप्तनवतिः सहस्राणि पञ्च शतानि ३४३०८०९७५०० एतावत्परिमाणो भरतार्धे दक्षिणभरतार्धे जीवावर्गः ॥ ६७ ॥

साम्प्रतं वैताढ्ये जीवावर्गमाह—

वेयड्ढजीववग्गो, सत्ताणउई सहस्स पंच सया ।
अउणापन्नं कोडी, इगयालीसं च कोडिसया ॥ ६८ ॥

व्याख्या—एकचत्वारिंशत्कोटिशतानि एकोनपञ्चाशत्कोटयः सप्तनवतिः सहस्राणि पञ्च शतानि ४१४९००९७५०० एष वैताढ्यजीवावर्गः ॥ ६८ ॥

साम्प्रतमुत्तरभरतार्धजीवावर्गमाह—

**भरहद्धजीववग्गो, पणसयरी छच्च अठ सुन्नाइं ।**

व्याख्या—भरतार्धे उत्तरभरतार्धे जीवावर्गोऽङ्कपङ्क्तौ प्रथमतः पञ्चसप्ततिः ततः षट्कः ततोऽष्टौ शून्यानि ७५६००००००००० एतावत्सङ्ख्यापरिमाणः उत्तरभरतार्धे जीवावर्ग इति भावः ॥

क्षुल्लहिमवतो जीवावर्गमाह—

**चूल्ले जीवावग्गो, दु वीस चोयाल सुन्नठ ॥ ६९ ॥**

व्याख्या—क्षुल्ले क्षुल्लहिमवति जीवावर्गो द्वाविंशतिः ततश्चतुश्चत्वारिंशत् अनन्तरमष्टौ शून्यानि २२४४०००००००० ॥ ६९ ॥

अधुना हैमवतमहाहिमवज्जीवावर्गावाह—

**जीवावग्गिगवन्ना, चउवीसं अठ सुन्न हेमवए ।**

**पंचहियं सयमेगं, महहिमवे दस य सुन्नाइं ॥ ७० ॥**

व्याख्या—हैमवते वर्षे जीवावर्गः प्रथमतः एकपञ्चाशत् तदनन्तरं चतुर्विंशतिः ततोऽष्टौ शून्यानि ५१२४०००००००० । तथा महाहिमवति पर्वते जीवावर्गः प्रथमतः शतमेकं पञ्चाधिकं तदनन्तरं शून्यानि दश १०५०००००००००० ॥ ७० ॥

अधुना हरिवर्षक्षेत्रनिषधपर्वतयोर्जीवावर्गावाह—

हरिवास जीववग्गो, उणवीसं सत्त सोल सुन्नठ ।
बत्तीसं दो सुन्ना, चउरो सुन्नठ निसहम्मि ॥ ७१ ॥

व्याख्या—हरिवर्षे हरिवर्षाभिधे क्षेत्रे जीवावर्गः प्रथमतोऽङ्कपङ्क्तावेकोनविंशतिः ततः सप्त तदनन्तरं षोडश ततोऽष्टौ शून्यानि १९७१६०००००००० । तथा निषधे निषधपर्वते जीवावर्गः प्रथमतो द्वात्रिंशत् ततो द्वे शून्ये तदनन्तरं चत्वारः ततोऽष्टौ शून्यानि ३२००४०००००००० ॥ ७१ ॥

सम्प्रति विदेहानां मध्यभागे जीवावर्गमाह—

बत्तीस्सेक्कग दस सुन्न जीववग्गो विदेहमज्झम्मि ।

व्याख्या—विदेहानां मध्ये मध्यभागे जीवावर्गोऽङ्कपङ्क्तौ प्रथमतः षट्त्रिंशत् तत एकः तदनन्तरं दश शून्यानि ३६१०००००००००० ॥

साम्प्रतमेतेषु जीवावर्गेषु बाहापरिमाणानयनाय यत्कर्तव्यं तदाह—

एएसि समासद्धे, मूलं बाहा उ विन्नेया ॥ ७२ ॥

व्याख्या—एतेषामनन्तरोक्तानां जीवावर्गाणां तत्क्षेत्रापेक्षया ज्येष्ठकनिष्ठरूपाणां सतां समास एकत्र

मीलनं कर्तव्यं, मीलने च कृते सत्यर्धे, तस्मिन्नर्धे यद्वर्गमूलमागच्छति सा तस्य विवक्षितस्य क्षेत्रस्य बाहा विज्ञेया ॥ ७२ ॥

तत्रैषा प्रथमतो वैताढ्ये भाव्यते—

वेयड्ढ जम्मभरहद्ध जीवावग्गो डुवेऽवि मेलेउं ।

तस्सद्ध जं मूलं, सो कलरासी इमो होइ ॥ ७३ ॥

व्याख्या—वैताढ्ये याम्ये च दक्षिणे च भरतार्धे प्रत्येकमेकैको यो जीवावर्गः प्रागुक्तस्वरूपस्तौ द्वावपि एकत्र मील्यते, मीलिते च सति जातमिदं—सप्तकः पञ्चकः सप्तकः नवकः अष्टकः एककः नवकः पञ्चकः त्रीणि शून्यानि ७५७९८१९५००० । तत एतस्य राशेरर्धं क्रियते, लब्धः त्रिकः सप्तकः अष्टकः नवकः नवकः शून्यं नवकः सप्तकः पञ्चकः शून्यं शून्यं ३७८९९०९७५०० । अस्य वर्गमूलानयने यल्लब्धं स कलाराशिरयं वक्ष्यमाणरूपो भवति ॥ ७३ ॥

चउणउइ सहस्साइं, लक्खो छावत्तरा सया छच्च ।

व्याख्या—लक्षमेकं चतुर्नवतिसहस्राणि षट् शतानि षट्सप्ततानि षट्सप्तत्यधिकानि कलानामिति शेषः १९४६७६ । शेषाः कलांशा उद्धरन्ति तिस्रो लक्षा द्विपञ्चाशत्सहस्राणि पञ्च शतानि चतुर्विंशत्यधिकानि ३५२५२४ । छेदराशिस्त्रीणि लक्षाणि एकोननवतिसहस्राणि त्रीणि शतानि द्विपञ्चाशदधिकानि

३८९३५२ । तत्रोपरितनराशेश्छेदराशेश्च प्रत्येकं द्वादशकेनापवर्तना क्रियते, तस्यां चापवर्तनायां कृतायां यद्भवति तदाह—

सेस दुवालसवट्टिय, दोनवतिगसत्तसत्तंसा ॥ ३४ ॥
छेदे तिग दुग चउ चउ, छक्का वेयड्ढ बाह लद्धेसा ।
पन्नास जोयणगुणा, पयरं गुणवीसहिय लद्धं ॥ ३५ ॥

व्याख्या—शेषस्योपरितनस्य राशेर्द्विषट्केन द्वादशकेनापवर्तनायां कृतायां द्विकः नवकः त्रिकः सप्तकः सप्तकः २९३७७ एवंसङ्ख्याका अंशा भवन्ति । छेदराशिर्द्वादशकेनापवर्तनिकायां कृतायां जातः त्रिकः द्विकः चतुष्कः चतुष्कः षट्कः ३२४४६, एषा एतत्सङ्ख्याका वैताढ्ये वैताढ्यस्य पर्वतस्य बाहा पूर्वापरायता ऋज्वी श्रेणिर्लब्धा । वैताढ्यस्य च विस्तारः पञ्चाशद्योजनात्मकः, ततः सा बाहा ( १९४६७६ ) पञ्चाशता गुण्यते, जातो नवकः सप्तकः त्रिकः त्रिकः अष्टकः द्वे शून्ये ९७३३८०० । येऽपि कलांशा द्वादशकापवर्तने लब्धा एकोनत्रिंशत्सहस्राणि त्रीणि शतानि सप्तसप्तत्यधिकानि २९३७७, एतेऽपि पञ्चाशता गुण्यते, गुणने च सति जात एककः चतुष्कः षट्कः अष्टकः अष्टकः पञ्चकः शून्यं १४६८८५०, अमीषां त्रिकद्विकचतुष्कचतुष्कषट्करूपेण ३२४४६ प्रागुक्तेन छेदराशिना भागो ह्रियते, भागे हृते च लब्धाः कलाः पञ्चचत्वारिंशत् ४५ । शेषमुद्धरति अष्टौ सहस्राणि सप्त शतानि अशीत्यधिकानि ८७८०, लब्धास्तु कलाः कला-

गाणां प्रक्षिप्यन्ते. ततो जातः कलाराशिः नवकः सप्तकः त्रिकः त्रिकः अष्टकः चतुष्कः पञ्चकः ९७३३८४५ । अस्य योजनकरणार्थमेकोनविंशत्या भागो ह्रियते, लब्धानि योजनानां पञ्च लक्षाणि द्वादश सहस्राणि त्रीणि शतानि सप्तोत्तराणि ५१२३०७ क० १२ । एवमेकोनविंशत्या भागे हृते लब्धं वैताढ्ये प्रथमखण्डे पृथिवीतले प्रतरमेतावत्प्रमाणम् ॥ ७४–७५ ॥

तथा चाह—

सत्तहिया तिन्नि सया, बारस य सहस्स पंच लक्खा य ।
बारस य कला पयरं, वेयड्ढगिरिस्स धरणितले ॥ ७६ ।

व्याख्या—सप्ताधिकानि त्रीणि शतानि द्वादश सहस्राणि पञ्च लक्षा योजनानां द्वादश कलाः ५१२३०७ क० १२ एतावत्प्रमाणं वैताढ्यगिरेर्धरणितले पृथिवीतले प्रतरम् ॥ ७६ ॥

सम्प्रति प्रथमखण्डे एव वैताढ्ये घनगणितमाह—

दसजोयणुस्सए पुण, तेवीस सहस्स लक्ख इगवन्नं ।
जोयणछावत्तरि छ–कला य वेयड्ढघणगणियं ॥ ७७ ॥

व्याख्या—धरणितलादारभ्योर्ध्वं यावद्दश योजनानि एतावति दशयोजनोच्छ्राये प्रथमखण्डे वैताढ्यपर्वते घनगणितं घनसङ्ख्यापरिमाणं एकपञ्चाशल्लक्षास्त्रयोविंशतिः सहस्राणि षट्सप्ततानि षट्सप्तत्यधिकानि

योजनानां षट् च कलाः ( ५११२३०७६ क० ६ ) तथाहि—प्रतरे योजनराशिः पञ्च लक्षा द्वादश सहस्राणि त्रीणि शतानि सप्तोत्तराणि ५११२३०७, एतानि दशभिर्गुण्यन्ते. जातानि एकपञ्चाशल्लक्षाणि त्रयोविंशतिः सहस्राणि सप्तत्यधिकानि ५११२३०७० । याश्च द्वादश कलाः प्रतरे लब्धाः सन्ति, ता अपि दशभिर्गुण्यन्ते, जातं कलानां विंशं शतं १२०, अस्यैकोनविंशत्या भागे हृते लब्धानि योजनानि षट्, तानि योजनराशौ प्रक्षिप्यन्ते, जातानि योजनराशौ एकपञ्चाशल्लक्षाणि त्रयोविंशतिः सहस्राणि षट्सप्तत्यधिकानि, शेषास्तु कलास्तिष्ठन्ति षट् ५११२३०७६ क० ६। ये तु प्रतरानयने कलांशा उद्धरिताः सप्ताशीतिशतानि अशीत्यधिकानि ८७८०, तेऽपि यदि दशभिर्गुण्यन्ते, गुणयित्वा च तेषां पूर्वोक्तेन त्रिकद्विकचतुष्कचतुष्कषट्करूपेण ३२४४६ छेदराशिना भागो ह्रियते, ततोऽधिकमपि किञ्चिल्लभ्यते, परं तन्न विवक्षितमिति ॥ ७७ ॥

सम्प्रति वैताढ्य एव द्वितीये खण्डे प्रतरमानमाह—

**जोयण तीसे वासे, पढमाए मेहलाए पयरमिमं ।**
**लक्ख तिग तिसयरिसया, चुलसी इक्कारस कलाउ ॥ ७८ ॥**

व्याख्या—वैताढ्ये पर्वते प्रथममेखलायां योजनत्रिंशति त्रिंशद्योजनप्रमाणे व्यासे विस्तारे प्रतरं प्रतरपरिमाणमिदं—तिस्रो लक्षाः त्रिसप्ततिशतानि चतुरशीत्यधिकानि योजनानामेकादश च कलाः ३०७३८४

क० ११। तथाहि—यः प्रथमखण्डे बाहागतः कलाराशिरेकं लक्षं चतुर्नवतिः सहस्राणि षट् शतानि षट्सप्तत्यधिकानि १९४६७६ स त्रिंशता गुण्यते, जाता अष्टापञ्चाशल्लक्षाणि चत्वारिंशत्सहस्राणि द्वे शते अशीत्यधिके कलानां ५८४०२८० । ये तु कलांशा उद्धरिता द्विकनवकत्रिकसप्तकसप्तकसङ्ख्याः २९३७७, तेऽपि त्रिंशता गुण्यन्ते, जातोऽष्टकोऽष्टक एककः त्रिकः एककः शून्यं ८८१३१० । तेषां पूर्वोक्तेन त्रिकद्विकचतुष्कचतुष्कषट्करूपेण ३२४४६ छेदराशिना भागे हृते लब्धाः कलाः सप्तविंशतिः ( २७ ), शेषास्तु कलांशा उद्धरितास्तिष्ठन्ति द्विपञ्चाशच्छतानि अष्टषष्ट्यधिकानि ५२६८, लब्धास्तु कलाः कलाराशौ प्रक्षिप्यन्ते, ततो जातः कलाराशिरेवंरूपः—पञ्चकः अष्टकः चतुष्कः शून्यं त्रिकः शून्यं सप्तकः ५८४०३०७ । एतासामेकोनविंशत्या भागे हृते लब्धानि योजनानां तिस्रो लक्षाः त्रिसप्ततिशतानि चतुरशीत्यधिकानि कलाश्चैकादश ( ३०७३८४ क० ११ )। तदपि च द्वितीयं खण्डं दशयोजनोच्छ्रायं, ततो घनगणितानयनायानन्तरोक्तो राशिः समस्तोऽपि दशभिर्गुण्यते, तत्र योजनराशिर्दशभिर्गुणितः सन्नेवंरूपो जातः—त्रिंशल्लक्षास्त्रिसप्ततिः सहस्राणि अष्टौ शतानि चत्वारिंशदधिकानि ३०७३८४० । या अपि कला एकादश ता अपि दशभिर्गुण्यन्ते, जातं दशोत्तरं कलानां शतं ११०, तस्यैकोनविंशत्या भागे हृते लब्धानि योजनानि पञ्च ५ कलाः पञ्चदश १५, तत्र योजनानि योजनराशौ प्रक्षिप्यन्ते, ततो जातानि योजनराशावष्टौ शतानि पञ्चचत्वारिंशदधिकानि त्रिंशल्लक्षाः त्रिसप्ततिसहस्राणि ( ३०७३८४५ ) एतावद्द्वितीयखण्डे घनगणितम् ॥ ७८ ॥

तथा चाह—

अठ सया पणयाला, तीसं लक्खा तिसत्तरि सहस्सा ।
पन्नरस कला य घणो, दसुस्सए होइ बीयम्मि ॥ ७९ ॥

व्याख्या—वैताढ्ये पर्वते द्वितीये खण्डे दशोच्छ्राये दशयोजनोच्छ्राये घनगणितं घनसङ्ख्यापरिमाणं अष्टौ शतानि पञ्चचत्वारिंशानि पञ्चचत्वारिंशदधिकानि त्रिंशल्लक्षाः त्रिसप्ततिः सहस्राणि कलाः पञ्चदश ३०७३०८४५ क० १५ ॥ ७९ ॥

तृतीये खण्डे प्रतरमानमाह—

दसजोयणविक्खंभे, बीयाए मेहलाए पयरमिमं ।
लक्खा चउवीससया, एगट्ठा दस कलाओ य ॥ ८० ॥

व्याख्या—वैताढ्यपर्वते द्वितीयस्यां मेखलायां दशयोजनप्रमाणे विष्कम्भे प्रतरं प्रतरपरिमाणमिदं—एकं लक्षं चतुर्विंशतिः शतानि एकषष्टानि एकषष्ट्यधिकानि योजनानां कलाश्च दश १०२४६१ क० १० । तथाहि—अस्मिन् खण्डे विष्कम्भो दशयोजनप्रमाणः, ततः प्रागभिहितो यो वर्गमूललब्धः कलाराशिरेकं लक्षं चतुर्नवतिसहस्राणि षट् शतानि षट्सप्तत्यधिकानि १९४६७६ स दशभिर्गुण्यते, जाता एकोनविंशतिलक्षाः षट्चत्वारिंशत्सहस्राणि सप्त शतानि षष्ट्यधिकानि १९४६७६० । येऽपि च कलांशा उद्ध-

रिता द्विकः नवकः त्रिकः सप्तकः सप्तकः २९३७७, तेऽपि दशभिर्गुण्यन्ते, जाते द्वे लक्षे त्रिनवतिसहस्राणि सप्त शतानि सप्तत्यधिकानि २९३७७०, तेषां पूर्वोक्तेन त्रिकद्विकचतुष्कचतुष्कषट्करूपेण ३२४४६ छेदराशिना भागो ह्रियते, भागे च हृते लब्धाः कला नव, ताः कलाराशौ प्रक्षिप्यन्ते, जातानि कलाराशौ एकोनविंशतिलक्षाः षट्चत्वारिंशत्सहस्राः सप्त शतानि एकोनसप्तत्यधिकानि १९४६७६९, शेषाश्चांशाः सप्तदश शतानि षट्पञ्चाशदधिकानि १७५६, कलानां चैकोनविंशत्या भागे हृते लब्धं योजनानामेकं लक्षं चतुर्विंशतिः शतानि एकषष्ट्यधिकानि १०२४६१ कलाश्च दश १० ॥ यदा तु तत्रापि तृतीये खण्डे पञ्चयोजनोच्छ्राये घनगणितमानेतुमिष्यते तदा सर्वोऽप्येष राशिः पञ्चकेन गुण्यते, तत्र योजनराशिः पञ्चकेन गुणितः सन् जाताः पञ्च लक्षा द्वादश सहस्राणि त्रीणि शतानि पञ्चोत्तराणि ५१२३०५। कलाश्च पञ्चकेन गुणिता जाताः पञ्चाशत्, तासामेकोनविंशत्या भागे हृते लब्धे द्वे योजने कलाश्च द्वादश, ते च द्वे अपि योजने योजनराशौ प्रक्षिप्यंते, ततो जातानि तत्र त्रीणि शतानि सप्तोत्तराणि ५१२३०७ क० १२, एतावत्तृतीये खण्डे घनगणितम् ॥ ८० ॥

तथा चाह—

सत्तहिया तिन्नि सया, बारस य सहस्स पंच लक्खा य ।
अवरा य बारस कला, पणुस्सए होइ घणगणियं ॥ ८१ ॥

व्याख्या—वैताढ्ये पर्वते तृतीये खण्डे पञ्चोच्छ्राये पञ्चयोजनप्रमाणोच्छ्राये घनगणितं भवति सप्तोत्तराणि त्रीणि शतानि द्वादश सहस्राणि पञ्च लक्षाः अपराश्च कला द्वादश ५१२३०७ क० १२ ॥ ८१ ॥

अधुना वैताढ्ये सर्वघनगणितमाह—

सत्तासीइं लक्खा, उणतीस हिया य बिनवइ सयाइं ।
अउणावीसइ भागा, चोद्दस वेयड्ढघणगणियं ॥ ८२ ॥

व्याख्या—सप्ताशीतिर्लक्षाणि द्विनवतिशतानि एकोनत्रिंशदधिकानि चतुर्दश एकोनविंशतिभागाः ८७०९२२९ क० १४ एतावत् वैताढ्यस्य समस्तस्यापि घनगणितम् । तथाहि—प्रथमे खण्डे दशयोजनोच्छ्राये घनगणितपरिमाणं एकपञ्चाशल्लक्षाः त्रयोविंशतिः सहस्राणि षट्सप्तत्यधिकानि कलाश्च षट् ५१२३०७६ क० ६ । द्वितीये खण्डे दशयोजनोच्छ्राये घनगणितं त्रिंशल्लक्षाणि त्रिसप्ततिः सहस्राणि अष्टौ शतानि पञ्चचत्वारिंशदधिकानि कलाः पञ्चदश ३०७३८४५ क० १५ । तृतीये खण्डे पञ्चयोजनोच्छ्राये घनगणितं पञ्च लक्षा द्वादश सहस्राणि त्रीणि शतानि सप्तोत्तराणि कला द्वादश ५१२३०७ क० १२ । एतेषां त्रयाणामपि राशीनामेकत्र मीलने भवत्यधिकृतगाथोक्तं परिसङ्ख्यानमिति ॥ ८२ ॥

साम्प्रतमुत्तरभरतार्धस्य बाह्यप्रतरे उच्येते—तत्र ज्येष्ठो जीवावर्ग उत्तरभरतार्धसत्कः स एवंरूपः—सप्तकः पञ्चकः षट्कः अष्टौ शून्यानि ७५६००००००००, कनिष्ठो जीवावर्गो वैताढ्यसत्कः, स च चतुष्क

एककः चतुष्कः नवकः शून्यं शून्यं नवकः सप्तकः पञ्चकः शून्यं शून्यं ४१४९००९७५००, अनयोर्द्वयोरपि एकत्र मीलनं क्रियते, जात एककः एककः सप्तकः शून्यं नवकः शून्यद्वयं नवकः सप्तकः पञ्चकः शून्यं शून्यं ११७०९००९७५००, अस्यार्धं पञ्चकः अष्टकः पञ्चकः चतुष्कः पञ्चकः शून्यं चतुष्कः अष्टकः सप्तकः पञ्चकः शून्यं ५८५४५०४८७५० । अस्य वर्गमूलानयने लब्धो द्विकः चतुष्कः एककः नवकः षट्कः शून्यं २४१९६० । शेषास्त्वंशा उद्धरन्ति—चतुष्कः शून्यं सप्तकः एककः पञ्चकः शून्यं ४०७१५० । छेदराशिः चतुष्कः अष्टकः त्रिकः नवकः द्विकः शून्यं ४८३९२० । अत्रोपरितनराशिशून्यस्य छेदराशिगतेन शून्येन सहापवर्तना क्रियते, ततो जात उपरितनो राशिश्चत्वारिंशत्सहस्राणि सप्त शतानि पञ्चदशाधिकानि ४०७१५ । छेदराशिरष्टाचत्वारिंशत्सहस्राणि त्रीणि शतानि द्विनवत्यधिकानि ४८३९२, एषा पूर्वापरायता उत्तरभरतार्धस्य बाहा । तथा चाह—

कललक्खडुगं ईया–लसहस्सा नव सया य सट्ठहिया ।
सुन्नमवणेउ अंसं, चउसुन्नग सत्त एग पण ॥ ८२ ॥
छेउं चउ अट्ठ तिग नव, दुगा य बाहे स उत्तरद्धस्स ।

व्याख्या—कलानां द्वे लक्षे एकचत्वारिंशत्सहस्राणि नव शतानि षष्ट्यधिकानि २४१९६० । ये तु शेषाः कलांशा उद्धरितास्ते शून्यमपनीय छेदराशिगतेन शून्येन सह शून्यमपवर्त्य शेषा इमे द्रष्टव्याः

चतुष्कः शून्यं सप्तकः एककः पञ्चकः ४०७१५ ॥ ७३ ॥ छेदराशिरन्तिमशून्यस्यापवर्तनायां शेषोऽयं—चतुष्कः अष्टकः त्रिकः नवकः द्विकः ४८३९२, एषा एतावत्परिमाणा उत्तरभरतार्धस्य बाहा ॥

सम्प्रति प्रतरगणितार्थमाह—

गुणिया पणवीसेहिं, पणयालसएहिं होइ इमं ॥ ७४ ॥

व्याख्या—एषा बाहाऽनन्तरोक्ता पञ्चविंशैः पञ्चविंशत्यधिकैः पञ्चचत्वारिंशच्छतैरुत्तरभरतार्धव्यासकलारूपैर्गुणिता सती इदं भवति ॥ ७४ ॥

किं तदित्याह—

कोडिसयं नव कोडी, अडणत्तरि सहस्स लक्ख अडयाला ।
छिच्छे पण सत्तग, तिग पण तिग दुग चउ छक्को ॥ ७५ ॥
छेयहियलद्धमुवरिं, पक्खिव एगट्ठतिसयभइए य ।
लद्धूसिय अठ सया, बत्तीस सहस्स तीसं च ॥ ७६ ॥
लक्खा बारस य कला, अहिया एक्कारसेहिं भागेहिं ।
उणवीस छेयकए, उत्तरभरहद्धपयरं तु ॥ ७७ ॥

व्याख्या—प्राक्तनो वर्गमूललब्धः कलाराशिर्ये लब्धे एकचत्वारिंशत्सहस्राणि नव शतानि षष्ट्यधि-

कानि २४१९६० एवंप्रमाणि उत्तरभरतार्धस्य व्यासेन पञ्चविंशत्यधिकपञ्चचत्वारिंशच्छतप्रमाणेन ४५२५ कलारूपेण गुण्यते, गुणिते च सति जातमिदं—एकं कोटिशतं नव कोटयोऽष्टाचत्वारिंशल्लक्षाणि एकोनसप्ततिसहस्राणि १०९४८६९००० । येऽप्यंशा उद्धरिताश्चत्वारिंशत्सहस्राणि सप्त शतानि पञ्चदशोत्तराणि ४०७१५, तेऽपि पञ्चविंशत्यधिकैः पञ्चचत्वारिंशच्छतैर्गुण्यन्ते, ततोऽधस्तन उद्धरितः कलांशा-(श)राशिरेवंरूपो जातः—पञ्चकः सप्तकः त्रिकः पञ्चकः त्रिक द्विकः चतुष्कः अष्टकः एककः, एते चाङ्काः पश्चानुपूर्व्या द्रष्टव्याः, तत एवमङ्कस्थापना—१८४२३५३७५ । एतेषां च कलांशानां प्रागुक्तच्छेदराशिना अष्टचत्वारिंशत्सहस्राणि त्रीणि शतानि द्विनवत्यधिकानि ४८३९२ इत्येवंरूपेण भागो ह्रियते, भागे च हृते लब्धा कलानामष्टात्रिंशच्छतानि सप्तोत्तराणि ३८०७, शेषमुद्धरति सप्ततिशतानि एकत्रिंशदधिकानि ७०३१, लब्धास्तु कलाः कलाराशौ प्रक्षिप्यन्ते, तथा चाह—'छेयहिय'मित्यादि, छेदेन छेदराशिना भागे हृते यल्लब्धं तदुपरिकलाराशौ प्रक्षिप, प्रक्षिप्ते सति तस्मिन् कलाराशिरेवंरूपो जातः—एककः शून्यं नवकः चतुष्कः अष्टकः सप्तकः द्विकः अष्टकः शून्यं सप्तकः १०९४८७२८०७, एतासां कलानामेकषष्ठ्यधिकैस्त्रिभिः शतैर्भागो ह्रियते । अथ कस्मादेवंरूपो भागहारः ? उच्यते—वाहाराशिर्योजनैकोनविंशतिभागरूप एकोनविंशतिभागरूपेणैव विष्कम्भेण गुणितः, तत एकोनविंशतेरकोनविंशत्या गुणने त्रीणि शतानि एकषष्ठ्यधिकानि भवन्ति, तैर्भागे हृते लब्धा योजनानां त्रिंशल्लक्षा द्वात्रिंशत्सहस्राणि अष्टौ शतानि अष्टाशीत्यधिकानि ( ३०३२८८८ ) शेषमुद्धरति द्विशती एकोनचत्वारिंशदधिका २३९ । ततोऽस्य एकोन-

विंशत्या भागो ह्रियते, लब्धा द्वादश, एकादश पश्चात्तिष्ठन्ति, छेदराशेरपि एकषष्ट्यधिकत्रिशताख्यस्यै-कोनविंशत्या भागो ह्रियते लब्धा एकोनविंशतिः, ततो लब्धा एकोनत्रिंशतिर्भागा द्वादश, एकस्य चैकोनविंशतिभागस्य एकोनविंशतिभागा एकादश, एतावत्प्रमाणमुत्तरभरतार्धस्य प्रतरम् ॥ ८५–८६–८७ ॥

साम्प्रतं क्षुल्लहिमवतो बाहाप्रतरघनगणितान्यभिधीयन्ते, तत्र क्षुल्लहिमवति यो जीवावर्गः स ज्येष्ठ इत्युच्यते, स च द्विकः द्विकः चतुष्कः चतुष्कः अष्टौ च शून्यानि २२४४००००००००, यश्चोत्तरभरतार्धजीवावर्गः स कनिष्ठः सप्तकः पञ्चकः षट्कः शून्यान्यष्टौ ७५६००००००००। एतौ च द्वावपि जीवावर्गावेकत्र मील्येते, जातः त्रिकः शून्यान्येकादश ३०००००००००००, अस्यार्धे लब्ध एककः पञ्चकः शून्यानि दश १५०००००००००० । ततोऽस्य वर्गमूलमानीयते, लब्धः कलाराशिः त्रिकः अष्टकः सप्तकः द्विकः नवकः अष्टकः ३८७२९८, शेषास्त्वंशा उद्धरन्ति द्विकः पञ्चकः नवकः एककः नवकः षट्कः २५९१९६, छेदराशिः सप्तकः सप्तकः चतुष्कः पञ्चकः नवकः षट्कः ७७४५९६। उभयत्रापि च चतुष्केणापवर्तना क्रियते, ततो जात उपरितनो राशिः षट्कः चतुष्कः सप्तकः नवक नवकः ६४७९९। छेदराशिः एककः नवकः त्रिकः षट्कः चतुष्कः नवकः १९३६४९ एतावत्प्रमाणा क्षुल्लहिमवति बाहा। तथा चाह—

कलरासि तिन्नि लक्खा, सत्तासीई सहस्स दो य सया।
अडनउया सेसे पुण, चउक्क उवट्टिए अंसा ॥ ८८ ॥

व्याख्या—ज्येष्ठकनिष्ठयोर्जीवावर्गयोरेकत्र मीलितयोरर्धस्य वर्गमूलानयने लब्धः कलाराशिः तिस्रो

लक्षाः सप्ताशीतिः सहस्राणि द्वे शते अष्टानवते अष्टानवत्यधिके २८७२९८, शेषे पुनरुद्धरिते राशौ चतुष्केणापवर्तिते सति येऽंशास्ते इमे ॥ ८८ ॥

छ च्चउ सत्तग नव नव, छेर्ए इग नव तिग य छ चउ नव ।
वाहे स चुल्लहिमवे, पयरं से निययवासगुणं ॥ ८९ ॥

व्याख्या—षट्कः चतुष्कः सप्तकः नवकः नवकः ६४७९९ । छेदराशिरपि चतुष्केणापवर्तितः सन् जात एककः नवकः त्रिकः षट्कः चतुष्कः नवकः १९३६४९ । एषा एतावत्परिमाणा क्षुल्लहिमवति वाहा । एतद्वाहापरिमाणं निजकव्यासगुणं स्वकीयेन विस्तारेण ताडितं सत् 'से' तस्य क्षुल्लहिमवतः प्रतरं प्रतरपरिमाणं भवति । तथाहि—क्षुल्लहिमवतो व्यासः कलाना विंशतिः सहस्राणि, तैर्गुणितः कलाराशिर्जातः सप्त कोटिशतानि चतुःसप्ततिकोटय एकोनषष्टिर्लक्षाः षष्टिः सहस्राणि ७७४५९६०००० । येऽपि कलांशा उद्धरिताः प्राग्निहिताः ६४७९९ तेऽपि विंशतिसहस्रैर्गुण्यन्ते, ततो जातस्तत्रापि एककः द्विकः नवकः पञ्चकः नवकः अष्टकः चत्वारि शून्यानि १२९५९८०००० ॥ ८९ ॥

तथा चाह—

सट्ठि सहस्सा अउण-ट्ठि लक्ख चउसयरि कोडि सत्त सया ।
हेट्ठिल्ले ए(इ)ग दुग नव, पण नव अड सुन्नचऊ ॥ ९० ॥

व्याख्या—षष्टिः सहस्राणि एकोनषष्टिलक्षाः चतुःसप्ततिः कोटयः सप्त कोटिशतानि ७७४५९६०००० एतावान् कलाराशिः, अधस्तने पुनः कलांशराशौ विंशतिसहस्रैर्गुणिते एककः द्विकः नवकः पञ्चकः नवकः अष्टकः चत्वारि शून्यानि १२९५९८०००० । तत एतेषां कलांशानां प्रागुक्तेन एककनवकत्रिकषट्कचतुष्कनवक १९३६४९ रूपेण छेदराशिना भागो ह्रियते, हृते च भागे लब्धानि षट्षष्टिशतानि द्विनवत्यधिकानि ६६९२, शेषास्त्वंशा उद्धरन्ति अशीतिसहस्राणि अष्टौ शतानि द्विनवत्यधिकानि ८००९२, लब्धानि च षट्षष्टिशतानि द्विनवत्यधिकानि कलानां कलाराशौ प्रक्षिप्यन्ते, ततो जातः कलाराशिरेवंरूपः सप्तकः सप्तकः चतुष्कः पञ्चकः नवकः षट्कः षट्कः षट्कः नवकः द्विकः ७७४५९६६६९२ । ततोऽस्य त्रिभिः शतैरेकषष्ट्यधिकैर्योजनानयनाय भागो ह्रियते, भागे च हृते लब्धानि योजनानां द्वे कोटी चतुर्दश लक्षाः षट्पञ्चाशत्सहस्राणि नव शतानि एकसप्तत्यधिकानि २१४५६९७१ । शेषमुद्धरति एकषष्ट्यधिकं शतं १६१ । ततोऽस्य एकोनविंशत्या भागो दीयते, लब्धा अष्टौ, शेषा उद्धरन्ति नव । छेदराशेरपि एकोनविंशत्याऽपवर्तना क्रियते, जाता एकोनविंशतिः, तत आगता एकोनविंशतिभागरूपा अष्टौ कलाः, एकस्य चैकोनविंशतिभागस्यैकोनविंशतिभागा नव । ये तु प्राक् शेषाः कलांशा उद्धरिताः कथिता अशीतिसहस्राणि अष्टौ शतानि द्विनवत्यधिकानि ८००९२ तदपेक्षया एक एकोनविंशतिभागस्य एकोनविंशतितमो भागो लभ्यत इति दश एकस्यैकोनविंशतिभागस्यैकोनविंशतिभागाः कल्प्यन्ते, एतावत्प्रमाणं क्षुल्लहिमवति प्रतरम् ॥ ९० ॥

तथा चाह—

भेयहियलद्धमुवरिं, पक्खिव एगट्ठि तिसय भइए य।
लद्धिगसत्तरि नव सय, उप्पन्न सहस्स चउद्दस य ॥ ९१ ॥
लक्खा दु कोडि अट्ठ य, कला उ दस अउणवीसभागा उ।
चुल्लहिमवंतपयरं,

व्याख्या—कलांशानामुद्धरितानां विंशतिसहस्रैर्गुणितानां भेदराशिना प्रागुक्तेन १९३६४९ भागे हृते यल्लब्धं कलानां षट्षष्टिशतानि द्विनवत्यधिकानि ६६९२ तत् उपरितनकलाराशौ प्रक्षिप, प्रक्षिप्य च तस्य समस्तस्यापि कलाराशेरेकषष्ट्यधिकैस्त्रिभिः शतैर्भागो ह्रियते, हृते च भागे लब्धान्येकसप्ततानि एकसप्तत्यधिकानि नव शतानि षट्पञ्चाशत्सहस्राणि चतुर्दश लक्षा द्वे कोटी योजनानां २१४५६९७१ अष्टौ कलाः ८ एकस्याश्च कलाया दश एकोनविंशतिभागा एतावत्प्रमाणं क्षुल्लहिमवति प्रतरम् ॥

सम्प्रति घनगणितानयनार्थमाह—

घणगणियं उस्सहेण गुणं ॥ ९२ ॥

व्याख्या—तदेव प्रतरपरिमाणं उच्छ्रयेण उच्चैस्त्वेन योजनशतरूपेण गुणितं च सत् घनगणितं भवति। तत्र योजनराशिः प्रतरगतो द्विकः एककः चतुष्कः पञ्चकः षट्कः नवकः सप्तकः एककः २१४५६९७१

शतेन गुण्यते, गुणितश्च सन् जात एवंरूपः—द्वे कोटिशते चतुर्दश कोटयः षट्पञ्चाशल्लक्षाः सप्तनवतिः सहस्राणि शतमेकं २१४५६९७१०० । याश्चाष्टौ कलास्ता अपि शतेन गुण्यन्ते, जातान्यष्टौ शतानि कलानां ८०० । येऽपि च कलाया दश एकोनविंशतिभागास्तेऽपि शतेन गुण्यन्ते, जातं तेषामेकं सहस्रं, तस्यैकोनविंशत्या भागे हृते लब्धाः कला द्विपञ्चाशत् ५२, शेषं तिष्ठति द्वादश, कलाश्च कलाराशौ प्रक्षिप्यन्ते, जातानि तासामष्टौ शतानि द्विपञ्चाशदधिकानि ८५२, तासामेकोनविंशत्या योजनानयनाय भागे हृते लब्धानि योजनानां चतुश्चत्वारिंशत्, शेषास्तु कलास्तिष्ठन्ति षोडश, योजनानि च योजनराशौ प्रक्षिप्यन्ते, ततो जातं योजनराशौ शतं चतुश्चत्वारिंशदधिकं, एतावत्परिमाणं घनगणितम् ॥९२॥

तथाहि—

दो चेव य कोडिसया, चउद्दस कोडीउ लक्ख छप्पन्ना ।
सत्ताणउइ सहस्सा, चोयालसयं च घणगणियं ॥ ९३ ॥
सोलस चेव कलाउ, अहिया एगूणवीसभागेहिं ।
बारसहिं चेव सया, चुल्लहिमवंते वियाणाहि ॥ ९४ ॥

व्याख्या—द्वे कोटिशते चतुर्दश कोटयः षट्पञ्चाशल्लक्षाः सप्तनवतिः सहस्राणि शतमेकं चतुश्चत्वारिंशं चतुश्चत्वारिंशदधिकं योजनानां, षोडश कलाः, ताश्चाधिका एकस्याः कलाया द्वादशभिरेकोनविं-

शतिज्ञागैः सदा २१४५६९७१४४ क० १६ वि० १२ एतावत्परिमाणं क्षुल्लहिमवति घनगणितं विजानीहि ॥ ९३-९४ ॥

सम्प्रति हैमवतवर्षस्य बाहाप्रतरे प्रतिपादयितव्ये । तत्र हैमवतवर्षस्य सरको यो जीवावर्गः स ज्येष्ठः, स च पञ्चकः एककः द्विकः चतुष्कः अष्टौ च शून्यानि ५१२४०००००००० । यस्तु क्षुल्लहिमवतः संबन्धी स कनिष्ठः, स चैवंरूपः—द्विकः द्विकः चतुष्कः चतुष्कः शून्यान्यष्टौ २२४४०००००००० । एतावेकत्र मील्येते । ततो जातमिदं—सप्तकः त्रिकः षट्कः अष्टकः अष्टौ शून्यानि ७३६८०००००००० । अस्यार्धीकरणे जातः त्रिकः षट्कः अष्टकः चतुष्कः शून्यानि चाष्टौ ३६८४०००००००० । अस्य वर्गमूलानयने लब्धानि कलानां षड् लक्षाणि एकोनसप्ततिः शतानि एकोनषष्ट्यधिकानि ६०६९५९ । शेषमुद्धरति सप्तकः सप्तकः द्विकः त्रिकः एककः नवकः ७७२३१९ । छेदराशिः एककः द्विकः एककः त्रिकः नवकः एककः अष्टकः १२१३९१८ एतावती पूर्वापरायता हैमवतवर्षस्य बाहा । तथा चाह—

अउणट्ठा उणसत्तरि, सया उ छ लक्ख चेव य कलाणं ।
सेसे सत्तग सत्तग, दुग तिग इग नव य अंसा उ ॥ ९५ ॥
छेउ इग दुग एक्कग, तिग नव एक्को य अट्ठ बाहेसा ।
हेमवए विन्नेया,

व्याख्या—एकोनषष्टानि एकोनषष्ट्यधिकानि एकोनसप्ततिशतानि षड् लक्षाः कलानां ६०६९५९। शेषे उद्धरिते राशौ अंशाः कलांशाः सप्तकः सप्तकः द्विकः त्रिकः एककः नवकः ७७२३१९। छेदः छेदराशिः पुनरेककः द्विकः एककः त्रिकः नवकः एककः अष्टकः १२१३९१८। एषा बाहा हैमवते विज्ञेया॥

सम्प्रति प्रतरगणितानयनार्थमाह—

पयरं से निययवासगुणं ॥ ९६ ॥

व्याख्या—से तस्य हैमवतवर्षस्य बाहापरिमाणमनन्तरोक्तं निजकव्यासगुणं स्वकीयेन विस्तारेण ताडितं सत् प्रतरं प्रतरपरिमाणं भवति। तत्र हैमवतवर्षस्य विष्कम्भः कलानां चत्वारिंशत्सहस्राणि ४००००, तैर्बाहागतः कलाराशिरनन्तरोक्तः ६०६९५९ गुण्यते, गुणिते च सति जातः द्विकः चतुष्कः द्विकः सप्तकः अष्टकः त्रिकः षट्कः चत्वारि शून्यानि २४२७८३६००००। येऽपि कलांशा उद्धरिताः प्रागभिहिताः सप्तकः सप्तकः द्विकः त्रिकः एककः नवकः ७७२३१९, तेऽपि चत्वारिंशत्सहस्रैर्गुण्यन्ते, ततो जातः त्रिकः शून्यं अष्टकः नवकः द्विकः सप्तकः षट्कः शून्यानि चत्वारि ३०८९२७६००००। अमीषां तु कलांशानां छेदराशिना एककः द्विकः एककः त्रिकः नवकः एककः अष्टकः १२१३९१८ इत्येवंरूपेण भागो ह्रियते, हृते च भागे लब्धानि कलानां पञ्चविंशतिसहस्राणि चत्वारि शतानि अष्टचत्वारिंशदधिकानि २५४४८। शेषमुद्धरति नवकः सप्तकः चतुष्कः सप्तकः त्रिकः षट्कः ९७४७३६, कलाश्च लब्धाः

कलाराशौ प्रक्षिप्यन्ते, ततो जातः कलाराशिरेवंरूपः द्विकः चतुष्कः द्विकः सप्तकः अष्टकः त्रिकः अष्टकः पञ्चकः चतुष्कः चतुष्कः अष्टकः २४२७८३८५४४८ । एतासां च कलानां योजनानयनार्थमेकपष्ठ्यधिकैः त्रिभिः शतैर्भागो ह्रियते, हृते च भागे लब्धा योजनानां षट् कोट्यो द्विसप्ततिर्लक्षाः त्रिपञ्चाशत्सहस्राणि शतमेकं पञ्चचत्वारिंशदधिकं ६७२५३१४५ । शेषमुद्धरति त्र्युत्तरं शतं १०३ । अस्यैकोनविंशत्या भागे हृते लब्धाः पञ्च, शेषास्तिष्ठन्त्यष्टौ । छेदराशेरपि एकषष्ठ्यधिकत्रिशतस्य एकोनविंशत्या भागे लब्धा एकोनविंशतिः । तत आगतमिदं पञ्च एकोनविंशतिभागाः, एकस्य चैकोनविंशतिभागस्य सत्का अष्टौ एकोनविंशतितमा भागाः, एतावत्प्रमाणं हैमवतवर्षस्य प्रतरम् ॥ ९६ ॥

एतदेवाह—

उवरिमरासी दुग चउ, दुग सत्तऽठ तिग छक्क सुन्नचऊ ।
हेठे तिग सुन्नऽठ नव, दुग सत्तग छक्क सुन्नचऊ ॥ ९७ ॥

व्याख्या—उपरितनो बाहागतः कलाराशिश्चत्वारिंशत्सहस्रैर्गुणित एवंरूपो भवति—द्विकः चतुष्कः द्विकः सप्तकः अष्टकः त्रिकः षट्कः चत्वारि शून्यानि २४२७८३६०००० । अधस्तने पुनः कलांशरूपे राशौ चत्वारिंशत्सहस्रैर्गुणिते जातः त्रिकः शून्यं अष्टकः नवकः द्विकः सप्तकः षट्कः चत्वारि शून्यानि ३०८९२७६०००० ॥ ९७ ॥

छेयहियलद्धमुवरिं, पक्खित्त एगट्ठ तिसयज्ञइए य ।
लद्धा छक्कोडीउ, बावत्तरिसयसहस्सा य ॥ ९८ ॥
तेवन्नं च सहस्सा, पणयालसयं च पंच य कला उ ।
हेमवयवासपयरं, अठ्ठ य उणवीसन्नागा य ॥ ९९ ॥

व्याख्या—कलांशानामनन्तरमुक्तानां छेदराशिना एककद्विकैकत्रिकनवकैकाष्टकरूपेण १२१३९१८ न्नागो ह्रियते, न्नागे च हृते यल्लब्धं तदुपरि उपरितने कलाराशौ प्रक्षिप, प्रक्षिप्य चैकपष्ट्यधिकैस्त्रिन्निः शतैः समस्तोऽपि कलाराशिर्न्नज्यते, न्नक्ते च तस्मिन् लब्धा षट् कोटयः द्विसप्ततिः शतसहस्राणि त्रिपञ्चाशत्सहस्राणि पञ्चचत्वारिंशं शतं, पञ्च च कलाः, एकस्याश्च कलायाः सत्का अष्टावेकोनविंशतितमा न्नागाः ६७२५३१४५ क० ५ वि० ८, एतावत्परिमाणं हैमवतवर्षप्रतरम् ॥ ९८–९९ ॥

सम्प्रति महाहिमवतो वाहाप्रतरघनगणितानि वक्तव्यानि, तत्र हिमवतो यो जीवावर्गः स ज्येष्ठ उच्यते, स च एककः शून्यं पञ्चकः शून्यानि दश १०५०००००००००० । यश्च हैमवतवर्षसंवन्धी स कनिष्ठः, स च पञ्चकः एककः द्विकः चतुष्कः शून्यान्यष्टौ ५१२४०००००००० । एतौ द्वावप्येकत्र मील्येते, जात एककः पञ्चकः षट्कः द्विकः चतुष्कः शून्यान्यष्टौ १५६२४०००००००० । अस्यार्धं क्रियते, जातः सप्तकः अष्टकः एककः द्विकः अष्टौ च शून्यानि ७८१२०००००००० । अस्य वर्गमूलानयने

लब्धाः कलानामष्टौ लक्षाः त्र्यशीतिः सहस्राणि अष्टौ शतानि पञ्चपञ्चाशदधिकानि ८८३८५५। शेषमुद्धरति त्रिकः त्रिकः अष्टकः नवकः सप्तकः पञ्चकः ३३८९७५। छेदराशिः एककः सप्तकः षट्कः सप्तकः सप्तकः एककः शून्यं १७६७७१०। उभयत्रापि च पञ्चत्रिंशताऽपवर्तना क्रियते, ततो जात उपरितनांशराशिर्नव सहस्राणि षट् शतानि पञ्चाशीत्यधिकानि ९६८५। छेदराशिः पञ्चाशत्सहस्राणि पञ्च शतानि षडुत्तराणि। एतावती महाहिमवतो बाहा, तथा चाह—

पणपन्ना अठ सया, तेसीइ सहस्स अठ लक्खा य।
कलारासेसो सेसो, पणतीसोवट्टिए अंसा ॥ १०० ॥
नव छ अरु पण छेउ, पंच य सुन्न पण सुन्न छक्को य।
बाहेसा महाहिमवे,

व्याख्या—ज्येष्ठकनिष्ठयोर्जीवावर्गयोरेकत्र मीलितयोरर्धस्य वर्गमूलानयने लब्धानि कलानां पञ्चपञ्चाशानि पञ्चपञ्चाशदधिकानि अष्टौ शतानि त्र्यशीतिसहस्राणि अष्टौ च लक्षाः ८८३८५५। एष एतावान् कलाराशिः। शेषे उद्धरिते पञ्चत्रिंशताऽपवर्तितेऽंशा नवकः षट्कः अष्टकः पञ्चकः ९६८५। छेदराशिः पञ्चत्रिंशताऽपवर्तितः पञ्चकः शून्यं पञ्चकः शून्यं षट्कः ५०५०६। एषा एतावत्परिमाणा महाहिमवति बाहा ॥

प्रतरपरिज्ञानार्थमाह—

पयरं से निययवासगुणं ॥ १०१ ॥

चुलसीइ सइ सहस्सा, सत्तरि कोडी य सत्त य सहस्सा ।

छिन्ना सत्तग सत्तग, चउ अड पंचेव सुन्नाइं ॥ १०२ ॥

व्याख्या—से तस्य महाहिमवतो बाहापरिमाणं निजकव्यासगुणं स्वकीयेन विष्कम्भेण ताडितं प्रतरं प्रतरपरिमाणं भवति । तत्र महाहिमवतो विष्कम्भः कलानामशीतिः सहस्राणि, तैर्बाहागतः कलाराशिः अष्टकः अष्टकः त्रिकः अष्टकः पञ्चकः पञ्चकः ८८३८५५ इत्येवंरूपो गुण्यते, जातानि सप्त कोटिसहस्राणि सप्ततिकोटयः चतुरशीतिः शतसहस्राणि ७०७०८४००००० । येऽप्यधस्तना: कलांशा नव सहस्राणि षट् शतानि पञ्चाशीत्यधिकानि ९६८५ तेऽप्यशीतिसहस्रैर्गुण्यन्ते, ततो जातः सप्तकः सप्तकः चतुष्कः अष्टकः पञ्च शून्यानि ७७४८००००० । ततोऽमीषां कलांशानां पञ्चकः शून्यं पञ्चकः शून्यं षट्कः ( ५०५०६ ) इत्येवंरूपेण छेदराशिना भागो ह्रियते, हृते ( च ) भागे लब्धानि कलानां पञ्चदश सहस्राणि त्रीणि शतानि चत्वारिंशदधिकानि १५३४० । शेषमुद्धरितं त्रिकः सप्तकः नवकः षट्कः शून्यं ३७९६० । लब्धाश्च कलाः कलाराशौ प्रक्षिप्यन्ते, ततो जातः कलाराशिरेवंरूपः सप्तकः शून्यं सप्तकः शून्यं अष्टकः चतुष्कः एककः पञ्चकः त्रिकः चतुष्कः शून्यं ७०७०८४१५३४० । अस्य योजनानयनार्थ-

मेकषष्ठ्यधिकैस्त्रिभिः शतैर्भागे हृते लब्धा योजनानामेकोनविंशतिकोटयोऽष्टपञ्चाशल्लक्षा अष्टषष्टिः सहस्राणि शतमेकं षडशीत्यधिकं १९५८६८१८६। शेषं तिष्ठति चतुर्नवत्यधिकं शतं १९४, तस्यैकोनविंशत्या भागे हृते लब्धा दश, शेषा उद्धरन्ति चत्वारः। छेदराशेरपि एकषष्ठ्यधिकशतत्रयरूपस्यैकोनविंशत्या भागे हृते लब्धा एकोनविंशतिः, ततो लब्धा दश एकोनविंशतिभागा एकस्य चैकोनविंशतिभागस्य सत्काश्चत्वार एकोनविंशतितमा भागाः। ये तु शेषांशा उद्धरिताः प्रागभिहितास्तदपेक्षया पञ्चमोऽप्येकस्यैकोनविंशतिभागस्यैकोनविंशतितमो भागो द्रष्टव्यः। एतावत्परिमाणं महाहिमवतः प्रतरम् ॥ १०१–१०२ ॥

तथा चाह—

छेयहियलद्धमुवरिं, पक्खिव एगट्ठ तिसयभइएय।
गुणवीसं कोडीउ, लद्धा अडवन्न लक्खा य १०३ ॥
अट्ठट्ठि सहस्साणि य, छासी य सयं च दस कलाउ य।
पंच उणवीसभागा, कलाइ पयरं महाहिमवे ॥ १०४ ॥

व्याख्या—कलांशानामशीतिसहस्रैर्गुणितानां छेदराशिना पञ्चाशत्सहस्राणि पञ्च शतानि षडुत्तराणि ५०५०६ इत्येवंरूपेण भागे हृते यल्लब्धं तदुपरि कलाराशौ प्रक्षिप, प्रक्षिप्य चैकषष्ठ्यधिकैस्त्रिभिः शतैः समस्तोऽपि कलाराशिर्विभज्यते, विभक्ते च तस्मिन् लब्धा एकोनविंशतिकोट्योऽष्टापञ्चाशल्लक्षा अष्टषष्टिः

सहस्राणि शतमेकं षडशीतं षडशीत्यधिकं दश कला एकस्याश्च कलायाः पञ्च एकोनविंशतितमा भागाः १९५८६८१८६ क० १० वि० ५, एतावत्परिमाणं महाहिमवति प्रतरम् ॥ १०३–१०४ ॥

सम्प्रति घनगणितमुपदर्श्यते—प्रतरपरिमाणं योजनद्विशतप्रमाणेनोच्चैस्त्वेन गुणितं घनगणितं भवति । तत्र प्रतरगतो योजनराशिरेकोनविंशतिकोट्यादिकः स शतद्वयेन गुण्यते, ततो जातान्येकोनचत्वारिंशत्कोटिशतानि सप्तदश कोटयः षट्त्रिंशल्लक्षाः सप्तत्रिंशत्सहस्राणि द्वे शते ३९१७३६३७२०० । याश्च कला दश ता अपि शतद्विकेन गुण्यन्ते, जाते कलानां द्वे सहस्रे २००० । ये चैकस्याः कलायाः पञ्च एकोनविंशतितमा भागास्तेऽपि शतद्विकेन गुणिता जाताः सहस्रं १०००, तस्यैकोनविंशत्या भागे हृते लब्धाः कला द्विपञ्चाशत्, ( ५२ ) शेषमुद्धरति द्वादश १२ । कलाश्च कलासु मध्ये प्रक्षिप्यन्ते, ततो जाते कलानां द्वे सहस्रे द्विपञ्चाशदधिके २०५२ । तासामेकोनविंशत्या भागे हृते लब्धं योजनानामष्टोत्तरशतं १०८, एतच्च योजनराशौ प्रक्षिप्यते, ततो जातानि तत्र स्थाने त्रीणि शतानि अष्टोत्तराणि ( ३०८ ), एतावत्परिमाणं घनगणितं भवति । तथा चाह—

सत्तत्तीस सहस्सा, बत्तीसं लक्ख तिसय अडहिया ।
कोडी 'गुयाल सया, सत्तरिस य कोडि घणगणियं ॥ १०५ ॥

व्याख्या—सप्तत्रिंशत्सहस्राणि षट्त्रिंशल्लक्षाः त्रीणि शतानि अष्टाधिकानि कोटीनामेकोनचत्वारिंशच्छतानि सप्तदश कोटयः ३९१७३६७३०८ एतावन्महाहिमवति घनगणितम् ॥ १०५ ॥

सम्प्रति हरिवर्षस्य बाहाप्रतरे जणयेते—तत्र हरिवर्षस्य सत्को यो जीवावर्गः स ज्येष्ठ उच्यते, स च एककः नवकः सप्तकः एककः षट्कः शून्यान्यष्टौ १९७१६०००००००० । यस्तु महाहिमवतः संबन्धी स कनिष्ठः, स च एककः शून्यं पञ्चकः शून्यानि दश १०५०००००००००० । अनयोरेकत्र मीलने जातः त्रिकः शून्यं द्विकः एककः षट्कः शून्यान्यष्टौ २०२१६०००००००० । अस्यार्धमेककः पञ्चकः एककः शून्यं अष्टकः अष्टौ च शून्यानि १५१०८०००००००० । अस्य वर्गमूलानयने लब्धः एककः द्विकः द्विकः नवकः एककः चतुष्कः षट्कः १२२९१४६ । शेषमुद्धरति एककः एककः शून्यं षट्कः अष्टकः चतुष्कः ११०६८४ । छेदराशिः द्विकः चतुष्कः पञ्चकः अष्टकः द्विकः नवकः द्विकः २४५८२९२ । उभयत्रापि चतुष्केणापवर्तना क्रियते, ततो जातोऽंशराशिः द्विकः सप्तकः षट्कः सप्तकः एककः २७६७१, छेदराशिः षट्कः एककः चतुष्कः पञ्चकः सप्तकः त्रिकः ६१४५७३ । एषा हरिवर्षस्य बाहा । तथा चाह—

छायालसयं गुणतीस, सहस्सा लक्खा बारस कलाणं ।
चउरो वट्टिय सेसे, दो सत्त छ सत्त एगंसा ॥ १०६ ॥
छेउ छ एक्क चउ पण, सत्तग तिग एस बाह हरिवासे ।

व्याख्या—ज्येष्ठकनिष्ठयोर्जीवावर्गयोरेकत्र मीलितयोरर्धस्य वर्गमूलानयने लब्धं कलानां षट्चत्वारिंशं शतं एकोनत्रिंशत्सहस्राणि द्वादश लक्षाः १२२९१४६। शेषे तु चतुर्भिरपवर्तिते इमे अंशाः द्विकः सप्तकः षट्कः सप्तकः एककः २७६७१। छेदराशिरपि चतुष्केणापवर्तितः सन् जातः षट्कः एककः चतुष्कः पञ्चकः सप्तकः त्रिकः ६१४५७३। एषा एतावत्परिमाणा बाहा हरिवर्षे ॥

सम्प्रति प्रतरगणितानयनार्थमाह—

विक्खंभनिययगुणिया, पयरं गुणिए इमो रासी ॥ १०७ ॥

व्याख्या—एषाऽनन्तरोक्ता बाहा निजकेनात्मीयेन विष्कम्भेण गुणिता सती प्रतरं प्रतरपरिमाणं भवति। तत्र हरिवर्षस्य विष्कम्भः कलानामेकं लक्षं षष्टिः सहस्राणि तैर्गुणिते कलाराशावयं वक्ष्यमाणो राशिर्भवति ॥ १०७ ॥

तमेवाह—

एक्क नव छक्क छक्कग, छक्कग ति ति छक्क सुन्नचत्तारि।
हेठा चउ चउ दोन्नि य, सत्त तिगो छक्क सुन्नचऊ ॥ १०८ ॥

व्याख्या—एककः नवकः षट्कः षट्कः षट्कः त्रिकः त्रिकः षट्कः चत्वारि शून्यानि १९६६६३३६००००। अधस्तादपि यः कलांशरूपो राशिरुद्धरितो द्विकः सप्तकः षट्कः सप्तकः एककः २७६७१, सोऽपि षष्टिस-

ह्रस्वाधिकलक्षगुणितो जातः चतुष्कः चतुष्कः द्विकः सप्तकः त्रिकः षट्कः शून्यानि चत्वारि ४४२७३६००००। एतेषां च कलांशानां पूर्वोक्तेन षट्कः एककः चतुष्कः पञ्चकः सप्तकः त्रिकः ६१४५७३ इत्येवंरूपेण छेदराशिना भागो ह्रियते, हृते च भागे लब्धानि कलानां सप्त सहस्राणि द्वे शते त्र्युत्तरे ७२०३। शेषा अंशा उद्धरन्ति पञ्चकः नवकः शून्यं षट्कः अष्टकः एककः ५९०६८१। लब्धास्तु कलाः कलाराशौ प्रक्षिप्यन्ते, ततो जातः कलाराशिरेवंरूपः एककः नवकः षट्कः षट्कः षट्कः त्रिकः त्रिकः षट्कः सप्तकः द्विकः शून्यंत्रिकः १९६६६३३६७२०३ एतासां योजनानयनाय त्रिभिः शतैरेकषष्ठ्यधिकैर्भागो ह्रियते, हृते च भागे लब्धानि योजनानां चतुःपञ्चाशत्कोटयः सप्तचत्वारिंशल्लक्षाः त्रिसप्ततिः सहस्राणि अष्टौ शतानि सप्तत्यधिकानि ५४४७७३८७०। शेषमुद्धरति त्रयस्त्रिंशं शतं, तस्यैकोनविंशत्या भागे हृते लब्धाः सप्त। छेदराशेरप्येकषष्ठ्यधिकशतत्रयरूपस्यैकोनविंशत्या भागे हृते लब्धा एकोनविंशतिः। तत आगताः सप्त एकोनविंशतिभागाः, एतावत्प्रमाणं हरिवर्षप्रतरम् ॥ १०८ ॥

तथा चाह—

छेयहियलद्धसत्तग, दुगं च सुन्नं चउक्क किंचूणो ।
पक्खिय उवरिं विभए, एगठहिएहिं तिसएहिं ॥ १०९ ॥

चउपन्नं कोडीउ, लक्खा सीयाल तिसयरि सहस्सा ।
अठसय सत्तरि सत्त य, कलाउ पयरं तु हरिवासे ॥ ११० ॥

व्याख्या—षष्टिसहस्राधिकलक्षगुणितानां कलांशानां षट्कः एककः चतुष्कः पञ्चकः सप्तकः त्रिकः इत्येवंरूपेण ६१४५७३ छेदराशिना भागे हृते लब्धः सप्तकः द्विकः शून्यं चतुष्कः किञ्चिदूनः, इह मुख्यवृत्त्या त्रिक एव लभ्यते, परं ये कलांशा उद्धरितास्तदपेक्षया किञ्चिदूनश्चतुष्क उक्तः ७२०३, एतावत्यो लब्धाः कला उपरितने कलाराशौ प्रक्षिप, प्रक्षिप्य च त्रिभिः शतैरेकपष्ठ्यधिकैः समस्तं कलाराशिं विभजेत्, विभक्ते च सति तस्मिन् लब्धाः चतुःपञ्चाशत्कोटयः सप्तचत्वारिंशल्लक्षाः त्रिसप्ततिः सहस्राणि अष्टौ शतानि सप्ततानि सप्तत्यधिकानि सप्त च कलाः ५४४७७३८७७० क० ७, एतावत्परिमाणं हरिवर्षे प्रतरम् ॥ १०९–११० ॥

सम्प्रति निषधस्य बाहाप्रतरघनगणितानि वक्तव्यानि, तत्र निषधस्य यो जीवावर्गः स ज्येष्ठ उच्यते, स च त्रिकः द्विकः शून्यं शून्यं चतुष्कः अष्टौ शून्यानि ३२००४०००००००० । यस्तु हरिवर्षसत्को जीवावर्गः स कनिष्ठः, स च एककः नवकः सप्तकः एककः षट्कः शून्यान्यष्टौ १९७१६०००००००० । एतौ द्वावप्येकत्र मील्येते, ततो जातमिदं पञ्चकः एककः सप्तकः द्विकः शून्यानि नव ५१७२००००००००० । अस्यार्धं द्विकः पञ्चकः अष्टकः षट्कः शून्यानि नव २५८६००००००००० । अस्य वर्गमूलानयने लब्धाः

कलानां षोडश लक्षा एकाशीतिः शतानि चतुरुत्तराणि १६०८१०४। शेषा अंशा उद्धरन्ति एककः पञ्चकः द्विकः पञ्चकः एककः अष्टकः चतुष्कः १५२५१८४। छेदराशिः त्रिकः द्विकः एककः षट्कः द्विकः शून्यं अष्टकः ३२१६२०८। अनयोर्द्वयोरपि राश्योः षोडशभिरपवर्तना क्रियते, तत्रांशा जाता नवकः पञ्चकः त्रिकः द्विकः चतुष्कः ९५३२४। छेदराशिः द्विकः शून्यं एककः शून्यं एककः त्रिकः २०१०१३। एतावती निषधस्य बाहा। तथा चाह—

> सोलस लक्ख कलाणं, इगसीइ सया चउत्तरा निसढे।
> सोलसविहत्तसेसे, नव पण तिग दोन्नि चउरंसा॥ १११॥
> छेऊ दुग सुन्नेक्कग, सुन्नेक्क य तिन्नि निसहबाहेसा।

व्याख्या—ज्येष्ठकनिष्ठयोर्जीवावर्गयोरेकत्र मीलितयोरर्धस्य वर्गमूलानयने लब्धाः कलानां षोडश लक्षा एकाशीतिः शतानि चतुरुत्तराणि १६०८१०४। शेषे तूद्धरिते राशौ षोडशभिरपवर्तिते अंशा नवकः पञ्चकः त्रिकः द्विकः चतुष्कः ९५३२४। छेदराशिरपि षोडशभिरपवर्तितो द्विकः शून्यं एककः शून्यं एककः त्रिकः २०१०१३। एषा एतावत्परिमाणा बाहा निषधे निषधपर्वते॥

सम्प्रति प्रतरगणितार्थमाह—

> विक्खंभनियगुणिया, पयरं गुणिए इमो रासी॥ ११२॥

व्याख्या—एषाऽनन्तरोक्ता बाहा निजकेनात्मीयेन विष्कम्भेण गुणिता सती प्रतरं प्रतरपरिमाणं भवति । तत्र निषधस्य विष्कम्भो विंशतिसहस्राधिकानि त्रीणि लक्षाणि तैर्गुणिते कलाराशौ अयं वक्ष्यमाणो राशिर्भवति ॥ ११२ ॥

तमेवाह—

उवरिं पणेग चउ पण, नव तिग दुग अड सुन्नचत्तारि ।
हेठा ति सुन्न पंच य, सुन्न ति छक्क ठ सुन्नचऊ ॥ ११३ ॥

व्याख्या—उपरि उपरितनः कलाराशिर्विंशतिसहस्राधिकेन लक्षत्रयेण गुणित एवंरूपो भवति—पञ्चकः एककः चतुष्कः पञ्चकः नवकः त्रिकः द्विकः अष्टकः चत्वारि शून्यानि ५१४५९३२८०००० । अधस्तनोऽंशरूपो राशिर्विंशतिसहस्राधिकलक्षत्रयेण गुणितो जातः त्रिकः शून्यं पञ्चकः शून्यं त्रिकः षट्कः अष्टकः चत्वारि शून्यानि ३०५०३६८०००० । ततोऽमीषां कलांशानां छेदराशिना द्विकः शून्यं एककः शून्यं एककः त्रिकः इत्येवंरूपेण २०१०१३ भागो ह्रियते, हृते च भागे लब्धं कलानामेकं लक्षं एकपञ्चाशत्सहस्राणि सप्त शतानि एकोनपञ्चाशदधिकानि १५१७४९ । शेषमुद्धरति एककः पञ्चकः अष्टकः द्विकः षट्कः त्रिकः १५८२६३ । लब्धास्तु कलाः कलाराशौ प्रक्षिप्यन्ते, ततो जातः कलाराशिरेवंरूपः—पञ्चकः एककः चतुष्कः पञ्चकः नवकः त्रिकः चतुष्कः त्रिकः एककः सप्तकः चतुष्कः नवकः ५१४५९३४३१७४९, अस्य त्रिभिः शतैरेकपष्ट्यधिकैर्योजनानयनाय भागो ह्रियते, हृते च भागे लब्धं योजनानामेकं कोटिशतं

द्विचत्वारिंशत्कोटयः चतुःपञ्चाशल्लक्षाः षट्षष्टिः सहस्राणि पञ्च शतानि एकोनसप्तत्यधिकानि १४२५४-६६५६९। शेषमुद्धरति त्रीणि शतानि चत्वारिंशदधिकानि ३४०। तेषामेकोनविंशत्या भागे हृते लब्धाः किञ्चिदूना अष्टादश, छेदराशेरप्येकषष्ट्यधिकशतत्रयस्यैकोनविंशत्या भागे हृते लब्धा एकोनविंशतिः, तत आगता अष्टादश एकोनविंशतिभागाः। एतावन्निषधपर्वतस्य प्रतरम् ॥ ११३ ॥

एतदेवाह—

छेयहियलद्धमिग पण, इग सत्तग चेव अउणपन्न कला।
पक्खिव उवरिं विभए, एगठ्ठिएहिं तिसएहिं ॥ ११४ ॥
बायालं कोडिसयं, छावठ्ठिसहस्स लक्ख चउपन्नं।
अउणत्तर पंचसया, पयरं अठ्ठारस कलाउ ॥ ११५ ॥

व्याख्या—कलांशानां छेदराशिना यथोक्तेन २०१०१३ भागे हृते लब्धाः कला एककः पञ्चकः एककः सप्तकः चतुष्कः नवकः १५१७४९, एता उपरितनकलाराशौ प्रक्षिप, प्रक्षिप्य चैकषष्ट्यधिकैस्त्रिभिः शतैर्विभज्यते, विभक्ते च सति लब्धं योजनानामेकं कोटिशतं द्विचत्वारिंशत्कोट्यधिकं चतुःपञ्चाशल्लक्षाः षट्षष्टिः सहस्राणि एकोनसप्तत्यधिकानि पञ्च शतानि १४२५४६६५६९ अष्टादश कलाः १८, एतावत्परिमाणं निषधस्य प्रतरम् ॥ ११४–११५ ॥

सम्प्रति घनगणितमभिधीयते, तत्र निषधस्योच्चत्वं चत्वारि योजनशतानि, ततः प्रतरगतो योजनराशिः शतचतुष्टयेन गुण्यते, गुणितश्च सन् जात एवंरूपः—पञ्चकः सप्तकः शून्यं एककः अष्टकः षट्कः षट्कः द्विकः सप्तकः षट्कः शून्यं शून्यं ५७०१८६६२७६०० । कलाश्चाष्टादश चतुर्भिः शतैर्गुणिता जाता द्विसप्ततिशतप्रमाणाः ७२००, तासामेकोनविंशत्या भागे हृते लब्धानि योजनानां त्रीणि शतानि एकोनाशीत्यधिकानि ३७९, तानि योजनराशौ प्रक्षिप्यन्ते, ततो जातो योजनराशिरेवंप्रमाणः—सप्तपञ्चाशत्कोटिसहस्राणि अष्टादश कोटयः षट्षष्टिर्लक्षाः सप्तविंशतिः सहस्राणि नव शतानि एकोनाशीत्यधिकानि ५७०१८६६२७९७९, एतावन्निषधस्य घनगणितम् । तथा चाह—

उणसीइ नव सय छा-र कोडि छावट्ठि लक्ख घणगणियं ।

सत्तावीस सहस्सा, सगपन्न सहस्स कोडीणं ॥ ११६ ॥

व्याख्या—एकोनाशीत्यधिकानि नव शतानि अष्टादश कोटयः षट्षष्टिर्लक्षाः सप्तविंशतिः सहस्राणि कोटीनां सप्तपञ्चाशत्सहस्राणि ५७०१८६६२७९७९ एतावत्परिमाणं निषधस्य घनगणितम् ॥ ११६ ॥

सम्प्रति विदेहार्धस्य बाहाप्रतरे वक्तव्ये, तत्र यो विदेहार्धस्य संबन्धी जीवावर्गः स ज्येष्ठ उच्यते, स च त्रिकः षट्कः एककः शून्यानि दश ३६१००००००००००, यश्च निषधपर्वतस्य संबन्धी स कनिष्ठः, स च त्रिकः द्विकः शून्यं शून्यं चतुष्कः शून्यान्यष्टौ ३२००४०००००००० । एतौ द्वावप्येकत्र मील्येते,

ततो जातः षट्कः अष्टकः एककः शून्यं चतुष्कः शून्यानि चाष्टौ ६८१०४०००००००० । अस्यार्धीकरणे जातः त्रिकः चतुष्कः शून्यं पञ्चकः द्विकः अष्टौ शून्यानि ३४०५२००००००००, अस्य वर्गमूलानयने लब्धाः कलानामष्टादश लक्षाः पञ्चचत्वारिंशत्सहस्राणि त्रीणि शतानि अष्टादशाधिकानि १८४५३१८ । शेषमुद्धरति एककः चतुष्कः सप्तकः अष्टकः अष्टकः सप्तकः षट्कः १४७८८७६ । छेदराशिः त्रिकः षट्कः नवकः शून्यं षट्कः त्रिकः षट्कः ३६९०६३६। अनयोरुभयोरपि चतुष्केणापवर्तना क्रियते, जातोऽंशराशिरेवंरूपः त्रिकः षट्कः नवकः सप्तकः एककः नवकः ३६९७१९ । छेदराशिः नवकः द्विकः द्विकः षट्कः पञ्चकः नवकः ९२२६५९, एतावत्परिमाणा विदेहार्धस्य बाहा । तथा चाह—

लक्ख ठारस पणयाल–सहस्स तिन्नि कला सय ठारा ।
चउरोवट्टिय सेसं, तिग छग नव सत्त एग नव ॥ ११७ ॥
छेउ नव दुग दुगउ, छ पंच नव बाह एस बोधवा ।

व्याख्या—कलानामष्टादश लक्षाः पञ्चचत्वारिंशत्सहस्राणि त्रीणि शतानि अष्टादशाधिकानि १८४५३१८ शेषमुद्धरितं चतुर्भिरपवर्तितं सत् इदम्—त्रिकः षट्कः नवकः सप्तकः एककः नवकः ३६९७१९ । छेदराशिरपि चतुष्केणापवर्तित एवंरूपः—नवकः द्विकः द्विकः षट्कः पञ्चकः नवकः ९२२६५९ एषा एतावत्परिमाणा विदेहार्धस्य बाहा बोद्धव्या ॥

सम्प्रति प्रतरानयनार्थमाह—

**विदेहरूवासगुणिया, पयरं विदेहरूवासस्स ॥ ११८ ॥**

व्याख्या—विदेहार्धस्य वाहा विदेहार्धसत्केन व्यासेन विंशतिसहस्राधिकलक्षत्रयप्रमाणेन कलारूपेण ३२०००० गुणिता सती विदेहार्धस्य प्रतरं भवति । तथाहि—कलाराशिः अष्टादश लक्षाः पञ्चचत्वारिंशत्सहस्राणि त्रीणि शतानि अष्टादशाधिकानि १८४५३१८ विंशतिसहस्राधिकलक्षत्रयेण गुण्यते ३२००००, गुणितश्च सन् जात एवंप्रमाणः पञ्चकः नवकः शून्यं पञ्चकः शून्यं एककः सप्तकः षट्कः चत्वारि शून्यानि ५९०५०१७६०००० । येऽप्यंशास्तेऽपि विंशतिसहस्राधिकलक्षत्रयेण गुण्यन्ते, ततो जातः एककः एककः अष्टकः त्रिकः एककः शून्यं शून्यं अष्टकः चत्वारि शून्यानि ११८३१००-८०००० । ततोऽमीषां कलांशानां प्रागुक्तेन छेदराशिना नवकद्विकद्विकषट्कपञ्चकनवकरूपेण ९२२६५९ भागो ह्रियते, हृते च भागे लब्धाः कलाः एककः द्विकः अष्टकः द्विकः द्विकः सप्तकः १२८२२७ । शेषमुद्धरति द्विकः अष्टकः चतुष्कः चतुष्कः शून्यं सप्तकः २८४४०७ । लब्धाश्च कलाः कलासु मध्ये प्रक्षिप्यन्ते, ततो जातः कलाराशिरेवंरूपः—पञ्चकः नवकः शून्यं पञ्चकः शून्यं एककः अष्टकः अष्टकः अष्टकः द्विकः द्विकः सप्तकः ५९०५०१८८८२२७ । एतासां च कलानां योजनानयनार्थमेकषष्ट्यधिकैस्त्रिभिः शतैर्भागो ह्रियते, हृते च भागे लब्धं योजनानामेकं कोटिशतं त्रिषष्टिः कोटयः सप्तपञ्चाशल्लक्षा एकोनचत्वारिंशत्सहस्राणि त्रीणि शतानि द्व्युत्तराणि १६३५७३९३०२ । शेषमुद्धरति पञ्चोत्तरे द्वे शते २०५,

बृहत्
२१ ॥

तयोरेकोनविंशत्या भागे हृते लब्धा दश, शेषा उद्धरन्ति पञ्चदश । छेदराशेरपि एकषष्ट्यधिकशतत्रयप्रमाणस्यैकोनविंशत्या भागो ह्रियते, हृते च भागे लब्धा एकोनविंशतिः, तत्रागता दश कला एकस्याश्च कलायाः पञ्चदश एकोनविंशतितमा भागाः क० १० वि० १५, एतावत्परिमाणं विदेहार्धस्य प्रतरम् ॥११८॥

एतदेवाह—

पंच नव सुन्न पण सुन्न, एग सत्तेव छच्च सुन्नचऊ ।
हेठिग इग अड तिग इग, सुन्नदुगं अठ सुन्नचऊ ॥ ११९ ॥
छेयहियलद्धमिग दुग, अड दुग दुग सत्त किंचि सविसेसा ।
पक्खिव उवरिं विभए, एगठहिएहिं तिसएहिं ॥ १२० ॥

व्याख्या—बाहागतः कलाराशिर्विंशतिसहस्राधिकलक्षत्रयात्मकेन कलारूपेण व्यासेन गुणितो जातः पञ्चकः नवकः शून्यं पञ्चकः शून्यं एककः सप्तकः षट्कः चत्वारि शून्यानि ५९०५०१७६०००० । अधस्तादपि अंशा यथोक्तेन व्यासेन गुणिता जाता एवंरूपाः—एककः अष्टकः त्रिकः एककः शून्यं शून्यं अष्टकः शून्यानि चत्वारि १८३१००८०००० । अमीषामंशानां छेदराशिना प्रागुक्तेन ९२२६५९ भागे हृते यल्लब्धं एककः द्विकः अष्टकः द्विकः द्विकः सप्तकः १२८२२७ इति किञ्चित्सविशेषं मनागधिकं, तत

उपरि कलाराशौ प्रक्षिप, प्रक्षिप्य च त्रिभिः शतैरेकषष्ट्यधिकैर्विभजेत्, विभक्ते च सति तस्मिन् लब्धमिदम् ॥ ११९-१२० ॥

तेवट्ठं कोडिसयं, उयाल सहस्स लक्ख सगवन्ना ।

दुयहियतिसया पयरं, किंचूणिक्कारस कलाया ॥ १२१ ॥

व्याख्या—त्रिषष्टं त्रिषष्ट्यधिकं योजनानां कोटिशतमेकोनचत्वारिंशत्सहस्राणि सप्तपञ्चाशल्लक्षाः त्रीणि शतानि द्व्युत्तराणि किञ्चिदूना एकादश कलाश्च दश कला एकस्याश्च कलायाः पञ्चदश एकोनविंशतितमा भागा इत्यर्थः १६३५७३९३०२ क० १० वि० १५, एतावत्परिमाणं विदेहार्धस्य प्रतरम् ॥ १२१ ॥

सम्प्रति दक्षिणभरतार्धप्रतरानयनाय करणमाह—

दाहिणभरहद्धस्स उ, उसुएणं संगुणित्तु जीवंसे ।

वग्गिय दससंगुणियं, करणी से पयरगणियं तु ॥ १२२ ॥

व्याख्या—दक्षिणभरतार्धस्य पुनः प्रतरगणितमेवं भवति—दक्षिणभरतार्धस्य संबन्धिनो जीवांशान् इषुकेण दक्षिणभरतार्धसंबन्धिना बाणेन संगुणयेत्, उपलक्षणमेतत्, गुणयित्वा चतुर्भिर्विभजेत्, विभक्ते च सति यल्लभ्यते स राशिर्वर्गितः क्रियते, वर्गयित्वा च दशभिर्गुण्यते, गुणितस्य सतः करणिः वर्गमूलमानीयते, वर्गमूलानयने च यदागच्छति तत् दक्षिणभरतार्धस्य प्रतरगणितम् । तथाहि—

दक्षिणभरतार्धस्य जीवागतः कलाराशिरेकं लक्षं पञ्चाशीतिसहस्राणि द्वे शते पञ्चविंशत्यधिके १८५२२५, एष दक्षिणभरतार्धस्य जीवागतः [1]कलाराशिसंबन्धिना बाणेन पञ्चविंशत्यधिकपञ्चचत्वारिंशच्छतप्रमाणेन गुण्यते, ततो जातः अष्टकः त्रिकः अष्टकः एककः चतुष्कः त्रिकः एककः द्विकः पञ्चकः ८३८१४३१२५। अस्य राशेश्चतुर्भिर्भागो ह्रियते, हृते च भागे लब्धः द्विकः शून्यं नवकः पञ्चकः त्रिकः पञ्चकः सप्तकः अष्टकः एककः २०९५३५७८१। यश्चैकोऽंश उद्धरति, स न गण्यते, पश्चादपि हि जीवागता पञ्चविंशतितमी कला किञ्चिदूना सती परिपूर्णा विवक्षितेति कृत्वा, ततश्चतुर्भागे लब्धस्य वर्गो विधीयते, ततो जातमिदं चतुष्कः त्रिकः नवकः शून्यं पञ्चकः द्विकः चतुष्कः त्रिकः पञ्चकः एककः नवकः द्विकः सप्तकः नवकः नवकः षट्कः एककः ४३९०५२४३५१९२७९९६१। अस्यापि दशभिर्गुणने जातमेकमधिकं शून्यं ४३९०५२४३५१९२७९९६१०। अस्य वर्गमूलानयने लब्धः कलाराशिरयं—षट्कः षट्कः द्विकः षट्कः एककः शून्यं त्रिकः एककः नवकः ६६२६१०३१९। शेषा अंशा उद्धरिताः त्रिकः चतुष्कः सप्तकः पञ्चकः एककः सप्तकः अष्टकः चतुष्कः नवकः ३४७५१७८४९। कलानां चानन्तरोक्तानामेकषष्ट्यधिकैस्त्रिभिः शतैर्योजनानयनाय भागे हृते लब्धा योजनानामष्टादश लक्षाः पञ्चत्रिंशत्सहस्राणि चत्वारि शतानि पञ्चाशीत्यधिकानि १८३५४८५। शेषमुद्धरति द्वे शते चतुस्त्रिंशदधिके २३४, तस्यैकोनविंशत्या भागे हृते लब्धा द्वादश, शेषास्तिष्ठन्ति षट्। छेदराशेरपि एकषष्ट्यधिकशतत्रयरूपस्यैकोनविंशत्या भागे हृते लब्धा एको-

१ कलाराशिः दक्षिणभरतार्धसबन्धिना इति पाठः साधुः.

नविंशतिः, आगता द्वादश कला एकस्याश्च कलायाः षड् एकोनविंशतिभागाः, एतावत्प्रमाणं दक्षिणभरतार्धप्रतरम् ॥ १२२ ॥

एतदेवाह—

जम्मभरहद्धजीवा, कलाण लक्खं सहस्स पणसीई ।
दो य सया चउवीसा, रूवद्धहिएण पणुवीसा ॥ १२३ ॥

व्याख्या—याम्यभरतार्धजीवा दक्षिणभरतार्धस्य जीवा कलानामेकं लक्षं पञ्चाशीतिसहस्राणि द्वे शते चतुर्विंशे चतुर्विंशत्यधिके, परं ये वर्गमूलानयनेऽंशा उद्धरन्ति, तद्यथा—चतुष्कः एककः अष्टकः त्रिकः एककः ४१८३१, छेदराशिः नवकः द्विकः षट्कः एककः द्विकः ९२६१२ तदपेक्षया कलाया अर्धं किञ्चिदभ्यधिकं लभ्यते, अग्रे चैकश्चतुर्थभागो न गणयिष्यते इत्यभिप्रायेण द्वे शते पञ्चविंशत्यधिके लभ्यते १८५२२५ ॥ १२३ ॥

ततः—

एसा उसुएण गुणा, चउभइया जाय डुन्नि सुन्न नव ।
पण तिग पण सत्तऽद्वि—कगा य मुक्को इत्थ चउभागो ॥ १२४ ॥

व्याख्या—एषाऽनन्तरोक्तपरिमाणा दक्षिणभरतार्धजीवा इषुणा दक्षिणभरतार्धस्य सत्केन पञ्चविंश-

त्यधिकेन पञ्चचत्वारिंशच्छतप्रमाणेन भागेन गुण्यते इति गुणा गुणिता क्रियत इत्यर्थः, ततश्चतुर्भिर्भज्यते, चतुर्भक्तायां सत्यां लभ्यते द्विकः शून्यं नवकः पञ्चकः त्रिकः पञ्चकः सप्तकः अष्टकः एककः २०९५३५७८१ । शेषमुद्धरति एककः । एषोऽत्र चतुर्भागो मुक्तो न गण्यते एष इत्यर्थः, अत एव प्राक् कलाराशौ द्वे शते पञ्चविंशत्यधिके इत्युक्तम् ॥ १२४ ॥

एयस्स किई दसगुण, चउ तिग नव सुन्न पण दु चउ तिन्नि ।
पण इग नव दुग सत्तग, नव नव छ क्केक्कगो सुन्नं ॥ १२५ ॥

व्याख्या—एतस्यानन्तरोक्तस्य चतुर्भागहारलब्धस्य राशेः कृतिर्विधीयते । ततो "दसगुण त्ति" दशभिर्गुणने दशगुणे च कृते वर्गे जातः चतुष्कः त्रिकः नवकः शून्यं पञ्चकः द्विकः चतुष्कः त्रिकः पञ्चकः एककः नवकः द्विकः सप्तकः नवकः नवकः षट्कः एककः शून्यं ४३९०५२४३५१९२७९९६१० ॥ १२५ ॥

मूलं छक्कग छक्कग, दु छक्क इग सुन्न तिन्नि एग नव ।
तिसएगट्ठविहत्ते, लद्धा किर जोयणा इणमो ॥ १२६ ॥

व्याख्या—एतस्यानन्तरोक्तस्य राशेर्वर्गमूलमानीयते, तत्रागतः षट्कः षट्कः द्विकः षट्कः एककः शून्यं त्रिक एककः नवकः ६६२६१०३१९ एताः किल कला लब्धाः, तत एतासां योजनानयनाय त्रिभिः शतैरेकषष्ठ्यधिकैर्विभागः क्रियते, विभक्ते च सति लब्धानि किल योजनानि अमूनि ॥ १२६ ॥

तान्येवाह—

लक्ख ठारस पणतीस, सहस्सा चउ सया य पणसीया ।
बारस कल छच्च कला, दाहिणभरतद्धपयरं तु ॥ १२७ ॥

व्याख्या—योजनानामष्टादश लक्षाः पञ्चत्रिंशत्सहस्राणि चत्वारि शतानि पञ्चाशीत्यधिकानि द्वादश-कलाः षड् विकलाः एकस्याः कलाया एकोनविंशतितमा भागा १८३५४८५ क० १२ वि० ६, एताव-त्प्रमाणं दक्षिणभरतार्धस्य प्रतरम् ॥ १२७ ॥

तदेवमुक्तं दक्षिणेषु सर्वेष्वपि क्षेत्रेषु प्रतरादिपरिमाणं । सम्प्रति निगमनमाह—

खेत्ताण पयरगणियं, संववहारेण एञ्चियं होइ ।
संपुन्नरासिगुणणे, अहियतरागं पि हुज्जाहि ॥ १२८ ॥

व्याख्या—क्षेत्राणां दक्षिणभरतार्धादीनां विदेहार्धपर्यन्तानां प्रतरलक्षणमेतत् वैताढ्यादिपर्वतानां घनगणितं च संव्यवहारेण कलागतभागप्रभागपरिहारतः स्थूलसङ्ख्यारूपेण एतावदुक्तस्वरूपपरिमाणं भवति । यदि पुनः सूक्ष्मेक्षिकामवलम्ब्य संपूर्णः कलागतभागप्रभागाद्यमोचनेन निरवशेषो राशिर्विवक्षितो गण्यते ततोऽधिकतरमपि प्रतरादिगणितं भवेत्, तच्चोक्तन्यायेन स्वयमेव भावनीयम् ॥ १२८ ॥

तदेवमुक्तं दक्षिणदिग्भागिनां वर्षवर्षधराणां विष्कम्भादिपरिमाणम्। साम्प्रतमौत्तराहाणामतिदेशेनाह—

विक्खंभुसु जीवा धणू, बाहा पयरं च दाहिणाण जहा।
तह चेव उत्तराण वि, एरवयाण बोधव्वा ॥ १२९ ॥

व्याख्या—यथा दाक्षिणात्यानां दक्षिणभरतार्धादीनां विदेहार्धपर्यन्तानां वर्षवर्षधराणां विष्कम्भः इषुः जीवा धनुःपृष्ठं बाहा प्रतरं घनगणितं चोक्तं तथोत्तरेषामपि औत्तराहाणामपि ऐरावतादीनां विदेहार्धपर्यन्तानां वर्षवर्षधराणां विष्कम्भादि वेदितव्यं। तद्यथा—यादृक्परिमाणं दक्षिणभरतार्धस्य विष्कम्भादि तादृक्परिमाणमेवोत्तरैरावतार्धस्य विष्कम्भादि। यादृग्भरतक्षेत्रे वैताढ्यस्य विष्कम्भेषुधनुःपृष्ठबाहाप्रतरघनगणितपरिमाणं तादृगेवैरावतेऽपि क्षेत्रे वैताढ्यस्य। एवं क्रमेण तावदवसेयं (यावत्) यावत्परिमाणं दक्षिणविदेहार्धस्य विष्कम्भादि तावत्परिमाणमुत्तरविदेहार्धस्येति ॥ १२९ ॥

सम्प्रति वर्षधराणामुच्चैस्त्वमाह—

जोयणसयमुव्विद्धा, कणगमया सिहरिचुल्लहिमवंता।
रुप्पिमहाहिमवंता, दुसउच्चा रुप्पकणगमया ॥ १३० ॥

व्याख्या—योजनशतमुद्विद्धौ उच्चौ कनकमयौ पीतसुवर्णमयौ शिखरिक्षुल्लहिमवन्तौ । रुक्मिमहाहिमवन्तौ पुनर्द्वावपि प्रत्येकं द्विशतोच्चौ योजनशतद्वयमुच्चौ, वर्णमधिकृत्य पुनर्यथाक्रमं रुक्मकनकमयौ रुक्मं श्वेतं हेम कनकं पीतं सुवर्णं तन्मयौ । किमुक्तं भवति ? श्वेतसुवर्णमयो रुक्मी, पीतसुवर्णमयो महाहिमवान् । केचित्पुनः रुक्मिपर्वतं रुक्ममयमिच्छन्ति, अपरे महाहिमवन्तं सर्वरत्नमयम् ॥ १३० ॥

चत्तारि जोयणसए, उव्विद्धा निसहनीलवंताऽवि ।

निसहो तवणिज्जमउ, वेरुलिउ नीलवंतगिरी ॥ १३१ ॥

व्याख्या—निषधनीलवन्तौ वर्षधरपर्वतौ द्वावपि प्रत्येकं चत्वारि योजनशतानि उद्विद्धौ उच्चौ, तत्र वर्णमधिकृत्य निषधस्तपनीयमयः आरक्तच्छायसुवर्णमयः, नीलवन्नामा च गिरिर्वैडूर्यरत्नमयः । एतेषां च षण्णामपि वर्षधरपर्वतानां प्रत्येकमुभयोः पार्श्वयोरेकैका पद्मवरवेदिका एकैकश्च वनखण्डः, तथाहि—क्षुल्लहिमवान् दक्षिणस्मिन्नपि पार्श्वे पद्मवरवेदिकावनखण्डाभ्यां परिक्षिप्तः उत्तरस्मिन्नपि पार्श्वे, एवं सर्वेऽपि वर्षधरा भावनीयाः ॥ १३१ ॥

सम्प्रति गिरिषु कूटान्यभिधित्सुराह—

वेयड्ढमालवंते, विज्जुप्पभनिसढनीलवंते य ।

नव नव कूडा भणिया, एक्कारस सिहरिहिमवंते ॥ १३२ ॥

व्याख्या—वैताढ्येषु विजयभरतैरावतसत्केषु चतुस्त्रिंशत्सङ्ख्येषु माल्यवति विद्युत्प्रभे निषधे नीलवति च प्रत्येकं नव नव कूटानि भणितानि तीर्थङ्करगणधरैः । शिखरिणि क्षुल्लहिमवति च पुनः प्रत्येकमेकादश एकादश कूटानि ॥ १३२ ॥

रुप्पिमहाहिमवंते, सोमणसे गंधमायणे कूडा ।
अट्ठ सत्त सत्त य, वक्खारगिरीसु चत्तारि ॥ १३३ ॥

व्याख्या—इहाद्ये पादत्रये यथासङ्ख्येन सङ्ख्यासङ्ख्येयपदयोजना । सा चैवं—रुक्मिणि वर्षधरपर्वते महाहिमवति च प्रत्येकमष्टावष्टौ कूटानि । सौमनसे गन्धमादने ( च ) पर्वते प्रत्येकं सप्त सप्त । वक्षस्कारगिरिषु पुनः षोडशस्वपि प्रत्येकं चत्वारि चत्वारि कूटानि । एतानि च कूटानि सर्वाण्यपि प्रत्येकमेकैकया पद्मवरवेदिकया वनखण्डेन च समन्ततः परिक्षिप्तानि ॥ १३३ ॥

तदेवमुक्तानि सङ्ख्यामात्रमधिकृत्य कूटानि, सम्प्रति नामानि निर्दिदिक्षुः प्रथमतो वैताढ्यकूटानि नामत आह—

सिद्धे भरहे खंडग–मणिभद्दे पुन्नभद्दवेयड्ढे ।
तिमिसगुहुत्तरभरहे, वेसमणे कूड वेयड्ढे ॥ १३४ ॥

व्याख्या—वैताढ्ये पर्वते पूर्वस्यां दिशि प्रथमं सिद्धं सिद्धायतनाभिधं कूटं १। ततः पश्चिमदिशमवलम्ब्य तस्यार्वाग् भरतं दक्षिणभरतार्धनामकं द्वितीयं कूटम् २। ततोऽप्यर्वाक् 'खंडग त्ति' तृतीयं खण्डप्रपातगुहाकूटम् ३। तदनन्तरं माणिभद्रं माणिभद्रनामकं चतुर्थं कूटम् ४। तस्य पश्चिमदिशि पञ्चमं पूर्णभद्रनामकं कूटम् ५। तस्याप्यपरतो वैताढ्यनामकं षष्ठं कूटम् ६। तस्याप्यपरतः तिमिस्रगुहानामकं सप्तमं कूटम् ७। तस्याप्यपरत उत्तरभरतनामकमष्टमं कूटम् ८। तस्याप्यपरतो वैश्रमणनामकं नवमं कूटम् ९। एतानि च सर्वाण्यपि कूटानि प्रत्येकं सक्रोशानि षड् योजनानि उच्चैस्त्वेन, मूले सक्रोशानि षड् योजनानि आयामविष्कम्भाभ्यां, मध्ये देशोनानि पञ्च योजनानि, शिरसि सातिरेकाणि त्रीणि योजनानि, मूले विस्तीर्णानि, मध्ये संक्षिप्तानि, उपरि तनुकानि, अत एव गोपुच्छसंस्थानसंस्थितानि।

तत्र प्रथमकूटस्योपरि सिद्धायतनमस्ति, तेन तत् सिद्धायतनकूटमित्यभिधीयते। अथ कीदृक्स्वरूपं तत्र सिद्धायतनमस्ति? उच्यते—सर्वरत्नमयं, आयामतः क्रोशप्रमाणं, अर्धक्रोशप्रमाणविष्कम्भं, देशोनक्रोशमुच्चं, नानामणिमयस्तम्भशतसंनिविष्टं, तस्य च सिद्धायतनस्य पूर्वोत्तरदक्षिणरूपासु तिसृषु दिक्षु प्रत्येकमेकैकद्वारभावेन त्रीणि द्वाराणि, तानि च सर्वरत्नमयानि, एकैकं च द्वारं पञ्च धनुःशतानि उच्चैस्त्वेन, अर्धतृतीयानि धनुःशतानि विष्कम्भतः। तस्य च सिद्धायतनस्यान्तर्बहुसमरमणीयभूमिभागे महत्येका मणिमयी पीठिका, तस्या उपरि महानेकः सर्वरत्नमयो देवच्छन्दकः, स च पञ्च धनुःशतानि आयामविष्कम्भतः, सातिरेकाणि पञ्च धनुःशतानि उच्चैस्त्वेन। तत्राष्टोत्तरशतसङ्ख्या जिनप्रतिमाः, ताश्च

सर्वा अपि प्रत्येकं पञ्च धनुःशतपरिमाणमुच्छ्रयाः । तासां च प्रतिमानां मूलभूता गात्रयष्टिः सर्वासामपि प्रत्येकं कनकमयी, अङ्करत्नमया अन्तर्लोहिताक्षरत्नमयपरिसे(षे)का नखाः, तपनीयमयानि पाणिपादतलानि, रिष्टरत्नमय्यो रोमराजयः, तपनीया नाभिचुचूकश्रीवत्सोजिह्वाताल्वप्रदेशाः, रिष्टरत्नमयानि श्मश्रूणि, शिलाप्रवालमया ओष्ठाः, स्फटिकरत्नमया दन्ताः अन्तर्लोहिताक्षपरिसे(षे)काः, कनकमय्यो नासिकाः, रिष्टरत्नमयान्यक्षिपक्ष्माणि तन्मध्ये वर्तिन्यस्तारिका भ्रुवश्च, वज्ररत्नमय्यः शीर्षघटिकाः, कनकमयी केशभूमिः, रिष्टरत्नमया उपरि मूर्धजाः । एकैकस्याश्च जिनप्रतिमायाः पृष्ठत एकैका छत्रधारिणी प्रतिमा, एकैकस्या जिनप्रतिमाया उभयपार्श्ववर्तिन्यौ द्वे द्वे चामरधारिण्यौ प्रतिमे, एकैकस्या जिनप्रतिमायाः पुरतो द्वे द्वे यक्षप्रतिमे, द्वे द्वे नागप्रतिमे, द्वे द्वे भूतप्रतिमे, द्वे द्वे कुण्डधारप्रतिमे । तस्मिंश्च देवच्छन्दकेऽष्टोत्तरं शतं घण्टानां, अष्टोत्तरं शतं भृङ्गाराणां, अष्टोत्तरं शतं पुष्पपटलानां, यावदष्टोत्तरं शतं धूपकडुच्छकानामिति । १ ।

द्वितीयस्य तु कूटस्याधिपतिर्दक्षिणभरतार्धनामा देवः, स च पल्योपमस्थितिकः चतुर्णामिन्द्रसामानिकसहस्राणां, चतसृणामग्रमहिषीणां सपरिवाराणां, तिसृणां पर्षदां, सप्तानामनीकानां, सप्तानामनीकाधिपतीनां, षोडशानामात्मरक्षकदेवसहस्राणां, अन्येषां च दक्षिणभरतार्धनामकराजधानीवास्तव्यानां बहूनां देवानां देवीनां च स्वामी । दक्षिणभरतार्धनामिका च तस्य राजधानी मेरोर्दक्षिणतस्तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्यापरस्मिन् जम्बूद्वीपे द्वादश योजनसहस्राण्यवगाह्य परतो यथास्थानं वर्तते, सा

च यादृशी प्राग्विजयदेवस्य विजयाभिधाना नगरी व्यावर्णिता तादृशी वेदितव्या । तस्य च द्वितीयस्य कूटस्योपरि बहुमध्यदेशभागे सर्वरत्नमयो महानेकः प्रासादावतंसकः, स च क्रोशमुच्चोऽर्धक्रोशं विस्तीर्णः, तस्य च प्रासादावतंसकस्य बहुमध्यदेशभागे पञ्चधनुःशतप्रमाणविष्कम्भायामा अर्धतृतीयधनुःशतप्रमाणबाहल्या सर्वरत्नमयी महत्येका मणिपीठिका, तस्या उपरि मध्ये सर्वरत्नमयं दक्षिणभरतार्धदेवयोग्यं महदेकं सिंहासनं, तस्य च सिंहासनस्य चतसृषु दिक्षु समन्तत इन्द्रसामानिकदेवयोग्यानि सिंहासनानि । ततो यदा दक्षिणभरतार्धनामा देवः स्वकीयाया दक्षिणभरतार्धनामिकाया राजधान्याः सकाशादिहागच्छति तदा तस्मिन् प्रासादे स्वकीये महति सिंहासन उपविशति, शेषेषु च सिंहासनेषु यथाक्रममिन्द्रसामानिकादयः । तदेवं यत इत्थं महर्द्धिको दक्षिणभरतार्धनामा देवस्तस्य द्वितीयस्य कूटस्याधिपतिस्तेन तद्दक्षिणभरतार्धकूटमित्युच्यते । एवं शेषकूटनामान्यपि स्वस्वाधिपतिदेवयोगतः प्रवृत्तान्यवसेयानि । २ ।

तद्यथा—तृतीयकूटे खण्डप्रपातगुहाधिपतिर्देवः आधिपत्यं परिपालयति तेन तत् खण्डप्रपातगुहाकूटमित्युच्यते । ३ । चतुर्थे माणिभद्रनामा देवस्तेन तन्माणिभद्रकूटमित्यादि । सर्वेऽपि च ते शेषकूटानामधिपतयो दक्षिणभरतार्धदेव इव महर्द्धिकाः पल्योपमस्थितयश्च प्रतिपत्तव्याः, तेषां राजधान्योऽपि तन्नामिकाः । तद्यथा—खण्डप्रपातगुहाधिपतेर्देवस्य राजधानी खण्डप्रपातगुहाभिधा, माणिभद्रस्य माणिभद्राभिधा यावत् वैश्रमणस्य वैश्रमणाभिधा । ताश्च सर्वा अपि मेरोर्दक्षिणतस्तिर्यगसङ्ख्येयान् द्वीप-

समुद्रानतिक्रम्यापरस्मिन् जम्बूद्वीपे द्वीपे द्वादश योजनसहस्राणि अवगाह्य परतो यथास्थानमवसेयाः। सर्वेषामपि च खण्डप्रपातगुहाकूटप्रभृतीनां कूटानामुपरि यथोक्तप्रमाणाः प्रासादावतंसकाः, तेषु प्रासादेषु मध्ये सिंहासनं सपरिवारं। तथा खण्डप्रपातगुहाधिपतिर्देवो नृत्तमालनामा, तमिस्रगुहाधिपतिः कृतमालः, शेषाणां तु देवानां यान्येव कूटानां नामानि तान्येव तेषामपि। तथा चोक्तं जम्बूद्वीपप्रज्ञप्तौ—"दोण्ह वि असरिसनामया देवा, तं जहा—कयमालए चेव नट्टमालए चेव, सेसाणं छण्हं सरिसनामया—जन्नामया उ कूडा, तन्नामा खलु हवंति ते देवा। पलिओवमट्ठिईया, हवंति पत्तेय पत्तेयं ॥ १ ॥" अमीषां च नवानां कूटानां मध्ये यानि माणिभद्रपूर्णभद्रवैताढ्यनामानि त्रीणि कूटानि तानि कनकमयानि, शेषाणि षडपि रत्नमयानि, एतच्चाग्रे लेशतः स्वयमेव वक्ष्यति ॥ १३४ ॥

सम्प्रति क्षुल्लहिमवति यानि प्रागुद्दिष्टानि एकादश कूटानि तानि प्रतिपादयति—

सिद्धे य चुल्लहिमवे, भरहे य इलाए होइ देवीए।
गंगावत्तणकूडे, सिरिकूडे रोहियंसे य ॥ १३५ ॥
तत्तो य सिंधुयाव-त्तणे य कूडे सुराए देवीए।
हेमवए वेसमणे, एक्कारस कूड हिमवंते ॥ १३६ ॥

व्याख्या—एकादश कूटानि हिमवति क्षुल्लहिमवति अमूनि भवन्ति। तद्यथा—पूर्वस्यां दिशि लव-

णसमुद्रगतपूर्वभागादर्वाक् प्रथमं सिद्धं सिद्धायतनकूटं १ । तस्यानन्तरं पश्चिमदिशि द्वितीयं क्षुल्लहिमवत्कूटं २ । ततोऽप्यपरतः तृतीयं भरतकूटं ३ । तस्याप्यनन्तरमपरदिशि चतुर्थमिलादेवीकूटं ४ । तस्याप्यपरतो दिशि पञ्चमं गङ्गावर्तनकूटं ५ । तस्याप्यपरतः षष्ठं श्रीदेवीकूटं ६ । ततोऽपि पश्चिमदिशि सप्तमं रोहितांसादेवीकूटं ७ । तस्याप्यनन्तरमपरस्यां दिशि अष्टमं सिन्ध्वावर्तनकूटं ८ । ततः सुरादेवीकूटं नवमं ९ । ततोऽपि दशमं हैमवतकूटं १० । तस्याप्यनन्तरमपरस्यां दिशि वैश्रमणकूटमेकादशं ११ । अमूनि च कूटानि सर्वाण्यपि प्रत्येकं पञ्च योजनशतानि उच्चैस्त्वेन, मूले पञ्च योजनशतानि आयामविष्कम्भाभ्यां, मध्ये त्रीणि योजनशतानि पञ्चसप्तत्यधिकानि[1], उपरिष्टादर्धतृतीयानि योजनशतानि, मूले विस्तीर्णानि, मध्ये संक्षिप्तानि, उपरि तनुकानि, अत एव गोपुच्छसंस्थानसंस्थितानि, सर्वाण्यपि च सर्वरत्नमयानि प्रथमे चैव कूटे सिद्धायतनमस्ति, तेन तत् सिद्धायतनकूटमभिधीयते । तच्च सिद्धायतनं पञ्चाशद्योजनानि आयामतः, पञ्चविंशतियोजनानि विष्कम्भतः, षट्त्रिंशद्योजनानि उच्चैस्त्वेन । द्वितीये तु कूटे क्षुल्लहिमवन्नामा देवः परिवसति, तेन क्षुल्लहिमवत्कूटमुच्यते । एवं शेषाण्यपि कूटनामानि स्वस्वाधिपतिनामयोगतः प्रवृत्तान्यवसेयानि । तत्र क्षुल्लहिमवद्भरतहैमवतवैश्रमणनामकेषु चतुर्षु कूटेषु देवाः परिवसन्ति, शेषेषु तु कूटेषु देव्यः । ते च देवा देव्यश्च प्रत्येकं पल्योपमस्थितयो विजयदेव इव महर्द्धिकाश्च । राजधान्योऽपि च तेषां देवानां देवीनां च मेरोर्दक्षिणतस्तिर्यगसङ्ख्येयान् द्वीप-

१ सप्तपचाधिकानि इत्यपि पाठः.

समुद्रानतिक्रम्यापरस्मिन् जम्बूद्वीपे द्वीपे द्वादश योजनसहस्राणवगाह्य परतो यथास्थानं वर्तन्ते। ताश्च राजधान्यो यादृशी विजयदेवस्य राजधानी व्यावर्णिता तादृश्यः प्रत्येतव्याः। एकैकस्य च कूटस्योपरि सर्वरत्नमयो महानेकैकः प्रासादावतंसकः, ते च प्रासादावतंसकाः प्रत्येकं सार्धद्वाषष्टियोजनान्युच्चैस्त्वेन सक्रोशान्येकत्रिंशद्योजनान्यायामविष्कम्भतः, तेषु च प्रासादेषु प्रासादावतंसकेषु मध्ये प्रत्येकं स्वस्वाधिपतिदेवदेवीयोग्यं सिंहासनं सपरिवारमिति ॥ १३५–१३६ ॥

सम्प्रति यानि महाहिमवत्यष्टौ कूटानि प्रागुद्दिष्टानि तानि प्रतिपादयति—

सिद्धे य महाहिमवे, हेमवए रोहिया हिरीकूडे।
हरिकंता हरिवासे, वेरुलिए अट्ठ महहिमवे ॥ १३७ ॥

व्याख्या—महाहिमवति पर्वतेऽष्टाविमानि कूटानि। तद्यथा—प्रथमं सिद्धायतनकूटम् १। द्वितीयं महाहिमवत्कूटम् २। तृतीयं हैमवतकूटम् ३। चतुर्थं रोहिताकूटम् ४। पञ्चमं ह्रीकूटम् ५। षष्ठं हरिकान्ताकूटम् ६। सप्तमं हरिवर्षकूटम् ७। अष्टमं वैडूर्यकूटम् ८। एतानि च कूटानि पूर्वापरायतश्रेणिव्यवस्थितानि। यदेव च प्राक् क्षुल्लहिमवति कूटानामुच्चत्वविष्कम्भादि प्रतिपादितं, यदेव च सिद्धायतनस्य प्रासादावतंसकानां च परिमाणं, यथारूपं च महर्द्धिकत्वं तन्निवासिनां, यादृश्यो यत्र च तेषां

राजधान्यः तदेतत्सर्वमन्यूनातिरिक्तमत्रापि च ज्ञाणनीयं, केवलं नाम विपर्यास एव केवलो देवानां राजधानीनां चेति ॥ १३७ ॥

साम्प्रतं निषधस्य यानि प्रागुद्दिष्टानि नव कूटानि तानि नामतो निर्दिशति—

सिद्धे निसहे हरिवासे, विदेहे हरिधिई य सीयोया ।
अवरविदेहे रुयगे, नव कूमा होंति निसहम्मि ॥ १३८ ॥

व्याख्या—निषधे निषधपर्वते अमूनि नव कूटानि, तद्यथा—प्रथमं सिद्धायतनकूटम् १ । द्वितीयं निषधकूटम् २ । तृतीयं हरिवर्षकूटम् ३ । चतुर्थं पूर्वविदेहकूटम् ४ । पञ्चमं हरिकूटम् ५ । षष्ठं धृतिकूटम् ६ । सप्तमं शीतोदाकूटम् ७ । अष्टममपरविदेहकूटम् ८ । नवमं रुचककूटम् ९ । एतान्यपि च कूटानि पूर्वापरायतश्रेण्यिव्यवस्थिततया प्रतिपत्तव्यानि । अत्रापि कूटकूटाधिपतिदेवतद्राजधानीविषया या काचिद्वक्तव्यता सा सर्वाऽपि प्रागिव निरवशेषा वक्तव्या ॥ १३८ ॥

सम्प्रति यानि गन्धमादने कूटानि प्राक् सप्तसङ्ख्यान्युद्दिष्टानि तानि प्रतिपादयति—

सिद्धे य गंधमायण—गंधिय तह उत्तराफलिहकूडे ।
तह लोहियक्खकूडे, आणंदे चेव सत्तमए ॥ १३९ ॥

व्याख्या—मेरोरुत्तरपश्चिमायां गन्धावतीविजयस्य पूर्वस्यामुत्तरकुरूणां पश्चिमायां दिशि यो गन्धमा-

दनो नाम वक्षस्कारपर्वतस्तत्रामूनि सप्त कूटानि, तद्यथा—प्रथमकूटं सिद्धं सिद्धायतनकूटं, तत्तु मेरोरु-
त्तरपश्चिमायां दिशि मेरोः प्रत्यासन्नं १। तस्योत्तरपश्चिमायां दिशि द्वितीयं गन्धमादनाभिधानं कूटम्
२। तस्याप्युत्तरपश्चिमायां दिशि तृतीयं "गंधिय त्ति" गन्धिलावतीकूटम् ३। एतानि त्रीण्यपि कूटानि
विदिग्भावीनि। ततस्तृतीयकूटस्योत्तरपश्चिमायां पञ्चमस्य स्फटिककूटस्य दक्षिणतश्चतुर्थमुत्तरकुरुकूटम्
४। तस्योत्तरतः पञ्चमं स्फटिककूटम् ५। तस्याप्युत्तरतः षष्ठं लोहिताक्षकूटम् ६। तस्याप्युत्तरतः सप्त-
ममानन्दकूटम् ७। इह पञ्चमे स्फटिककूटे भोगङ्करा नाम देवी परिवसति, षष्ठे लोहिताक्षे कूटे भोग-
वती, शेषेषु तु कूटेषु कूटसदृशनामानो देवाः, सिद्धकूटे सिद्धायतनं, शेषेषु तु कूटेषु प्रासादावतंसकाः,
ते च यथा क्षुल्लहिमवति तथा द्रष्टव्याः। देवीदेवानामपि च महर्द्धिकत्वं तथैव प्रतिपत्तव्यं, राजधा-
न्योऽपि च मेरोरुत्तरपश्चिमायां दिशि तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्यापरस्मिन् जम्बूद्वीपे द्वीपे
द्वादश योजनसहस्राण्यवगाह्य परतो यथास्थानमवसेयाः ॥ १३९ ॥

सम्प्रति माल्यवति यानि प्रागुद्दिष्टानि नव कूटानि तानि नामतः प्रतिपादयति—

सिद्धे य मालवंते, उत्तरकुरु कच्छसागरे रुयगे।
सीयाए पुन्नभद्दे, हरिस्सहे चेव नव कूडा ॥ १४० ॥

१ गजदन्तपर्वतोऽयमन्यत्र वर्ण्यते.

व्याख्या—मेरोरुत्तरपूर्वस्यामुत्तरकुरूणां पूर्वस्यां कच्छविजयस्य पश्चिमायां दिशि यो माल्यवन्नामा वक्षस्कारपर्वतः, तत्रेमानि नव कूटानि, तद्यथा—प्रथमं सिद्धं सिद्धायतनं कूटं, तच्च मेरोरुत्तरपूर्वस्यां दिशि मेरोः प्रत्यासन्नं १। तस्योत्तरपूर्वस्यां दिशि द्वितीयं माल्यवत्कूटम् २। तस्याप्युत्तरपूर्वस्यां दिशि तृतीयमुत्तरकुरुकूटम् ३। तस्याप्युत्तरपूर्वस्यां दिशि चतुर्थं कच्छकूटम् ४। एतानि चत्वार्यपि कूटानि विदिग्भावीनि हिमवत्कूटप्रमाणानि, तेषां चाधिपतयः कूटसदृशनामानो देवाः। ततश्चतुर्थस्य कच्छकूटस्योत्तरपूर्वस्यां षष्ठस्य रुचककूटस्य दक्षिणस्यां पञ्चमं सागरकूटं नाम, तत्र सुभोगा नाम देवी परिवसति ५। तस्योत्तरस्यां दिशि षष्ठं रुचकनामकं कूटं, तस्याधिपतिर्देवी भोगमालिनी ६। तस्योत्तरस्यां दिशि सप्तमं शीताकूटं, तत्र शीता नाम देवी ७। तस्याप्युत्तरस्यां दिशि पूर्णभद्रनामकमष्टमं कूटं, तत्र पूर्णभद्रनामा देवः ८। एतान्यपि च कूटानि हिमवत्कूटप्रमाणानि। एतेषु चोष्टास्वपि कूटेष्वधिपतयो देवा देव्यश्च विजयदेव इव महर्द्धिका वेदितव्याः, नवरं राजधान्यो मेरोरुत्तरपूर्वस्यां दिशि तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्यापरस्मिन् जम्बूद्वीपे द्वीपे द्वादश योजनसहस्राण्यवगाह्य परतो यथास्थानं प्रत्येतव्याः। पूर्णभद्रस्योत्तरदिशि नीलवतो वर्षधरस्य दक्षिणस्यां हरिस्सहं नाम नवमं कूटम् ९। तच्चैकं योजनसहस्रमुच्चैस्त्वेन, मूले योजनसहस्रमेकमायामविष्कम्भाभ्यां, मध्येऽर्धाष्टमानि योजनशतानि, उपरि पञ्च योजनशतानि, मूले विस्तीर्णं मध्ये संक्षिप्तमुपरि तनुकं कनकमयं गोपुच्छसंस्थानसंस्थितं, तस्यो-

१ अयमपि गजदन्तोऽन्यत्र व्याख्यातः २ 'प्रथमवर्जेषु सप्तस्वपि' इति साधु।

परि महानेकः प्रासादावतंसकः, स च सर्वरत्नमयः सार्धानि द्वाषष्टियोजनानि उच्चैस्त्वेन, सक्रोशानि एकत्रिंशद्योजनानि आयामविष्कम्भाभ्यां, तस्य च मध्ये हरिस्सहदेवयोग्यं महदेकं सिंहासनं, तस्य च सिंहासनस्य समन्ततः सर्वासु दिक्षु तदिन्द्रसामानिकादिदेवयोग्यानि सिंहासनानि। तस्य च हरिदेवस्य राजधानी मेरोरुत्तरस्यां दिशि तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्यापरस्मिन् जम्बूद्वीपे द्वीपे द्वादशयोजनसहस्रेभ्यः परतः प्रत्येतव्या। सा च नाम्ना हरिकान्ता प्रमाणतश्चतुरशीतियोजनसहस्राण्यायामविष्कम्भाभ्यां द्वे लक्षे पञ्चषष्टियोंजनसहस्राणि षट् शतानि द्वात्रिंशदधिकानि २६५६३२ परिरयेण, शेषं यच्चमरचञ्चायां राजधान्यां सत्रादिपरिमाणं तदेवात्राप्यवगन्तव्यम् ॥ १४० ॥

सम्प्रति सौमनसे यानि सप्त कूटानि प्रागुद्दिष्टानि तानि प्रतिपादयति—

सिद्धे सोमणसेऽवि य, कूडे तह मंगलावई चेव।
देवकुरुविमलकंचण—वसिट्ठकूडे य सत्तमए ॥ १४१ ॥

व्याख्या—मेरोर्दक्षिणपूर्वस्यां देवकुरूणां पूर्वस्यां मङ्गलावतीविजयस्य पश्चिमायां दिशि सौमनसो नाम वक्षस्कारपर्वतः[1], तत्रेमानि सप्त कूटानि, तद्यथा—मेरोर्दक्षिणपूर्वस्यां मेरोः प्रत्यासन्नं सिद्धायतनकूटम् ( सिद्धकूटम् ) १। तस्य दक्षिणपूर्वस्यां दिशि द्वितीयं सौमनसकूटम् २। तस्यापि दक्षिणपूर्वस्यां

---

१ अयं गजदन्तनाम्नाऽन्यत्र प्रथितः.

दिशि तृतीयं मङ्गलावतीकूटम् ३ । एतान्यपि च त्रीणि कूटानि विदिग्व्यावीनि । मङ्गलावतीकूटस्य
दक्षिणपूर्वस्यां पञ्चमस्य विमलकूटस्योत्तरस्यां चतुर्थं देवकुरुकूटम् ४ । तस्य दक्षिणतः पञ्चमं विमलकूटम्
५ । तस्यापि दक्षिणस्यां दिशि षष्ठं काञ्चनकूटम् ६ । तस्यापि दक्षिणतो निषधस्योत्तरेण सप्तमं वशिष्ठ-
कूटम् ७ । तानि च कूटानि सर्वाण्यपि सर्वरत्नमयानि परिमाणतो हिमवत्कूटवत् परिज्ञावनीयानि ।
सिद्धायतने ( सिद्धकूटे ) सिद्धायतनं, शेषेषु च प्रासादावतंसकाः, तेषु च प्रासादावतंसकेषु मध्ये सप-
रिवारदेवस्य देव्या वा योग्यं सिंहासनं । सिद्धायतनप्रासादपरिमाणं च हिमवत्कूटवद्वेदितव्यम् । विम-
लकूटे सुवत्सा नाम देवी, काञ्चनकूटे वत्समित्रा, शेषेषु च कूटेषु कूटसदृशनामानो देवाः । ते च देवा
देव्यश्च हिमवत्कूटाधिपतय इव महर्द्धिकाः, राजधान्योऽप्येतेषां मेरोर्दक्षिणतो हिमवत्कूटाधिपतीना-
मिव वेदितव्याः ॥ १४१ ॥

सम्प्रति विद्युत्प्रभे यानि प्रागुद्दिष्टानि नव कूटानि तानि प्रतिपादयति—

सिद्धायणे य विज्जु—प्पभे य देवकुरुवंभकणगे या ।
सोवत्थी सीओया, सयंजलहरी नवमए उ ॥ १४२ ॥

व्याख्या—मेरोर्दक्षिणपश्चिमायां देवकुरूणां पश्चिमायां पद्मात्रिजयस्य पूर्वस्यां दिशि यो विद्युत्प्रभो

नाम वक्षस्कारपर्वतः, तत्रेमानि नव कूटानि, तद्यथा—मेरोर्दक्षिणपश्चिमायां दिशि मेरोः प्रत्यासन्नं प्रथमं सिद्धायतनकूटम् १। तस्य दक्षिणपश्चिमायां विद्युत्प्रभं नाम द्वितीयं कूटम् २। तस्य दक्षिणपश्चिमायां दिशि तृतीयं देवकुरुकूटम् ३। तस्यापि दक्षिणपश्चिमायां दिशि चतुर्थं ब्रह्मकूटम् ४। एतानि चत्वार्यपि कूटानि विदिग्भावीनि। ब्रह्मकूटस्य दक्षिणपश्चिमायां दिशि षष्ठस्य सौवस्तिकाभिधस्योत्तरतः पञ्चमं कनककूटं नाम कूटम् ५। तस्य दक्षिणतः षष्ठं सौवस्तिककूटम् ६। तस्यापि दक्षिणतः सप्तमं शीतोदाकूटम् ७। तस्यापि दक्षिणतोऽष्टमं शतज्वलकूटम् ८। एतेष्वष्टस्वपि कूटेषु यावद्वक्तव्यता सा हिमवत्कूटवत् परिभावनीया, नवरं पञ्चमे कनककूटे वारिषेणा नाम देवी, षष्ठे तु सौवस्तिके कूटे बलाहका, शेषेषु तु कूटेषु कूटसदृशनामानो देवाः, तेषां च देवदेवीनां महर्द्धिकत्वं हिमवत्कूटाधिपतीनामिव वेदितव्यम्, राजधान्योऽप्येतेषामष्टकूटाधिपतीनां मेरोर्दक्षिणतः प्रत्यवसेयाः। शतज्वलकूटस्य दक्षिणस्यां दिशि हरिकूटं नाम नवमं कूटम् ९। तच्च सप्रसादं हरिस्सहकूटमिव द्रष्टव्यम्, नवरमत्र हरिनामा देवः, तस्य राजधानी मेरोर्दक्षिणतः सा च चमरचञ्चानामराजधानीवत्प्रत्येया ॥ १४२ ॥

सम्प्रति यदुक्तं ( १३३ गाथायां ) "वक्खारगिरीसु चत्तारि" इति तदेतद्भावयन्नाह—

> उत्तरं विजयसनामा, दो कूडा तइय उ गिरीसनामा।
> चउत्थो य सिद्धकूडो, वक्खारगिरीस चत्तारि ॥ १४३ ॥

---

१ अयमपि गजदन्तनाम्नाऽन्यत्र प्रथितः २ 'प्रथमवर्जसप्तकूटाधिपतीनाम्' इति साधु।

व्याख्या—इह षोडश विजयान्तर्गता वक्षस्कारगिरयः, तद्यथा—अष्टौ सीतासीतोदयोरुत्तरतोऽष्टौ सीतासीतोदयोर्दक्षिणतः, तांश्चाग्रे स्वयमेव वक्ष्यति । उभयोः पूर्वपश्चिमयोः पार्श्वयोर्यौ विजयौ तत्सनाम्नी तत्सदृशनाम्नी द्वे कूटे । तृतीयं कूटं "गिरीसनाम त्ति" यदेव विवक्षितस्य वक्षस्कारस्य गिरेर्नाम तदेव तस्यापि तृतीयकूटस्य नामेत्यर्थः । चतुर्थं सिद्धकूटम् । इयमत्र भावना—सीतासीतोदयोरुत्तरदिग्वर्तिष्वष्टसु वक्षस्कारपर्वतेषु प्रथमं नीलवतो वर्षधरस्य प्रत्यासन्नं पूर्वदिग्वर्ति विजयनामकं कूटम् १ । तस्योत्तरतो द्वितीयं पूर्वदिग्भावि विजयनामकं कूटम् २ । तृतीयं तु यद् विवक्षितवक्षस्कारगिरेर्नाम तत्सनामकम् ३ । तस्याप्युत्तरतः चतुर्थं सिद्धायतनकूटम् ४ । तच्च शीताशीतोदयोः प्रत्यासन्नम् । एतेष्वपि शीताशीतोदादक्षिणदिग्भाविवक्षस्कारगिरिषु कूटवक्तव्यता हिमवत्कूटवत् द्रष्टव्या । कूटाधिपतीनां राजधान्यो मेरोर्दक्षिणतो वाच्याः । उपसंहारमाह—"वक्खारे"त्यादि, एवं षोडशसु वक्षस्कारगिरिषु प्रत्येकं चत्वारि कूटानि भवन्ति ॥ १४३ ॥

सम्प्रति नीलवति पर्वते यानि नव कूटानि प्रागुद्दिष्टानि तानि नामतो निर्दिशति—

सिद्धे य नीलवंते, पुव्वविदेहे य सीयकित्ती य ।
नारीकंतविदेहे, रम्मय उवदंसणे नवमे ॥ १४४ ॥

व्याख्या—नीलवति वर्षधरे अमूनि नव कूटानि, तद्यथा—पूर्वदिशि प्रथमं सिद्धं सिद्धायतनकूटम्

१। ततो द्वितीयं नीलवत्कूटम् २। तृतीयं पूर्वविदेहकूटम् ३। चतुर्थं शीताकूटम् ४। पञ्चमं कीर्तिदेवीकूटम् ५। षष्ठं नारीकान्ताकूटम् ६। सप्तममपरविदेहकूटम् ७। अष्टमं रम्यकूटम् ८। नवममुप(सु)दर्शनकूटम् ९। एतानि सर्वाण्यपि कूटानि पूर्वापरायतश्रेण्या व्यवस्थितानि। कूटविषया च वक्तव्यता निखिलाऽपि हिमवत्कूटवत्कर्तव्या। नवरं कूटाधिपतीनां राजधान्यो मेरोरुत्तरतः प्रत्यवसेयाः ॥ १४४ ॥

सम्प्रति रुक्मिसत्कान्यष्टौ कूटानि प्रतिपादयति—

सिद्धे य रुप्पि रम्मय, नरकंता बुद्धि रुप्पिकूला य।
हेरणवए मणिकं-चणे य रुप्पिम्मि अट्ठेए ॥ १४५ ॥

व्याख्या—अमूनि रुक्मिपर्वतेऽष्टौ कूटानि, तद्यथा—प्रथमं पूर्वस्यां दिशि सिद्धं सिद्धायतनकूटम् १। द्वितीयं रुक्मिकूटम् २। तृतीयं रम्यककूटम् ३। चतुर्थं नरकान्ताकूटम् ४। पञ्चमं बुद्धिदेवीकूटम् ५। षष्ठं रुक्मिकूलाकूटम् ६। सप्तमं हैरण्यवतकूटम् ७। मणिकाञ्चनकूटमष्टमं ८ इति। एतान्यपि कूटानि पूर्वापरायतश्रेण्या व्यवस्थितानि। एतद्विषया च वक्तव्यता समस्ताऽपि हिमवत्कूटवत्कर्तव्या। नवरमत्रापि राजधान्यः कूटाधिपतीनां मेरोरुत्तरतः प्रत्यवसेयाः ॥ १४५ ॥

सम्प्रति शिखरिसत्कान्येकादश कूटानि नामतो निर्दिशति—

सिद्धे य सिहरि कूडे, हेरण्णवए सुवन्नकूडे य ।
सिरिदेवि रत्तआव—त्तणे य तह लच्छिकूडे य ॥ १४६ ॥
रत्तावइ आवत्ते, गंधावइदेवि एरवयकूडे ।
तीगिच्छीकूडेऽवि य, इक्कारस होंति सिहरम्मि ॥ १४७ ॥

व्याख्या—शिखरिणि पर्वतेऽमून्येकादश कूटानि, तद्यथा—प्रथमं पूर्वदिशि सिद्धायतनकूटम् १ । द्वितीयं शिखरिकूटम् २ । तृतीयं हैरण्यवतकूटम् ३ । चतुर्थं सुवर्णकूलाकूटम् ४ । पञ्चमं श्रीदेवीकूटम् ५ । षष्ठं रक्तावर्तनकूटम् ६ । सप्तमं लक्ष्मीकूटम् ७ । अष्टमं रक्तावत्यावर्तनकूटम् ८ । नवमं गन्धावतीदेवीकूटम् ९ । दशममैरावतकूटम् १० । एकादशं तीगिञ्छिकूटम् ११ । एतान्यपि सर्वाणि कूटानि पूर्वापरायतश्रेण्या व्यवस्थितानि । वक्तव्यता चैतद्विषया समस्तापि क्षुल्लहिमवत्कूटवद्वेदितव्या, नवरमिहापि कूटाधिपतीनां राजधान्यो मेरोरुत्तरतः प्रत्येतव्या इति ॥ १४६–१४७ ॥

साम्प्रतमैरावते द्वात्रिंशत्सङ्ख्येषु च विजयेषु ये वैताढ्यास्तेषु कूटान्यभिधित्सुराह—

एरवए विजएसु य, दो दो जम्मुत्तरऊसरिनामा ।
वेयड्ढेसुं कूडा, सेसा ते चेव जे भरहे ॥ १४८ ॥



व्याख्या—ऐरावते क्षेत्रे विजयेषु च द्वात्रिंशत्सङ्ख्येषु ये वैताढ्यास्तेषु द्वे द्वे द्वितीयाष्टमरूपकूटे याम्योत्तरार्धसदृङ्नाम्नी यत् तस्य विवक्षितस्य क्षेत्रस्य संबन्धिनो याम्यार्धस्य दक्षिणार्धस्य नाम तन्नाम द्वितीयं कूटम् । यच्च तस्य विवक्षितस्य क्षेत्रस्य संबन्धिन उत्तरार्धस्य नाम तन्नामकमष्टमं कूटं। शेषाणि तु कूटानि तान्येव तन्नामकान्येव यन्नामकानि भरते भरतक्षेत्रवैताढ्ये प्राक् प्रतिपादितानि । तथाहि—ऐरावतक्षेत्रे प्रथमं सिद्धकूटम् १ । द्वितीयं दक्षिणैरावतार्धकूटम् २ । तृतीयं खण्डप्रपातगुहाकूटम् ३ । चतुर्थं माणिभद्रकूटम् ४ । पञ्चमं पूर्णभद्रकूटम् ५ । षष्ठं वैताढ्यकूटम् ६ । सप्तमं तमिस्रगुहाकूटम् ७ । अष्टममुत्तरैरावतार्धकूटम् ८ । नवमं वैश्रमणकूटम् ९ । उक्तं च—"सिद्धेरवए खंडग, मणिभद्दे पुन्नभद्द वेयड्ढे । तिमिसगुहुत्तरएरवय, वेसमणे कूड वेयड्ढे" ॥ १ ॥ तथा कच्छविजये प्रथमं सिद्धायतनकूटम् १ । द्वितीयं दक्षिणकच्छार्धकूटम् २ । तृतीयं खण्डप्रपातगुहाकूटम् ३ । चतुर्थं माणिभद्रकूटम् ४ । पञ्चमं पूर्णभद्रकूटम् ५ । षष्ठं वैताढ्यकूटम् ६ । सप्तमं तमिस्रगुहाकूटम् ७ । अष्टममुत्तरकच्छार्धकूटम् ८ । नवमं वैश्रमणकूटम् ९ । एवं सर्वेष्वपि विजयेषु भावनीयम् । उक्तं च—"सिद्धे कच्छे खंडग, मणिभद्दे पुन्नभद्द वेयड्ढे । तिमिसगुहुत्तरकच्छे, वेसमणे कूड कच्छम्मि ॥ १ ॥" इत्यादि । विजयैरावतवैताढ्यकूटवक्तव्यता च समस्ताऽपि प्रागुक्तभरतवैताढ्यकूटवद्वक्तव्या । नवरमैरावतवैताढ्ये शीताशीतोदयोः परेषु षोडशसु विजयवैताढ्येषु (च) कूटाधिपतीनां राजधान्यो मेरोरुत्तरतो वक्तव्याः, शीताशीतोदयोर्दक्षिणतश्च षोडशसु विजयवैताढ्येषु मेरोर्दक्षिणत इति ॥ १४८ ॥



सम्प्रति कूटानामधोमुखगमने पृथुलत्वपरिज्ञानाय करणमाह—

जत्थिच्छसि विक्खंभं, कूडाणं उवरित्तु सिहराहिं ।
तं दुगुणियमुस्सेह—ऊसंजुयं जाण विक्खंभं ॥ १४ए ॥

व्याख्या—कूटानां शिखरादवपत्य यत्र योजनेषु योजनेऽर्धयोजने गव्यूते वाऽतिक्रान्ते विष्कम्भं ज्ञातुमिच्छसि तत् तावत्परिमाणमतिक्रान्तं योजनादिकं द्विकेन भज्यतेऽर्धीक्रियत इत्यर्थः, अर्धीकृतं च तदुत्सेधार्धसंयुतं सकलकूटगतोत्सेधपरिमाणार्धसहितं तत्र विष्कम्भं जानीहि । तत्र सर्वेष्वपि किल वैताढ्येषु कूटानि सक्रोशानि षड् योजनान्युच्चैस्त्वेन, मूले सक्रोशानि षड् योजनान्यायामविष्कम्भाभ्यां, मध्ये देशोनानि पञ्च योजनानि, उपरि सातिरेकाणि त्रीणि योजनानि, तत्रेदं करणं परिभाव्यते—शिखरात् किल बुद्ध्या त्रीणि योजनानि क्रोशार्धाधिकान्यवतीर्णः, ततो योजनत्रयस्य क्रोशार्धाधिकस्य द्विकेन भागो दीयतेऽर्धीक्रियत इत्यर्थः, लब्धाः षट् क्रोशाः क्रोशस्य (च) पादः क्रो० ६ क्रोशपा० १, उत्सेधपरिमाणं च सामस्त्येन कूटस्य क्रोशाधिकानि षड् योजनानि, तस्यार्धं त्रीणि योजनानि क्रोशार्धाधिकानि, एतद्युक्तं पूर्वलब्धं क्रियते, जातानि सपादक्रोशन्यूनानि पञ्च योजनानि, एतावत्परिमाणो मध्यप्रदेशे विष्कम्भः, एवमन्यत्रापि प्रदेशे भावनीयम् । तथा क्षुल्लहिमवति कूटानि पञ्च योजनशतान्युच्चैस्त्वेन, मूले पञ्च योजनशतान्यायामविष्कम्भाभ्यां, मध्ये त्रीणि योजनशतानि पञ्चसप्तत्यधिकानि, उपरिष्टादर्ध-

तृतीयानि योजनशतानि । तत्रापीदं करणं परिभाव्यते—शिखरात् किल बुद्ध्याऽर्धतृतीयानि योजनशतान्यवतीर्णः, ततोऽर्धतृतीयशतानां द्विकेन भागो दीयतेऽर्धं क्रियत इत्यर्थः, लब्धं पञ्चविंशं शतं, सामस्त्येन कूटस्योत्सेधपरिमाणं पञ्च शतानि योजनानां तस्यार्धमर्धतृतीयानि योजनशतानि, तैः सहितं पूर्वं लब्धं विधीयते, आगतानि त्रीणि शतानि पञ्चसप्तत्यधिकानि ३७५, एतावद्भिमवत्कूटानां मध्यभागे विष्कम्भपरिमाणम् । एवमन्यत्रापि प्रदेशे भावनीयम् । एवं शेषेष्वपि कूटेषु करणमवतार्यम् ॥ १४९ ॥

साम्प्रतमूर्ध्वगमनेन पृथुत्वपरिज्ञाने करणमाह—

जहिँबसि विक्खंभं, मूलाउ उप्पइत्तु कूडाणं ।
तं दुगुणभइय मूलिल्ला, विसोहिए जाण विक्खंभं ॥ १५० ॥
ब जोयणे सक्कोसे, वेयड्ढनगाण हुंति कूडा उ ।
उच्चिठा विच्छिन्ना, तावइयं चेव मूलम्मि ॥ १५१ ॥
अद्धं से उवरितले, मज्झे देसूणगा भवे पंच ।
देसूणा वीसं पन्न—रस दस परिरउ जहासंखं ॥ १५२ ॥

व्याख्या—कूटानां मूलादुत्पत्य यत्र योजनेषु योजनेऽर्धयोजने गव्यूते चातिक्रान्ते सति विष्कम्भं ज्ञातु-

मिछसि तत्तावत्परिमाणमतिक्रान्तं योजनादिकं द्विकेन भज्यते अर्धं क्रियत इत्यर्थः । ततो 'मूलिल्ला' इति मूलगतान् विष्कम्भान् विशोधय, विशोधिते च सति यदुद्धरति तावत्परिमाणं तत्र विष्कम्भं जानीहि । तत्रेदं करणं वैताढ्यकूटेषु भाव्यते—तत्र मूलात् किल बुद्ध्या त्रीणि योजनानि क्रोशार्धाधिकानि ऊर्ध्वमतिक्रान्तः तस्य द्विकेन भागो दीयते अर्धं क्रियत इत्यर्थः लब्धाः षट् क्रोशाः क्रोशपादाधिकाः, एतावन्मूलविष्कम्भात् क्रोशाधिकषड्योजनप्रमाणाच्छोध्यते, शोधिते च सति तस्मिन् स्थितं शेषं पञ्च योजनानि सपादक्रोशन्यूनानि, एतावत्परिमाणो मध्यभागे वैताढ्यकूटेषु विष्कम्भः, एवमन्यत्रापि प्रदेशे भावनीयम् । एवं हिमवत्कूटादिष्वपि करणमवतार्यमिति ॥ १५०–१५१–१५२ ॥

सम्प्रति समस्तेषु वैताढ्येषु यानि सिद्धायतनकूटानि तेषु जिनभवनप्रमाणमाह—

कोसायामा कोसद्ध–वित्थिण्णा कोसमूणमुच्चिट्ठा ।
जिणभवणा वेयड्ढे–सु होंति आयाण कूडेसु ॥ १५३ ॥

व्याख्या—वैताढ्येषु भरतैरावतविजयसत्केषु यानि आयतनकूटानि सिद्धायतनकूटानि तेषु जिनभवनानि सर्वाण्यपि प्रत्येकं क्रोशायामानि क्रोशपरिमाणायामानि क्रोशार्धविस्तृतानि क्रोशार्धमात्रं विस्तीर्णानि एकं क्रोशमूनं किञ्चिन्न्यूनमुद्विद्धानि ॥ १५३ ॥

सम्प्रत्येतेषामेव द्वारमानमाह—

पंचेव धणुसयाइं, उव्विद्धा वित्थरेण तस्सऽद्धं ।
तावइयं च पवेसे, दारा तेसिं तउ तिदिसिं ॥ १५४ ॥

व्याख्या—तेषां वैताढ्येषु सिद्धायतनकूटभाविनां जिनभवनानां प्रतिजिनभवनं 'तिदिसिं ति' पूर्वदक्षिणोत्तररूपासु तिसृषु दिक्षु प्रत्येकमेकैकद्वारभावेन त्रीणि द्वाराणि भवन्ति, तानि च प्रत्येकं पञ्च धनुःशतानि उद्विद्धानि उच्चानि, तस्योच्चैस्त्वपरिमाणस्यार्धमर्धतृतीयानि धनुःशतानीत्यर्थः विस्तारेण, तथा तावत्कमेव अर्धतृतीयान्येव धनुःशतानि प्रवेशे ॥ १५४ ॥

अधुना वैताढ्येष्वेव शेषकूटवक्तव्यतामाह—

कूडेसु सेसएसु य, पासायवडिंसया मणभिरामा ।
उच्चत्तेणं कोसं, कोसऽद्धं होंति विछिन्ना ॥ १५५ ॥

व्याख्या—वैताढ्यसत्केषु सिद्धायतनकूटवर्जितेषु शेषेषु प्रासादावतंसका भवन्ति एकैकस्मिन् कूटे एकैकः प्रासादावतंसक इत्यर्थः ते च सर्वेऽपि मनोऽभिरामाः कनकमयतया सर्वरत्नमयतया वा मनोनयनप्रह्लादकारित्वात् । तथा सर्वेऽपि प्रत्येकं क्रोशमेकमुच्चैस्त्वेन क्रोशार्धं भवन्ति विस्तीर्णाः ॥ १५५ ॥

व ॥

तदेवमुक्ता वैताढ्यकूटवक्तव्यता, साम्प्रतं हरिकूटहरिस्सहबलकूटानां परिमाणमाह—

विज्जुप्पभि हरिकूडो, हरिस्सहो मालवंतवक्खारे ।
नंदणवणबलकूडो, उव्विद्धो जोयणसहस्सं ॥ १५६ ॥
मूले सहस्समेगं, मज्झे अद्धट्ठमा सया हुंति ।
उवरिं पंच सयाइं, विच्छिन्ना सव्वकणगमया ॥ १५७ ॥

व्याख्या—विद्युत्प्रभनामके देवकुरूणां पश्चिमदिग्भागे मेरोर्दक्षिणापरकोणस्थे निषधलग्ने गजदन्ते पर्वते हरिकूटं यन्नाम निषधप्रत्यासन्नं नवमं कूटं, तथोत्तरकुरूणां पूर्वदिशि मेरोरुत्तरपूर्वस्यां दिशि वर्तमाने नीलवद्वर्षधरपर्वतलग्ने माल्यवति वक्षस्कारपर्वते नीलवतः प्रत्यासन्नं यन्नवमं हरिस्सहकूटं नाम कूटं, यच्च मेरोः प्रथममेखलायां नन्दनवने उत्तरपूर्वस्यां दिशि वक्ष्यमाणस्वरूपं बलकूटं नाम कूटं, एतानि त्रीण्यपि कूटानि कनकमयानि प्रत्येकं योजनसहस्रमुद्विद्धानि उच्चानि १००० । तथा मूले सहस्रमेकं विस्तीर्णानि । उपलक्षणमेतत् दीर्घाणि च वृत्तत्वात्त्रयाणामप्येषां कूटानां । तथा मध्ये मध्यभागेऽर्धाष्टमानि शतानि पञ्चाशदधिकानि सप्त शतानि विस्तीर्णानि भवन्ति । उपरि शिरोभागे पञ्च शतानि—पञ्च योजनशतानि । आह—नन्दनवने बलकूटं, नन्दनवनं च पञ्चयोजनशतविस्तीर्णायां मेरोः प्रथम-

मेखलायां, ततः कथं तत्त्र माति ? उच्यते—इह बलकूटेन पञ्च योजनशतानि नन्दनवनसत्कानि रुद्धानि पञ्च योजनशतानि पुनर्मेरोर्बहिराकाशे, ततो न कश्चिद्दोषः ॥ १५६–१५७ ॥

उक्तं च—

नंदणवणरुंधित्ता, पंचसए जोयणाइं नीसरिउं ।
आयासे पञ्च सए, रुंभित्ता वा(ठा)इ बलकूडो ॥ १५८ ॥

एवं हरिकूटहरिस्सहकूटयोरपि निजनिजाश्रयगिर्योर्यथारूपमुभयपार्श्वे आकाशमवगाह्य स्थितत्वं परिभावनीयमिति ॥ १५८ ॥

सम्प्रत्येतेषामेव त्रयाणां हरिकूटादीनां कूटानां वृत्ततया तुल्यायामविष्कम्भत्वान्मूले मध्ये उपरि च परिधीनाह—

इगतीस जोयणसए, बासट्ठे मूलपरिरउ तेसिं ।
तेवीस सए बावत्तरे उ मझे परिरउ तेसिं ॥ १५९ ॥
उवरिं पन्नरस सए, इगसीए साहिए परिरएणं ।

व्याख्या—तेषां त्रयाणामपि हरिकूटादीनां मूले परिरय एकत्रिंशद्योजनशतानि द्वाषष्टानि द्वाषष्ट्यधिकानि ३१६२ । मध्ये सन्ति एषां त्रयाणां कूटानां परिरयस्त्रयोविंशतिशतानि द्वासप्ततानि द्विसप्तत्य-

धिकानि २३७२। उपरि शिरोभागे परिरएणं ( परिरयः ) पञ्चदश शतानि एकाशीत्यधिकानि १५८१। अमीषां च परिधीनां गणितपरिभावनं पूर्वोक्तकरणवशात्स्वयमेव कर्तव्यम् ॥

सम्प्रति शेषकूटानामुच्चत्वादिमानमाह—

सेसनगाणं कूडा, पंच सए हौंति उव्विद्धा ॥ १६० ॥
तावइयं विच्छिन्ना, मूले तस्सद्धमेव उवरितले ।
तिन्नेव जोयणसए, मज्झे पणसत्तरा हुंति ॥ १६१ ॥

व्याख्या—शेषाणां वैताढ्यरहितानां नगानां वर्षधरादिपर्वतानां क्षुल्लहिमवतादीनां यानि कूटानि हरिस्सहहरिवलकूटवर्जितानि सर्वाण्यपि उद्विद्धान्युच्चानि भवन्ति पञ्च शतानि—पञ्च योजनशतानि। तथा तावत्कं तावत्परिमाणं पञ्च योजनशतानीत्यर्थः मूले आदौ विस्तीर्णानि। उपरितले शिरोभागे तस्य मूलभाविनो विस्तारस्यार्धमर्धतृतीयानि योजनशतानीत्यर्थः विस्तीर्णानि २५०। मध्ये मध्यभागे विस्तीर्णानि भवन्ति त्रीणि योजनशतानि पञ्चसप्ततानि पञ्चसप्तत्यधिकानि ३७५ ॥ १६१ ॥

सम्प्रति तेषामेव मूले मध्ये उपरि च परिधिपरिमाणमाह—

पन्नरसेक्कासीए, किंचिहिएक्कारसे च छलसीए ।
सत्त सए क्काणउए, किंचूणे परिरउ कमसो ॥ १६२ ॥

व्याख्या—पञ्चदश शतानि एकाशीत्यधिकानि १५८१ योजनानां मूले परिरयो, मध्यभागे योजनानामेकादश शतानि षडशीत्यधिकानि किञ्चिन्न्यूनानि ११८६ परिरयः, उपरि शिखरभागे सप्त शतानि एकनवत्यधिकानि किञ्चिदूनानि ७९१ परिक्षेपः, क्रमश इति मूले मध्ये उपरीति क्रमेण । अत्रापि परिध्यानयनं प्रागुक्तकरणवशात् स्वयं कर्तव्यम् ॥ १६२ ॥

अधुना क्षुल्लहिमवदादिसत्केषु सिद्धायतनकूटेषु जिनभवनप्रमाणमाह—

जिणभवणा विच्छिन्ना, पणवीसायामओ य पन्नासं ।
छत्तीसइमुव्विद्धा, सिद्धसनामेसु कूडेसु ॥ १६३ ॥

व्याख्या—'सिद्धसनामेसु' सिद्धमित्यनेन पदैकदेशे पदसमुदायोपचारात् सिद्धायतनमित्यनेन नाम्ना यानि सनामानि नामयुक्तानि कूटानि तेषु सिद्धायतनकूटेष्वित्यर्थः जिनभवनानि सर्वाण्यपि प्रत्येकं पञ्चविंशतिर्योजनानि विस्तीर्णानि पञ्चाशद्योजनान्यायामतो दैर्घ्येण षट्त्रिंशद्योजनान्युद्विद्धानि उच्चानि ॥ १६३ ॥

साम्प्रतमेतेषामेव जिनभवनानां द्वारमानमाह—

चत्तारि जोयणाइं, विक्खंभपवेसओ दुगुणमुच्चा ।
उत्तरदाहिणपुव्वेण, तेसिं दारा तओ होंति ॥ १६४ ॥

व्याख्या—हिमवदादिसत्कसिद्धायतनकूटभाविनां जिनभवनानां प्रतिजिनभवनमुत्तरदक्षिणपूर्वरूपासु तिसृषु दिक्षु प्रत्येकमेकैकद्वारभावेन त्रीणि द्वाराणि भवन्ति, तानि च प्रत्येकं चत्वारि योजनानि विष्कम्भतः, चत्वारि योजनानि प्रवेशतः, 'दुगुणमुच्चा' इति अष्टौ योजनान्युच्चानि इति ॥ १६४ ॥

सम्प्रति क्षुल्लहिमवदादिवर्षधरवक्षस्कारगिरिषु सिद्धायतनकूटवर्जितेषु शेषेषु कूटेषु यदस्ति तत्प्रतिपिपादयिषुराह—

कूडेसु सेसएसु य, बावट्ठी जोयणाणि अद्धं च ।
उव्विद्धा पासाया, तस्सद्धं होंति विच्छिन्ना ॥ १६५ ॥

व्याख्या—क्षुल्लहिमवदादिषु वर्षधरवक्षस्कारगिरिषु सिद्धायतनकूटवर्जितेषु शेषेषु कूटेषु प्रासादाः प्रासादावतंसका भवन्ति एकैकस्मिन् कूटे एकैकप्रासादावतंसक इत्यर्थः, ते च प्रासादाः प्रत्येकं द्वाषष्टिर्योजनानि अर्धं च योजनस्योद्विद्धा उच्चाः, तस्योच्चैस्त्वपरिमाणस्यार्धं सक्रोशान्येकत्रिंशद्योजनानीत्यर्थः विस्तीर्णानि भवन्ति, दैर्घ्येणाप्येतावत्परिमाणा वेदितव्याः, समचतुरस्रत्वात्तेषामिति ॥ १६५ ॥

अधुना कूटानां वर्णविभागमाह—

मज्झे वेयड्ढाण उ, कणगमया तिन्नि तिन्नि कूडाउ ।
सेसा पव्वयकूडा, रयणमया होंति नायव्वा ॥ १६६ ॥

व्याख्या—वैताढ्यादीनां भरतैरावतविजयभाविनां सत्केषु नवसु कूटेषु मध्ये यानि सर्वमध्यमानि त्रीणि त्रीणि कूटानि तानि कनकमयानि, शेषाणि पुनः सर्वाण्यपि सर्वत्र कूटानि हरिस्सहहरिकूटबल-कूटवर्जितानि रत्नमयानि सर्वरत्नमयानि भवन्ति इति ज्ञातव्यानि(व्यम्) ॥ १६६ ॥

सम्प्रति पर्वतेषु सिद्धायतनकूटानां स्थानं प्रतिपिपादयिषुराह—

वेयड्ढाइसु पुव्वेण, कुरुगिरीसु सुदंसणो जत्तो ।
सीयासीओयाओ, जत्तो वक्खारजिणकूडा ॥ १६७ ॥

व्याख्या—वैताढ्यादिषु भरतैरावतविजयसत्केषु वैताढ्येषु, आदिशब्दात् क्षुल्लहिमवन्महाहिमवन्नि-षधनीलरुक्मिशिखरिषु जिनकूटानि सिद्धायतनकूटानि पूर्वेण पूर्वस्यां दिशि कुरुगिरिषु देवकुरूत्तरकुरु-गिरिषु विद्युत्प्रभसौमनसमाल्यवद्गन्धमादननामकेषु वक्षस्कारगिरिषु यतो यस्यां दिशि सुदर्शनो मेरुस्तत्र सिद्धायतनकूटानि, किमुक्तं भवति ? यत्र मेरुस्तत्र सिद्धायतनकूटानि, तथा विजयसंबन्धिषु षोडशसु वक्षस्कारगिरिषु यतो यस्यां दिशि शीताशीतोदे तत्र सिद्धायतनकूटानि ॥ १६७ ॥

तदेवं कृता वैताढ्यवर्षधरवक्षस्कारगिरिषु कूटप्रमाणा ( प्ररूपणा ), सम्प्रति ये क्षुल्लहिमवदादिषु वर्षधरपर्वतेषु पद्मादयो ह्रदास्तन्नामानि प्रतिपादयति—

पउमे य महापउमे, तिगिछी केसरी दहे चेव ।
हरए महपुंडरिए, पुंडरिए चेव य दहाओ ॥ १६८ ॥

व्याख्या—इह येन क्रमेण प्राक् सूरिणा 'हिमवन्त पव्वया' इत्यादिना क्रमेण वर्षधरपर्वता निर्दिष्टास्तेनैव क्रमेण तदुपरिस्थायिनोऽपि पद्मादयो ह्रदा निरदिक्षत, यथा क्षुल्लहिमवत उपरि बहुमध्यदेशभागे पद्मनामा ह्रदः, महाहिमवत उपरि महापद्मनामा, निषधपर्वतस्योपरि 'तिगिञ्छि ति' तिगिञ्छिनामा, नीलवत उपरि केसरी केसरिनामा, रुक्मिणो वर्षधरपर्वतस्योपरि महापुण्डरीकः, शिखरिण उपरि पुण्डरीकः। एते च ह्रदाः सर्वेऽपि प्रत्येकं पद्मवरवेदिकया वनखण्डेन च समन्ततः परिक्षिप्ताः, तथा पूर्वापरायता दक्षिणोत्तरविस्तीर्णाः, तथा सर्वेऽपि वज्रमयतला वज्रमयोभयपार्श्वा रजतमयकूलाः सुवर्णमयवालुकाः। तथा पद्मह्रदे तत्र तत्र प्रदेशे बहूनि शतपत्राणि सहस्रपत्राणि च विद्यन्ते, पद्मस्योपरि निविष्टा च तत्र श्रीदेवता परिवसति, तेन (स) पद्मह्रद इत्याख्यायते। महापद्मह्रदे महाप्रमाणानि बहूनि शतपत्राणि सहस्रपत्राणि च सन्ति, महाप्रमाणे च पद्मेऽवस्थिता तत्र ह्रीदेवता परिवसति तेन स महापद्म इति प्रसिद्धिमगमत्। तथा तिगिञ्छिह्रदे मनोहारितिगिञ्छिपरिकलितानि शतपत्राणि सहस्रपत्राणि वा (च) बहूनि (सन्ति), तेनासौ तिगिञ्छीति विख्यातः। केसरिह्रदे बहूनि शतपत्राणि सहस्रपत्राणि वा (च) नयनसुभगकेसरपरिकलितानि विद्यन्ते, तेन स केशरीत्यभिधीयते। महापुण्डरीकह्रदे महाप्रमाणानि पुण्डरीकाणि सन्ति, तेन स महापुण्डरीक इत्याख्यातः। पुण्डरीकह्रदे च सामान्येन बहूनि पुण्डरीकाणि सन्ति, तेन स पुण्डरीक इति ॥-१६८॥

सम्प्रत्यमीषामेव ह्रदानां दीर्घ (दैर्घ्य)विष्कम्भावाह—

जोयणसहस्स दीहा, बाहिरहरया तयऊविछिन्ना ।
दो दो अभिंतरया, दुगुणा दुगुण प्पमाणेणं ॥ १६९ ॥

व्याख्या—बाह्यौ शेषह्रदबहिर्वर्तिनौ पद्मपुण्डरीकाख्यौ यौ ह्रदौ तौ योजनसहस्रदीर्घौ योजनसहस्रमेकं दीर्घौ, योजनसहस्रार्धविस्तीर्णौ पञ्च योजनशतानि विस्तीर्णावित्यर्थः । द्वौ द्वावभ्यन्तरौ पुनर्द्विगुणद्विगुणौ प्रमाणतः प्रतिपत्तव्यौ । किमुक्तं भवति ? पद्मपुण्डरीकाख्ययोर्ह्रदयोर्यावभ्यन्तरौ महापद्ममहापुण्डरीकाख्यौ तौ पद्मपुण्डरीकाख्यह्रदापेक्षया द्विगुणप्रमाणौ, तद्यथा—द्वे योजनसहस्रे आयामतो योजनसहस्रमेकं विष्कम्भतः तयोरपि महापद्ममहापुण्डरीकयोर्ह्रदयोर्यावभ्यन्तरौ ह्रदौ तिगिञ्छिकेसर्याख्यौ तौ महापद्ममहापुण्डरीकापेक्षयाऽपि द्विगुणप्रमाणौ, तद्यथा—चत्वारि योजनसहस्राणि आयामतो द्वे योजनसहस्रे विष्कम्भतः ॥ १६९ ॥

सम्प्रति याः पद्मादिह्रदाधिपतयो देवतास्ताः प्रतिपादयति—

एएसु सुरवहूउ, वसंति पलिउवमठिईयाउ ।
सिरिहिरिधिइकित्तीउ, बुद्धी लच्छी सनामाउ ॥ १७० ॥

व्याख्या—एतेषु पद्मादिषु पुण्डरीकपर्यवसानेषु षट्सु ह्रदेषु महर्द्धिकाः पल्योपमस्थितयः सुरवध्वो

देव्यः परिवसन्ति । महर्द्धिकत्वं चासां स्वयमेवाग्रे सूत्रकृज्ञावयिष्यति । किंनामानस्ता इत्याह—श्रीह्री-धृतिकीर्तिबुद्धिलक्ष्मीसनामानः श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्मीरूपैर्नामभिः सनामकाः । किमुक्तं भवति ? पद्महृदे वसति आधिपत्येन श्रीनामा देवता, महापद्मे ह्रीनामा, तिगिञ्छिहृदे धृतिनामा, केसरिहृदे कीर्ति-नामा, महापुण्डरीकहृदे बुद्धिनामिका, पुण्डरीकहृदे लक्ष्मीनामा । एताश्च किल सर्वा अपि भवनपति-निकायान्तर्वर्तिन्यो वेदितव्याः, पल्योपमस्थितिकत्वात्, व्यन्तरीणां चैतावत्याः स्थितेरभावात् ॥ १७० ॥

सम्प्रत्येतेभ्यो हृदेभ्यो या विनिर्गता नद्यस्तन्नामानि प्रतिपादयति—

गंगासिंधू तह रो–हियंसरोहियनई य हरिकंता ।

हरिसलिला सीओया, सत्तेया हुंति दाहिणओ ॥ १७१ ॥

व्याख्या—मेरोर्दक्षिणतः सप्तैता महानद्यो भवन्ति, तद्यथा—गङ्गा सिन्धुः एते द्वे भरतक्षेत्रे, रोहितांशा रोहिता एते द्वे हैमवतक्षेत्रे, हरिकान्ता हरिसलिला एते द्वे हरिवर्षक्षेत्रे, शीतोदा एषा अपरविदेहेषु ॥ १७१ ॥

तथा—

सीया य नारिकंता, नरकंता चेव रुप्पिकुला य ।

सलिला सुवन्नकूला, रत्तवई रत्त उत्तरओ ॥ १७२ ॥

व्याख्या—मेरोरुत्तरत इमाः सप्त महानद्यः। तद्यथा—शीता एषा पूर्वविदेहेषु, नारीकान्ता नरकान्ता एते द्वे रम्यके क्षेत्रे, रुक्मिकूला सुवर्णकूला एते द्वे हैरण्यवते क्षेत्रे, रक्तावती रक्ता एते द्वे ऐरावते क्षेत्रे ॥ १७२ ॥

सम्प्रति हैमवतादिक्षेत्रत्राविवृत्तवैताढ्यवक्तव्यतां विवक्षुराह—

हेमवए रन्नवए, हरिवासे रम्मए य रयणमया ।

चत्तारि वट्टवेयड्ढ—पवया पल्लयसरिछा ॥ १७३ ॥

व्याख्या—जम्बूद्वीपे वृत्तवैताढ्या वृत्ता वैताढ्या इति सामान्यनामभिः प्रसिद्धाश्चत्वारः पर्वताः। तद्यथा—एको हैमवते द्वितीयो हैरण्यवते तृतीयो हरिवर्षे चतुर्थो रम्यके। अथ कस्मादेते वृत्ता वैताढ्या इति प्रसिद्धाः? उच्यते—इह वैताढ्यशब्दस्यैवं निरुक्तिकारा व्युत्पत्तिमाचक्षते—स्वावासक्षेत्रस्य द्वे अर्धे करोतीति वैताढ्यः, पृषोदरादित्वाच्छब्दरूपनिष्पत्तिः। तथा चैतेऽपि स्वस्य क्षेत्रस्य हैमवतादेर्बहुमध्यदेशभागवर्तित्वात् द्वे द्वे अर्धे कुर्वन्ति, ततो वैताढ्या इत्युच्यन्ते, ते च वृत्ताकाराः, न भरतैरावतविजयवैताढ्यवत् पूर्वापरायताः, तेन वृत्तवैताढ्या इति प्रसिद्धाः। एते च चत्वारोऽपि रत्नमयाः सर्वरत्नमयाः, तथा पल्यकसदृक्षाः वंशदलनिर्मापितलाटदेशप्रसिद्धधान्याधारपल्यकसमानाः, सर्वत्र समत्वात्। केचित् रजतमया इति पठन्ति, तेषां जम्बूद्वीपप्रज्ञप्त्या सह विरोधः, जम्बूद्वीपप्रज्ञप्तावेतेषां रत्नमयात्वि-

धानात्, तथा च तद्ग्रन्थः—"कहणं भंते हेमवए वासे सद्दावइ नामं वट्टवेयड्ढे पन्नत्ते ? गोयमा ! रोहियाए महानईए पुरत्थिमेणं रोहियंसाए महानईए पच्चत्थिमेणं हेमवए वासस्स बहुमज्झदेसभाए एत्थ णं सद्दावइ नामं वेयड्ढपव्वए पन्नत्ते एगं जोयणसहस्सं उड्ढं उच्चत्तेणं अड्ढाइज्जाइं जोयणसयाइं उव्वेहेणं सव्वत्थ समे पल्लगसंठाणसंठिए एगं जोयणसहस्सं आयामविक्खंभेणं, तिन्नि जोयणसहस्साइं एगं च बावट्ठं जोयणसयं किंचि विसेसाहियं परिक्खेवेणं सव्वरयणामए अच्छे" इत्यादि ॥ १७२ ॥

सम्प्रत्येतेषां नामान्याह—

## सद्दावइ वियडावई, गंधावइ मालवंत परिया य ।

व्याख्या—इह प्रागुक्तगाथोपन्यस्तक्षेत्रक्रमेणामूनि नामानि द्रष्टव्यानि । तद्यथा—हैमवते शब्दापाती, हैरण्यवते विकटापाती, हरिवर्षे गन्धापाती, रम्यके माल्यवानिति । जम्बूद्वीपप्रज्ञप्तौ पुनर्विकटापाती हरिवर्षे, गन्धापाती रम्यके, माल्यवान् हैरण्यवतेऽभिहितः । तथा च तद्ग्रन्थः—"कहिणं भंते ! हरिवासे वियडावईनामं वट्टवेयड्ढे पन्नत्ते ? गोयमा ! हरिसलिलाए महानईए पच्चत्थिमेणं हरिकंताए महानईए पुरत्थिमेणं हरिवासस्स बहुमज्झदेसभागे इत्थ णं वियडावई नामं वट्टवेयड्ढे पन्नत्ते" । तथा—"कहिणं भंते रम्मए वासे गंधावई नाम वट्टवेयड्ढे पन्नत्ते ? गोयमा ! नरकंताए पच्चत्थिमेणं नारीकंताए पुरत्थिमेणं रम्मयवासस्स बहुमज्झदेसभागे गंधावई नामं वट्टवेयड्ढे पन्नत्ते" । तथा—"कहिणं भंते हिरण्ण-

वए वासे मालवंतपरियाए नाम वट्टवेयड्ढे पन्नत्ते ? गोयमा ! सुवन्नकूलाए पच्चच्छिमेणं रुप्पिकूलाए पुरच्छिमेणं हेरण्णवासस्स बहुमज्झदेसे एगे मालवंतपरियाए नामं वट्टवेयड्ढे पन्नत्ते" इति । तत्त्वं पुनः केवलिनो विदन्ति ॥

सम्प्रत्येतेषामेव वृत्तवैताढ्यानामुच्चत्वादिमानमाह—

जोयणसहस्समुच्चा, तावइयं चेव विच्छिन्ना ॥ १३४ ॥
इगतीस जोयण सए, बावट्ठे परिरएण नायव्वा ।

व्याख्या—एतेऽनन्तरोक्ताश्चत्वारोऽपि वृत्तवैताढ्याः प्रत्येकं योजनसहस्रमुच्चाः तावत्कमेतावत्परिमाणमेव योजनसहस्रमेवेत्यर्थः विस्तीर्णाः । तथा प्रत्येकं परिरयेण परिक्षेपेण एकत्रिंशद्योजनशतानि द्वाषष्ट्यधिकानि ज्ञातव्याः । एतेषां चोपरि प्रत्येकमेकैकप्रासादावतंसकः, ते च प्रासादावतंसकाः प्रत्येकं सार्धानि द्वाषष्टियोजनानि उच्चैस्त्वेन सक्रोशानि एकत्रिंशद्योजनानि आयामविष्कम्भाभ्यां, तेषु च प्रासादेषु मध्ये स्वस्वाधिपतिदेवयोग्यं सपरिवारं सिंहासनम् ॥

सम्प्रति तेषामेव वृत्तवैताढ्याधिपतीनां नामान्याह—

साई अरुणे पउमे, पहास देवा अहिवई एसिं ॥ १३५ ॥

व्याख्या—एषां शब्दापात्यादीनां वृत्तवैताढ्यानामधिपतयो यथाक्रमं स्वातिः अरुणः पद्मः प्रभासः ।

तद्यथा—शब्दापातिनो वृत्तवैताढ्यस्याधिपतिः स्वातिनामा देवः, विकटापातिनोऽरुणनामा, गन्धापातिनः पद्मनामा, माल्यवतः प्रभासनामा इति । एते चत्वारोऽपि प्रत्येकं पल्योपमस्थितयः प्रत्येकं च चतुर्णामिन्द्रसामानिकसहस्राणां चतसृणामग्रमहिषीणां सपरिवाराणां तिसृणां पर्षदां सप्तानामनीकानां सप्तानामनीकाधिपतीनामन्येषां च स्वस्वराजधानीवास्तव्यानां बहूनां देवानां देवीनां चाधिपतयः । शब्दापातिस्वामिनः स्वातिदेवस्य विकटापातिस्वामिनश्चारुणस्य प्रत्येकं राजधानी मेरोर्दक्षिणतस्तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्यापरस्मिन् जम्बूद्वीपे द्वीपे द्वादश योजनसहस्राण्यवगाह्य परतो यथास्थानं वेदितव्या। इतरयोस्तु द्वयोर्मेरोरुत्तरत इति ॥ १७५ ॥

सम्प्रति दक्षिणभरतार्धगतायाः शाश्वतनगर्याः स्थानप्रमाणे प्रतिपादयति—

चोद्दसहियं सयं जो–यणाण एक्कारसेव य कलाउ ।
वेयड्ढदाहिणेणं, गंतुं लवणस्स उत्तरउ ॥ १७६ ॥
नव जोयण विच्छिन्ना, बारस दीहा पुरी अउज्झ त्ति ।
जम्मद्धभरहमज्झे, एरवयद्धेऽवि एमेव ॥ १७७ ॥

व्याख्या—वैताढ्याद्दक्षिणतो दक्षिणस्यां दिशि लवणस्य लवणसमुद्रस्योत्तरस्यां दिशि प्रत्येकं चतुर्दशाधिकं शतं चतुर्दशाधिकं शतं योजनानामेकादशैकादश च कला एकोनविंशतिभागरूपा अतिक्रम्या-

भान्तरे दक्षिणभरतार्धमध्यभागेऽयोध्या नाम पुरी भवति, सा च नवयोजनविस्तीर्णा द्वादशयोजनदी-र्घेति । "एरवयऽद्धेऽवि एमेव त्ति" एवमैरावतार्धेऽपि वैताढ्यात् परतो लवणसमुद्रादर्वाक् प्रत्येकं चतुर्दशाधिकं शतं चतुर्दशाधिकं शतं योजनानामेकादशैकादश च कला अतिक्रम्यात्रान्तरे ऐरावतार्धबहुमध्यभागे नवयोजनविस्तीर्णा द्वादशयोजनायामाऽयोध्या नाम पुरी वेदितव्या ॥ १७६–१७७ ॥

सम्प्रति भरतवैताढ्यवक्तव्यतामाह—

पणुवीसइमुव्विद्धो, पन्नासं जोयणाणि विछिन्नो ।

वेयड्ढो रययमओ, भारहखित्तस्स मझम्मि ॥ १७८ ॥

व्याख्या—भरतक्षेत्रमध्ये वैताढ्यो नाम पर्वतः द्वे अर्धे भरतक्षेत्रस्य करोतीति वैताढ्यः पृषोदरादयः (३–२–१५५) इति वचनतो रूपनिष्पत्तिः । यदि वा वैताढ्यनामा देवस्तत्र पल्योपमस्थितिको महर्द्धिक आधिपत्यं परिपालयति, तेन तद्योगाद्वैताढ्य इत्युच्यते । उक्तं च—"से केणट्ठेणं भंते एवं वुच्चइ वेयड्ढे पव्वए वेयड्ढे पव्वए ? गोयमा ! वेयड्ढे पव्वए भरहवासं दुहा विभयमाणे चिट्ठइ, तं जहा—दाहिणभरहद्धं उत्तरभरहद्धं च वेयड्ढनामगो य एत्थ देवे महिड्ढीए जाव पलिओवमठिईए परिवसति, से एएणट्ठेणं गोयमा ! एवं वुच्चइ वेयड्ढे पव्वते वेयड्ढे पव्वते" इति । स च रजतमयो रूप्यमयः, पञ्चविंशतियोजनान्युद्विद्ध उच्चः, सक्रोशानि षड् योजनानि भूमाववगाढः, पञ्चाशद्योजनानि विस्तीर्णः । तस्य च वैताढ्यस्य

पर्वतस्य दक्षिणपार्श्वे उत्तरपार्श्वे च प्रत्येकं पद्मवरवेदिका वनखण्डश्च. तत्रैकैका पद्मवरवेदिका द्वे गव्यूते उच्छ्रिता, पञ्च धनुःशतानि विस्तीर्णा, वैताढ्यप्रमाणा, एकैकोऽपि च वनखण्डो देशोने द्वे योजने विस्तीर्णः, आयामतो वैताढ्यपरिमाणः ॥ १९८ ॥

साम्प्रतमेतद्गतगुहावक्तव्यतामाह—

पन्नास जोयणाइं, दीहाउ अठ जोयणुच्चाउ ।
वारस विछाराउ, वेयढ्ढगुहाउ दो होंति ॥ १९९ ॥
तिमिसगुहा अवरेणं, पुव्वेण नगस्स खंडगपवाया ।
चउ जोयण विछिन्ना, तद्दुगुणुच्चा य सिं दारा ॥ २०० ॥

व्याख्या—वैताढ्यस्य पर्वतस्य द्वे गुहे भवतः । तद्यथा—ति (त)मिस्रगुहा खण्डप्रपातगुहा च । तत्र नगस्य वैताढ्यस्य पर्वतस्यापरेण पश्चिमे भागे ति(त)मिस्रगुहा, पूर्वेण पूर्वभागे खण्डप्रपाता खण्डप्रपाताभिधाना गुहा । ते च द्वे अपि दक्षिणोत्तरायते पूर्वापरविस्तीर्णे प्रत्येकं पञ्चाशद्योजनानि दीर्घे, अष्टौ योजनान्युच्चैः, द्वादश योजनानि विस्तीर्णे, द्वे अपि च प्रत्येकं दक्षिणपार्श्वे उत्तरपार्श्वे च वज्रमयकपाटे सदा संमीलितकपाटयुगले, अत एव चन्द्रसूर्यप्रभाप्रवेशासंभवतः सततमन्धकारगुपिले । केवलं यदा चक्रवर्ती परमुत्तरभरतार्धं विजिगीषुः सेनापतिना दण्डरत्नेन कपाटयुगलं घातयति तदा ते कपाटे पश्चा-

न्नागेन प्रत्यवष्वष्केते । तयोश्च गुहयोर्द्वाराणि प्रत्येकं चत्वारि योजनानि विस्तीर्णानि, तद्विगुणान्यष्टौ योजनानीत्यर्थः उच्चानि, एकैकस्मिन् द्वारे द्वे द्वे कपाटे द्वे द्वे योजने विस्तीर्णे अष्टावष्टौ च योजनान्युच्चे, एकैकस्य द्वारकपाटस्य पश्चाद्भागेन प्रत्यवष्वष्कमाणस्यावष्टम्नजूतश्चतुर्योजनायामविष्कम्नस्तूपस्तोद्दक इत्यर्थः । इह यदा चक्रवर्ती परमुत्तरन्नरतार्धं विजिगीषुस्ति (स्त)मिस्रगुहायां मध्ये प्रवेशं कर्तुमिच्छति तदा यत्प्रधानं हस्तिरत्नं, तस्य स्कन्धमारोहति, आरुह्य च हस्तिनो दक्षिणे कुम्नस्थले मणिरत्नं निवध्नाति, तद्धि निरुपमप्रन्नासमुदयपरिकलितम्, अतो गुहाया मध्ये प्रविशतस्तत्प्रन्नावात् समन्ततः प्रकाशो न्नवति, महाप्रन्नावं च तत्, तथाहि—यस्य मूर्धनि वध्यते तद्रत्नं तस्य न किमपि दुःखमुपजायते, रोगोऽपि यदि पूर्वमुत्पन्न आस्ते ततस्तत्प्रन्नावतः संप्रहाणिमुपगच्छति, नाप्यन्यो रोगः समुद्भवति, उपसर्गा अपि दिव्यमानुषतिर्यग्न्नवा न प्रन्नवन्ति, सङ्ग्रामेऽपि प्रविष्टः पुरुषस्तेन मणिरत्नेन न्नूषितशिराः शस्त्रैरवध्यो न्नवति सर्वन्नयविप्रमुक्तश्च जायते, ततो मा न्नूत्कोऽपि दिव्य उपसर्गो न्नयं दुःखं वा हस्तिनः प्रकाशश्च सर्वतो न्नूयादिति तस्य शिरसि मणिरत्नं निवध्यते । ततो मणिद्योतितमार्गे गुहाया मध्ये प्रविशन् सकलपाश्चात्यस्कन्धावारप्रकाशकरणाय पूर्वदिक्कटके आदौ[1] योजनं मुक्त्वा काकिणीरत्नेनोत्सेधाङ्गुलप्रमितपञ्चधनुःशतप्रमाणायामविष्कम्नं प्रथमं मण्डलमादित्यमण्डलप्रतिममालिखति, ततः पश्चिम-

---

१ आदि योजनमित्यपि.

दिक्कटके तत्संमुखं द्वितीयं, पूर्वदिक्कटकगतात्प्रथमान्मण्डलात्प्रमाणाङ्गुलप्रमितेन योजनेनोत्तरतस्तृतीयं, ततस्तत्संमुखं पश्चिमदिग्भागे चतुर्थं, एवं योजनान्तरितानि पूर्वभित्तौ पश्चिमभित्तौ च मण्डलान्यालि-खन् तावद्गच्छति यावत्ति(त्त)मिस्रगुहाया उत्तरद्वारम्। एवं च सति एकैकस्यां भित्तावेकोनपञ्चाशदे-कोनपञ्चाशन्मण्डलानि भवन्ति। एवं खण्डप्रपातगुहायामपि परतः समागच्छन् पूर्वभित्तावपरभित्तौ च प्रत्येकमेकोनपञ्चाशदेकोनपञ्चाशन्मण्डलान्यालिखति ॥ १७९–१८० ॥

एतदेवाह—

तिमिसगुह पुरच्छिम प-च्छिमेसु कडएसु जोयणंतरिया।
तरणिसमसंठियाइं, पंचधणुसयायामविक्खंभा ॥ १८१ ॥
जोयण उज्जोयकरा, रविमंडलपडिनिकासतेयाइं।
इगुवन्न मंडलाइं, आलिहमाणो इहं पविसे ॥ १८२ ॥

व्याख्या—इहास्यां तिमिस्रगुहायामुत्तरभरतार्धविजयार्थं चक्रवर्ती प्रविशति। तिमिस्रगुहापूर्वपश्चि-मयोः कटकयोर्भित्त्योर्योजनान्तराणि प्रमाणाङ्गुलप्रमितयोजनव्यवधानानि तरणिसमसंस्थितानि सूर्यम-ण्डलसमसंस्थितानि उत्सेधाङ्गुलप्रमितपञ्चधनुःशतायामविष्कम्भानि। तथा दक्षिणत उत्तरतश्च प्रमाणा-ङ्गुलप्रमितं योजनमुद्योतकराणि ऊर्ध्वाधोऽष्टौ योजनानि तिर्यग्द्वादश योजनानि, एतच्च संप्रदायादव-

सीयते । पुनः कथंभूतानि मण्डलानि ? अत आह—रविमण्डलप्रतिनिकाशतेजांसि रविमण्डलस्य सूर्यमण्डलस्य प्रतिनिकाशं सदृशं तेजो येषां तानि । तथाहि—मण्डलेषु तेषु आलिखितेषु यथा बहिः प्रतपति सूर्यमण्डले प्रकाशो भवति तथा गुहायामपि । तथा चोक्तं जम्बूद्वीपप्रज्ञप्तौ भरतचक्रवर्तिनमधिकृत्य—"तए णं सा तिमिसगुहा भरहेण रन्ना तेहिं जोयणंतरिएहिं पंचधणुसयायामविक्खंभेहिं जोयणुज्जोयकरेहिं एगूणवन्नाए मंडलेहिं आलिहिज्जमाणेहिं आलिहिज्जमाणेहिं खिप्पामेव आलोगभूया उज्जोयभूया दिवसभूयाऽवि होत्था" इति । इत्थंभूतानि एकैकस्यां भित्तावेकोनपञ्चाशन्मण्डलान्यालिखन् प्रविशति । एवं खण्डप्रपातगुहायामपि परतः प्रविशन्मण्डलान्यालिखतीति द्रष्टव्यम् ॥ १८१-१८२ ॥

सम्प्रति गुहाधिपत्योर्देवयोर्नामादिकमुपदिशति—

पलिउवमट्ठिईया, एएसिं अहिवई महिड्ढीया ।
कयमालनट्टमाल त्ति, नामया दोन्नि देवाउ ॥ १८३ ॥

व्याख्या—एतयोस्तिमिस्रगुहाखण्डप्रपातगुहयोरधिपती कृतमालनृत्तमालेतिनामकौ देवौ स्तः, तिमिस्रगुहायां कृतमालनामा देव आधिपत्यं परिपालयति, खण्डप्रपातगुहायां नृत्तमालनामेति भावः । तौ च द्वावपि प्रत्येकं पल्योपमस्थितिकौ महर्द्धिकौ च, महर्द्धिकत्वं कृतमालस्य तिमिस्रगुहाकूटं स्वराजधानीं च प्रति, नृत्तमालस्य खण्डप्रपातगुहाकूटं स्वराजधानीं च प्रति स्वामित्वात् ॥ १८३ ॥

अनयोश्च गुहयोर्मध्ये प्रत्येकं द्वे द्वे नद्यौ स्त इति तद्वक्तव्यतामाह—

सत्तरस जोयणाइं, गुहदाराणोज्जउऽवि गंतूणं ।
जोयणदुगंतराउ, विउलाउ जोयणे तिन्नि ॥ १७४ ॥
गुहविपुलायामाउ, गंगं सिंधुं च ता समप्पिंति ।
पव्वयकडगपवूढा, उमग्गनिमग्गसलिलाउ ॥ १७५ ॥

व्याख्या—इह तिमिस्रगुहा खण्डप्रपातगुहा च द्वादशयोजनविस्तारा । द्वयोरपि चानयोर्गुहयोर्दक्षिणद्वारं उत्तरद्वारं च चतुर्योजनविस्तृतं । एकैकस्य च द्वारस्योज्जयोः पार्श्वयोः प्रत्येकमेकस्योद्घाटितस्य कपाटस्यावष्टम्भभूतः पृष्ठतश्चतुर्योजनायामविष्कम्भः स्तूपस्तोङ्क इत्यर्थः एतच्च प्रागेवोक्तं, ततस्तिमिस्रगुहाया दक्षिणद्वारे यः कपाटस्य पृष्ठतश्चतुर्योजनायामविष्कम्भः स्तूपस्तस्मात् परतः सप्तदश योजनानि गत्वा उत्तरद्वारेऽपि यः कपाटस्य पृष्ठतश्चतुर्योजनायामविष्कम्भः स्तूपस्तस्मादर्वाक् सप्तदश योजनान्यतिक्रम्य अत्रान्तरे पर्वतकटकप्रव्यूढे वैताढ्यपर्वतभित्तिविनिर्गते उन्मग्ननिमग्नसलिलाभिधाने द्वे नद्यौ स्तः, ते च योजनद्विकान्तरे त्रीणि योजनानि विपुले विस्तीर्णे गुहाविपुलायामे द्वादशयोजनायामे इत्यर्थः । एवं खण्डप्रपातगुहायामपि । "गंगं सिंधुं च ता समप्पिंति त्ति" खण्डप्रपातगुहागते गङ्गां समुपसर्पतः
५ तिमिस्रगुहागते सिन्धुनदीमिति । इयमत्र भावना—तिमिस्रगुहायां दक्षिणद्वारे कपाटपृष्ठभाविनश्च-

हत्
५ ॥

तुर्योजनायामात् स्तूपात् परतः सप्तदश योजनानि गत्वाऽत्रान्तरे त्रियोजनविस्तारा द्वादशयोजनायामा
पूर्वभित्तिविनिर्गता पश्चिमभित्तिं विभिद्य सिन्धुनदीं प्रविष्टा उन्मग्नजला नाम नदी तिष्ठति । ततः
परतो योजनद्विकान्तरिता पूर्वभित्तिविनिर्गता पश्चिमभित्तिं विभिद्य सिन्धुनदीं प्रविष्टा त्रियोजनवि-
स्तारा द्वादशयोजनायामा निमग्नजला नाम नदी । ततः परतः सप्तदशयोजनेभ्य उत्तरद्वारकपाटपृष्ठ-
भावी चतुर्योजनायामविष्कम्भः स्तूपः । एवं खण्डप्रपातगुहायामपि यथोक्तविभागप्रमाणे द्वे नद्यौ
भावनीये, नवरं ते पश्चिमभित्तिविनिर्गते पूर्वभित्तिं विभिद्य गङ्गां प्रविष्टे इति द्रष्टव्यम् । अथ कस्मा-
देका उन्मग्नजलेत्यभिधीयते अपरा निमग्नजलेति ? उच्यते—उन्मग्नजलायां यत्किमपि तृणं काष्ठं
मनुष्यादिकं वा निपतति तत्सर्वं सा जलेनाहत्याहत्य बहिः स्थले प्रक्षिपति, तत उन्मज्जति बहिः पतति
सर्वं निपतितमस्मादिति उन्मग्नं "कृद्बहुलम्" ( ) इतिवचनादपादाने क्तप्रत्ययः, उन्मग्नं जलं
यस्यां सा उन्मग्नजलेत्यभिधीयते । तथा निमग्नजलायां यत्किमपि तृणकाष्ठादिकं निपतति तत्सर्व-
मधस्तान्निमज्जति, नो परिप्लवते, नापि बहिर्गच्छति, तेन निमज्जत्यस्यां निपतितमखिलमिति निमग्नं,
बहुलवचनादधिकरणे क्तप्रत्ययः निमग्नं जलं यस्यां सा निमग्नजलेति । उक्तं च—"से केणट्ठेणं भंते
एवं वुच्चइ उमग्गजलानिमग्गजलाओ महानईओ ? गोयमा ! उमग्गजलाए महानदीए तणं वा कट्ठं वा
सक्करं वा आसं वा हत्थिं वा गोणं वा मणुस्सं वा पक्खिप्पइ, तेणं उम्मग्गजला महानई तिखुत्तो आहुणिय
आहुणिय एगंते थलंमि एडेइ । जं निमग्गजलाए महानदीए तणं वा कट्ठं वा जाव मणुस्सं वा पक्खि-

प्पइ, तं णं निमग्गजला महानई तिखुत्तो आहुणिय आहुणिय अंतो जलम्मि निमज्जावेइ, से एएणट्ठेणं गोयमा ! एवं वुच्चइ उम्मग्गजला निमग्गजला महानईउ त्ति" ॥ १८४–१८५ ॥

तदेवं वैताढ्ये भूमिगता वक्तव्यतोक्ता, सम्प्रति श्रेणिगतां तामाह—

दो दाहिणोत्तराउ, सेढीउ जोयणे दसुप्पइउ ।
दस जोयण पिहुलाउ, गिरिवरसमदीहभागाउ ॥ १८६ ॥

व्याख्या—वैताढ्यस्य दक्षिणपार्श्वे उत्तरपार्श्वे च प्रत्येकं समाद्भूभागाद्दश योजनानि ऊर्ध्वमुत्पत्त्यात्रान्तरे द्वे विद्याधरयोग्ये दक्षिणोत्तरे श्रेणी भवतः, एका श्रेणिर्दक्षिणभागे एका चोत्तरभागे इत्यर्थः । ते च द्वे अपि प्रत्येकं गिरिवरसमदीर्घभागे वैताढ्यप्रमाणायामे दशयोजनपृथुले, अत एव तत्र वैताढ्यस्य विष्कम्भस्त्रिंशद्योजनानि, एकैका च श्रेणिरुभयपार्श्ववर्तिभ्यां वैताढ्यप्रमाणायामाभ्यां द्वाभ्यां द्वाभ्यां पद्मवरवेदिकाभ्यां द्वाभ्यां द्वाभ्यां वैताढ्यप्रमाणायामाभ्यां वनखण्डाभ्यां समन्ततः परिक्षिप्ता, एकैकस्याश्च श्रेणेर्भूमिभागो बहुसमो नानाजातिभेदभिन्नैः पञ्चविधैर्मणिभिः प्रशस्तैर्वर्णगन्धरसस्पर्शैश्च तृणैरुपशोभितः ॥ १८६ ॥

विज्जाहरनगराइं, पन्नासं दक्खिणाए सेढीए ।
जणवयपरिणद्धाइं, सट्ठिं पुण उत्तरिल्लाए ॥ १८७ ॥

व्याख्या—दक्षिणस्यां दक्षिणदिग्भाविन्यां श्रेण्यां जनपदपरिगणितानि महाविपुलदेशप्रतिबद्धानि विद्याधराणां योग्यानि पञ्चाशन्नगराणि, उत्तरस्यां पुनः श्रेण्यां षष्टिर्विद्याधराणां नगराणीति ॥ १८७ ॥

विज्जाहरसेढीओ, उड्ढं गंतूण जोयणे दसओ ।
दसजोयणपिहुलाओ, सेढीओ सक्करायस्स ॥ १८८ ॥
सोमजमकाइयाणं, देवाणं वरुणकाइयाणं च ।
वेसमणकाइयाणं, देवाणं आभिओगाणं ॥ १८९ ॥

व्याख्या—दक्षिणदिग्भाविन्या उत्तरदिग्भाविन्याश्च विद्याधरश्रेणेः प्रत्येकमूर्ध्वं दश दश योजनानि गत्वाऽत्रान्तरे शक्रराजस्य सौधर्मदेवलोकाधिपतेर्देवराजस्य संबन्धिनो ये चत्वारः सोमयमवरुणवैश्रवणरूपा लोकपालास्तत्कायिकानां तत्संबन्धिनामाभियोगिकानां देवानां योग्ये द्वे दक्षिणोत्तररूपे श्रेण्यौ स्तः, ते च पूर्वापरायते दक्षिणोत्तरविस्तीर्णे वैताढ्यप्रमाणायामे दशयोजनपृथुले, अत एव तत्र वैताढ्यस्य विष्कम्भो दश योजनानि । ते अपि द्वे श्रेण्यौ प्रत्येकमुभयपार्श्ववर्तिनीभ्यां वैताढ्यप्रमाणायामाभ्यां द्वाभ्यां द्वाभ्यां पद्मवरवेदिकाभ्यां द्वाभ्यां द्वाभ्यां वैताढ्यप्रमाणायामाभ्यां वनखण्डाभ्यां समन्ततः परिक्षिप्ते, तयोश्च द्वयोरपि श्रेण्योः सोमयमवरुणवैश्रवणकायिकानामाभियोगिकानां देवानां संबन्धीनि बहूनि भवनानि वर्तन्ते, तानि च भवनानि बहिर्वृत्तानि अन्तः समचतुरस्राणि नानामणिमयस्तम्भशतसन्निविष्टानि, तेषु सोमयमवरुणवैश्रवणकायिका देवाः पल्योपमस्थितयो महर्द्धिकाः परिवसन्ति ॥ १८८–१८९ ॥

ततः—

पंचेव जोयणाइं, उड्ढं गंतूण होइ उवरितलं ।
दसजोयणविच्छिन्नं, मणिरयणविभूसियं रम्मं ॥ १९० ॥

व्याख्या—ताभ्यामाभियोगिकदेवयोग्यश्रेणिभ्यामूर्ध्वं पञ्च योजनानि गत्वाऽत्रान्तरे भवत्युपरितलं, तच्च दशयोजनविस्तीर्णं नानाविधैर्मणिभिः पद्मरागादिभिः नानाविधैश्च रत्नैर्वैडूर्यादिभिर्भूषितं, अत एव रम्यं, तन्मध्ये पद्मवरवेदिका, वेदिकोभयपार्श्वयोर्वनखण्डौ, वनखण्डमध्ये च तत्र प्रदेशे भूयस्यः पुष्करिण्यो, बहवः क्रीडापर्वतका, भूयांसि कदल्यादिगृहाणि, बहवो यूथिकादिमण्डपाः, एतेषु बहवो वानमन्तरा देवा देव्यश्च यथासुखमभिरमन्त इति ॥ १९० ॥

सम्प्रति शेषवैताढ्येष्वतिदेशमाह—

एस गमो सेसाण वि, वेयड्ढगिरीण नवरुदीयाणं ।
ईसाणलोगपालाण, होंति अभिओगसेढीओ ॥ १९१ ॥

व्याख्या—एषोऽनन्तरोक्तः "पणुवीसइमुविद्धो" (गाथा १७८) इत्यादिरूपो गमः शेषाणामपि ऐरावतमहाविदेहभाविनां वैताढ्यगिरीणां ज्ञातव्यः । नवरमुदीच्येषु शीताशीतोदयोः परेषु विजयवैताढ्येषु ऐरावतवैताढ्येषु च या आभियोगिकश्रेणयस्ता ईशानदेवलोकाधिपतेर्देवराजस्य संबन्धिनो

लोकपालाः सोमयमवरुणवैश्रवणास्तत्कायिकानामाभियोगिकानां देवानां योग्या द्रष्टव्याः, शेषास्तु ये शीताशीतोदयोर्दक्षिणतो विजयवैताढ्यास्तेष्वाभियोगिकश्रेणयः शक्रराजसत्कसोमयमवरुणवैश्रवणकायिकानामाभियोगिकानां योग्याः ॥ १९१ ॥

सम्प्रति विजयवैताढ्येषु विशेषमाह—

जीवाधणुपट्ठबाहा–रहिया य हवंति विजयवेयड्ढा ।

पणपन्नं पणपन्नं, विज्जाहरसेढिनगराइं ॥ १९२ ॥

व्याख्या—विजयेषु महाविदेहक्षेत्रभाविषु ये वैताढ्यास्ते सर्वेऽपि जीवाधनुःपृष्ठबाहारहिता भवन्ति, सर्वेषु तेषु विजयवैताढ्येषु एकैकस्यां विद्याधरश्रेणौ पञ्चपञ्चाशत्पञ्चपञ्चाशद्विद्याधरनगराणि ॥ १९२ ॥

सम्प्रति वृषभकूटवक्तव्यतामाह—

सव्वेऽवि उसभकूडा, उव्विद्धा अट्ठ जोयणा होंति ।

बारस अट्ठ य चउरो, मूले मज्झुवरि विच्छिन्ना ॥ १९३ ॥

व्याख्या—सर्वेऽपि भरतैरावतविजयभाविनश्चतुस्त्रिंशत्सङ्ख्याः, तथाहि—एको वृषभकूटो भरतक्षेत्रे, स च गङ्गाकुण्डस्य पश्चिमदिशि सिन्धुकुण्डस्य पूर्वतः क्षुल्लहिमवतो वर्षधरपर्वतस्य दाक्षिणात्ये नितम्बे । द्वितीय ऐरावतक्षेत्रे शिखरिणो वर्षधरस्योत्तराहे नितम्बे रक्तारक्तवतीकुण्डयोर्मध्यभागे । द्वात्रिंशद् द्वात्रिंशत्सङ्ख्येषु विजयेषु । सर्वेऽपि सर्वसङ्ख्यया जम्बूद्वीपे चतुस्त्रिंशद्वृषभकूटा

भवन्ति, ते च प्रत्येकमष्टौ योजनानि उद्विद्धाः उच्चाः, द्वे योजने भूमाववगाढाः, तथा मूले द्वादशयोजनानि आयामविष्कम्भाभ्यां, मध्येऽष्टौ, उपरि चत्वारि, मूले विस्तीर्णा, मध्ये संक्षिप्ता, उपरि तनुका, अत एव गोपुच्छसंस्थानसंस्थिताः सर्वेऽपि च जाम्बूनदमयाः । मूले विस्तीर्णा इत्युपलक्षणं, तेन दीर्घा इत्यपि द्रष्टव्यम्, समवृत्तत्वात्तेषामिति ॥ १९३ ॥

सम्प्रति परिधिमाह—

सत्तत्तीसइरेगे, मूले पणुवीसजोयणा मज्झे ।
अइरेगाणि दुवालस, उवरितले होंति परिहिम्मि ॥ १९४ ॥

व्याख्या—परिधौ चिन्त्यमाने मूले सातिरेकाणि सप्तत्रिंशद्योजनानि, मध्ये सातिरेकाणि पञ्चविंशतियोजनानि, उपरितले सातिरेकाणि द्वादश योजनानि । सर्वेऽपि चैते प्रत्येकं पद्मवरवेदिकया वनखण्डेन च समन्ततः परिक्षिप्ताः । एतेषां च वृषभकूटानामुपरि प्रत्येकमेकैकः प्रासादावतंसकः, ते च प्रासादाः प्रत्येकमेकं क्रोशमायामतोऽर्धक्रोशं विष्कम्भतो देशोनक्रोशमुच्चैस्त्वेन, तेषु च प्रासादावतंसकेषु मध्ये स्वाधिपतिवृषभनामकदेवयोग्यं सपरिवारं सिंहासनं वृषभनामकाश्च तेषामधिपतयो देवाः प्रत्येकं पल्योपमस्थितयो विजयदेववन्महर्द्धिकाः, नवरं शीताशीतोदादक्षिणदिग्भाविषु विजयेषु ये वृषभकूटा यश्च भरतक्षेत्रे एतत्स्वामिनां वृषभनामकानां सप्तदशसङ्ख्यानां देवानां राजधान्यो मेरोर्दक्षिणतः तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्यापरस्मिन् जम्बूद्वीपे द्वीपे द्वादशयोजनसहस्रेभ्यः परतो यथास्थानं वेदितव्याः । ये च

शीताशीतोदयोरुत्तरदिग्भाविषु विजयेषु वृषभकूटा यश्चैरावतक्षेत्रे तत्स्वामिनां वृषभनामकानां सप्तदश-सङ्ख्यानां देवानां राजधान्यो मेरोरुत्तरतः प्रतिपत्तव्याः । सर्वेष्वपि चैतेषु प्रत्येकं वृषभनामा देवः परिवसति, तेन सर्वेऽप्यविशेषेण वृषभकूटा इत्युच्यते ॥ १९४ ॥

इदानीं क्षेत्रेषु कालमानमाह—

उसप्पिणीओसप्पि–णीओ भरहे तहेव एरवए ।
परियट्टंति कमेणं, सेसेसु अवट्ठिओ कालो ॥ १९५ ॥

व्याख्या—भरतक्षेत्रे तथैरावतक्षेत्रे अवसर्पिण्य उत्सर्पिण्यश्च क्रमेण परिवर्तन्ते । उत्सर्पिण्यवसर्पिणीप्ररूपणा नन्द्यध्ययनटीकायां सविस्तरं कृतेति न भूयः क्रियते, ग्रन्थगौरवभयात् । शेषेषु च हैमवतादिक्षेत्रेषु अवस्थितः कालः, स चैवंरूपः—हैमवतहैरण्यवतयोः सुषमदुःषमानुरूपः, हरिवर्षरम्यकयोः सुषमानुरूपः, देवकुरूत्तरकुरुषु सुषमसुषमानुरूपः, महाविदेहेषु दुःषमसुषमानुरूप इति ॥ १९५ ॥

अधुना पद्महृदवक्तव्यतामाह—

हिमवंतसेलसिहरे, वरारविंदद्दहो सलिलपुन्नो ।
दसजोयणावगाढो, विच्छिन्नो दाहिणुत्तरओ ॥ १९६ ॥

व्याख्या—हिमवतः शैलस्य शिखरे उपरितले वराणि अरविन्दानि पद्मानि यत्र स वरारविन्द एवं-

रूपो ह्रदो वर्तते पद्महृदो वर्तत इत्यर्थः । स च कथंभूत इत्याह—सलिलपूर्णः तथारूपजगत्स्थित्यनुभावतः सदैव जलपरिपूर्णः । तथा दश योजनान्यवगाढः उण्डः, (तथा) विस्तीर्णो दक्षिणोत्तरतो दक्षिणोत्तररूपतया विस्तारवान् ॥ १९६ ॥

पउमद्दहस्स मज्झे, चउकोसायामविच्छरं पउमं ।
तं तिगुणं सविसेसं, परिही दो कोसवाहल्लं ॥ १९७ ॥

व्याख्या—तस्यैवंरूपस्य पद्महृदस्य मध्ये बहुमध्यदेशभागे महदेकं पद्ममस्ति, तच्च चतुःक्रोशायामविस्तारं योजनप्रमाणायामविष्कम्भं, तस्य परिधिः तच्चतुःक्रोशरूपं परिमाणं त्रिगुणं सविशेषं सातिरेकाणि त्रीणि योजनानि तस्य पद्मस्य परिधिरित्यर्थः । तथा तत्पद्मं द्विक्रोशबाहल्यं गव्यूतद्वयपिण्डम् ॥ १९७ ॥

दसजोयणावगाढं, दो कोसे ऊसियं जलंताउ ।
वइरामयमूलागं, कंदोऽवि य तस्स रिट्ठमउ ॥ १९८ ॥

व्याख्या—दशयोजनावगाढं जलमध्ये निमग्नं, द्वौ क्रोशौ जलान्ताज्जलपर्यन्तादूर्ध्वमुच्छ्रितम् । तथा तत्पद्मं वज्रमयमूलं । कन्दोऽपि च तस्य पद्मस्य रिष्टरत्नमयः ॥ १९८ ॥

१ दश योजनान्यवगाढ इति साधु.

वेरुलियमओ नालो, बाहिरपत्ता य तस्स तवणिज्जा ।
जंबूनयामया पुण, पत्ता अब्भिंतरा तस्स ॥ १९९ ॥

व्याख्या—तस्य पद्मस्य नालो वैडूर्यमयो वैडूर्यरत्नात्मकः, बाह्यानि च तस्य पद्मस्य चत्वारि पत्राणि वैडूर्यमयानि, शेषाणि तु बाह्यानि पत्राणि तपनीयमयानि रक्तसुवर्णात्मकानि, अभ्यन्तराणि पुनः पत्राणि तस्य पद्मस्य जाम्बूनदमयानि ईषद्रक्तसुवर्णमयानि ॥ १९९ ॥

तथा—

सव्वकणगामई क-न्निगा य तवणिज्ज केसरा भणिया ।
तीसे य कन्निगाए, दो कोसायामविक्खंभा ॥ २०० ॥

व्याख्या—तस्य पद्मस्य कर्णिका सर्वकनकमयी समस्ताऽपि कनकमयी, तस्याश्च कर्णिकाया उपरि यानि केसराणि तानि तपनीयमयानि, कर्णिकायाश्चायामविष्कम्भौ प्रत्येकं द्वौ क्रोशौ ॥ २०० ॥

तं तिगुणं सविसेसं, परिही से कोसमेगबाहल्लं ।
मज्झम्मि तीइ भवणं, कोसायामद्धविच्छिन्नं ॥ २०१ ॥

व्याख्या—से तस्याः कर्णिकायाः तत् क्रोशद्वयं त्रिगुणं सविशेषं सातिरेकं परिधिः सातिरेकाणि षड् गव्यूतानि परिधिरित्यर्थः । तस्याश्च कर्णिकाया बाहल्यं क्रोशमेकं गव्यूतमेकं । तथा तस्याः

कर्णिकाया बहुमध्यदेशभागे महदेकमनेकमणिमयस्तम्भनिविष्टं भवनं, तच्च क्रोशायामम्, अर्धक्रोशं विस्तीर्णम् ॥ २०१ ॥

देसूणकोसमुच्चं, दारा से तिदिसि धणुसए पंच ।
उव्विद्धा तस्सऽद्धं, विछिन्ना तत्तियपवेसे ॥ २०२ ॥

व्याख्या—तद्भवनं देशोनं किञ्चिन्न्यूनक्रोशमुच्चं, तथा 'से' तस्य भवनस्य त्रिदिशि पूर्वोत्तरदक्षिणरूपासु तिसृषु दिक्षु द्वाराणि, तानि च द्वाराणि प्रत्येकं पञ्च धनुःशतानि उद्विद्धानि उच्चानि तस्य धनुःशतपञ्चकस्यार्धमर्धतृतीयानि धनुःशतानीत्यर्थः, विस्तीर्णानि तावन्ति अर्धतृतीयानि धनुःशतानि प्रवेशे ॥ २०२ ॥

भवणस्स तस्स मज्झे, सिरीए देवीए दिव्वसयणिज्जं ।
मणिपीढियाइ उवरिं, अड्ढाइयधणुसउच्चाए ॥ २०३ ॥

व्याख्या—तस्यैवंभूतस्य भवनस्य मध्ये बहुमध्यदेशभागे पञ्चधनुःशतायामाऽर्धतृतीयधनुःशतबाहल्या सर्वमणिमयी महत्येका मणिपीठिका, तस्याश्च मणिपीठिकाया उपरि महदेकं दिव्यं प्रधानं श्रीदेव्या योग्यं शयनीयम् ॥ २०३ ॥

तदेवमुक्तं सर्वमध्यवर्ति पद्मं, सम्प्रति तत्परिवारमाह—

तं पउमं अन्नेणं, तत्तो अद्धप्पमाणमित्ताणं ।
आवेढियं समंता, पउमाणट्ठस्सएणं तु ॥ २०४ ॥

व्याख्या—तत् अनन्तरव्यावर्णितस्वरूपं पद्मं समन्ततः सर्वासु दिक्षु विदिक्षु चान्येन पद्मानामष्टाधिकेन शतेनावेष्टितं, कथंभूतानां पद्मानामष्टशतेनेत्याह—तदर्धप्रमाणमात्राणां तस्य मूलभूतस्य पद्मस्य यद् अर्धं प्रमाणं तन्मात्राणां, तथाहि—तानि पद्मानि प्रत्येकं द्वे गव्यूते आयामविष्कम्भाभ्यां, क्रोशमेकं बाहल्येन, दश योजनान्युद्वेधेन, जलपर्यन्तादूर्ध्वमुच्छ्रितानि क्रोशमेकं, सातिरेकाणि दश योजनान्युच्चैस्त्वेन । तेषां च पद्मानां सर्वेषामपि कर्णिका प्रत्येकं क्रोशायामा, अर्धक्रोशबाहल्या, सर्वकनकमयी, मूलनालपत्रादीनां च यादृक्स्वरूपं मूलपद्मस्य व्यावर्णितं तादृगेव तेषामपि द्रष्टव्यं एतेषु च पद्मेषु श्रीदेव्या आभरणादि तिष्ठति । एष प्रथमः पद्मपरिक्षेपः ॥ २०४ ॥

सिरिसामन्नसुराणं, चउण्हं साहस्सिणं सहस्साइं ।
चत्तारि पंकयाणं, वायव्वीसाणुईणेणं ॥ २०५ ॥

व्याख्या—द्वितीये पद्मपरिक्षेपे तस्य पद्मस्य वायव्यामैशान्यामुदीच्यां च दिशि सर्वसङ्ख्यया श्रीसामान्यसुराणां श्रीदेवीसमानविभवानां देवानां चतुर्णां सहस्राणां योग्यानि चत्वारि पङ्कजानां पद्मानां सहस्राणि ॥ २०५ ॥

मयहरियाण चउएहं, सिरिए पउमस्स तस्स पुव्वेणं ।
महुयरिगणोवगीया, चउरो पउमा मणभिरामा ॥ २०६ ॥

व्याख्या—द्वितीय एव पद्मपरिवेष्टके तस्य मूलभूतस्य पद्मस्य पूर्वेण पूर्वस्यां दिशि श्रिया देव्याः सत्का याश्चतस्रो महत्तरिकास्तासां योग्यानि चत्वारि पद्मानि, तानि च मधुकरीगणोपगीतानि मधुकरीणां गणाः समुदाया मधुकरीगणास्तेषामुपगीतं सामीप्येन गानं यत्र तानि मधुकरीगणोपगीतानि, अत एव मनोभिरामाणि, इदं च स्वरूपमात्रं विशेषणं, अन्येषामपि पद्मानामित्थंरूपत्वात् ॥ २०६ ॥

तथा—

अट्ठण्ह सहस्साणं, देवाणब्भिंतराए परिसाए ।
दाहिणपुरत्थिमेणं, अट्ठसहस्साइ पउमाणं ॥ २०७ ॥

व्याख्या—द्वितीय एव पद्मपरिक्षेपे तस्य मूलभूतस्य पद्मस्य दक्षिणपूर्वस्यामाग्नेय्यामित्यर्थः अभ्यन्तरपर्षदि यानि देवानामष्टौ सहस्राणि तेषां योग्यानि पद्मानामष्टौ सहस्राणि ॥ २०७ ॥

पउमस्स दाहिणेणं, मज्झिमपरिसाए दससहस्साणं ।
दस पउमसहस्साइं, सीरिदेवीए सुरवराणं ॥ २०८ ॥

व्याख्या—श्रीदेव्या मध्यपर्षदि यानि सुरवराणां देवानां दश सहस्राणि तेषां योग्यानि तस्य मूलभूतस्य पद्मस्य दक्षिणतः पद्मानां दश सहस्राणि ॥ २०८ ॥

बारस पउमसहस्सा, दक्खिणपच्चत्थिमेण पउमस्स ।
परिसाए बाहिराए, डुवालसण्हं सहस्साणं ॥ २०९ ॥

व्याख्या—श्री देव्या बाह्यायां परिषदि यानि देवानां द्वादश सहस्राणि तेषां योग्यानि तस्य मूलभूतस्य पद्मस्य दक्षिणपश्चिमायां नैर्ऋत्यामित्यर्थः द्वादश पद्मसहस्राणि ॥ २०९ ॥

अरविंदस्स वरेणं, सत्तण्ह णियाहिवाण देवाणं ।
वियसियसहस्सपत्ता-णि सत्त पउमाणि देवीए ॥ २१० ॥

व्याख्या—देव्याः श्रीदेव्या ये सप्त अनीकाधिपतयो हस्त्यश्वरथपदातिमहिषगन्धर्वनाट्यरूपसप्तकटकस्वामिनस्तेषां योग्यानि तस्य मूलभूतस्यारविन्दस्य पद्मस्यापरेणापरस्यां दिशि विकसितं सहस्रं पत्राणां येषु प्रत्येकं तानि विकसितसहस्रपत्राणि सप्त पद्मानि । एष एतावान् द्वितीयः पद्मपरिक्षेपः ॥ २१० ॥

सम्प्रति तृतीयमाह—

चाउद्दिसिं पि पउमस्स, तस्स सिरिदेविआयरक्खाणं ।
सोलस पउमसहस्सा, तिन्नि य अन्ने परिक्खेवा ॥ २११ ॥

व्याख्या—तस्य मूलभूतस्य पद्मस्य तृतीये पद्मपरिक्षेपे श्रीदेव्याः संबन्धिनामात्मरक्षकदेवानां यानि षोडश सहस्राणि तेषां योग्यानि षोडश पद्मसहस्राणि चतुर्ष्वपि दिक्षु तिष्ठन्ति, न केवलमेते त्रयः पद्मपरिक्षेपाः किन्त्वन्येऽपि त्रयः पद्मपरिक्षेपा आभियोगिकदेवयोग्याः सन्ति ॥ २११ ॥

तत्र कस्मिन् परिक्षेपे कियन्ति पद्मानीत्येतन्निरूपयति—

बत्तीस सयसहस्सा, पउमाणब्भिंतरे परिक्खेवे ।
चत्तालीसं लक्खा, मज्झिमए परिरए होंति ॥ २१२ ॥
अडयालीसं लक्खा, बाहिरए परिरयम्मि पउमाणं ।
एमेसिं पउमाणं, कोडी वीसं च लक्खाइं ॥ २१३ ॥

व्याख्या—आभियोगिकदेवयोग्यानां त्रयाणां पद्मपरिक्षेपाणां मध्ये आभ्यन्तरे परिक्षेपे पद्मानां द्वात्रिंशच्छतसहस्राणि भवन्ति । मध्ये परिरये परिक्षेपे चत्वारिंशत्पद्मानां लक्षा भवन्ति । बाह्ये परिरये अष्टाचत्वारिंशत् पद्मानां लक्षाः । एवमेषामाभियोगिकदेवयोग्यानां पद्मानामेका कोटी विंशतिश्च लक्षा भवन्ति । यदा पुनः सर्वाण्यपि पद्मानि सर्वसङ्ख्यया सङ्ख्यातुमिष्यन्ते तदा एका कोटी विंशतिर्लक्षाः पञ्चाशत्सहस्राणि शतं च विंशत्यधिकमिति परिमाणं द्रष्टव्यं, एतच्च सुज्ञानमिति स्वयं भावनीयं । तस्य

पद्मह्रदस्य पूर्वस्यामपरस्यामुदीच्यां दक्षिणस्यां च दिशि प्रत्येकं नानामणिमयस्तम्भकलितं तोरणमस्ति। तत्र पद्मह्रदात् पूर्वदिक्तोरणेन गङ्गा महानदी विनिर्गच्छति, सा च पूर्वाभिमुखं पञ्च योजनशतानि गत्वा गङ्गावर्तनकूटस्याधोभागेन दक्षिणाभिमुखं परावर्तते, दक्षिणाभिमुखमपि पर्वतस्योपरि पञ्च योजनशतानि त्रयोविंशत्यधिकानि तिस्रश्चैकोनविंशतिभागरूपाः कलाः किञ्चित्समधिकाः गत्वाऽत्रान्तरे विवृतमकरमुखसंस्थितयाऽर्धयोजनायामया सक्रोशानि षट् योजनानि विस्तीर्णया क्रोशार्धबाहल्यया वज्रमय्या जिह्विकया मुक्तावलीहारसंस्थितेन सातिरेकयोजनशतप्रमाणेन प्रवाहेण वज्रमयतले वज्रमयपार्श्वे रजतमयकूले सुवर्णरजतमयवालुके नानामणिनिबद्धतीर्थे गङ्गाप्रपातकुण्डे निपतति। तच्च गङ्गाप्रपातकुण्डं षष्टिर्योजनानि आयामविष्कम्भाभ्यां नवत्यधिकं योजनशतं किञ्चिद्विशेषाधिकं परिक्षेपतो दश योजनानि उद्वेधेन नानाविधसुगन्धिशतपत्रसहस्रपत्रादिपद्मजातिसंकीर्णं नानाविधसुरासुरशकुनिगणसंपातरमणीयं, तच्चैकया पद्मवरवेदिकया एकेन वनखण्डेन समन्ततः परिक्षिप्तं। तस्य च गङ्गाप्रपातकुण्डस्य पूर्वपश्चिमदक्षिणरूपासु तिसृषु दिक्षु प्रत्येकमेकैका सुखोत्तारा सोपानपद्धतिः। तासु च सोपानपद्धतिषु वज्रमयाः स्तम्भाः सुवर्णरूप्यमयानि फलकानि नानामणिमय्य आलम्बनबाहाः, एकैकस्याश्च सोपानपद्धतेः प्रत्येकमेकैकं तोरणं, तानि च तोरणानि नानामणिमयस्तम्भसंनिविष्टानि यथा च प्राग्जगत्या उपरि पुष्करिणीतोरणानि व्यावर्णितानि तथाऽमून्यपि द्रष्टव्यानि, पद्मह्रदतोरणानि च। तस्य च गङ्गा-

प्रपातकुण्डस्य बहुमध्यदेशभागे महानेको वज्रमयो गङ्गाद्वीपो नामद्वीपः, स चाष्टौ योजनान्यायामविष्कम्भतः सातिरेकाणि, पञ्चविंशतियोजनानि परिक्षेपतः, क्रोशद्विकं जलपर्यन्तादुच्छ्रितः, सोऽपि चैकया पद्मवरवेदिकया एकेन च वनखण्डेन सर्वतः परिक्षिप्तः। तस्य गङ्गाद्वीपस्योपरि बहुसमरमणीये भूभागे महदेकं गङ्गादेवीयोग्यं नानामणिमयस्तम्भशतसंनिविष्टं भवनमस्ति, तच्च क्रोशायाममर्धक्रोशविस्तीर्णं देशोनक्रोशमुच्चं, तस्यापि भवनस्य पूर्वोत्तरदक्षिणरूपासु तिसृषु दिक्षु प्रत्येकमेकैकं द्वारं, तानि च द्वाराणि प्रत्येकं पञ्च धनुःशतान्युच्चैस्त्वेनार्धतृतीयानि धनुःशतानि विष्कम्भतः, तस्य च भवनस्य मध्ये पञ्चधनुःशतायामविष्कम्भाऽर्धतृतीयधनुःशतबाहल्या मणिमयी पीठिका, तन्मध्ये गङ्गादेव्या योग्यं महदेकं शयनीयमिति। तस्माच्च गङ्गाप्रपातकुण्डाद्दक्षिणतोरणस्य मध्यभागेन गङ्गा महानदी विनिर्गच्छति, सा चोत्तरभरतार्धभाविनीभिरनेकाभिर्नदीभिरापूर्यमाणा यावद्वैताढ्यपर्वतस्तावत्सप्तभिर्नदीसहस्रैरापूरिता भवति। ततः खण्डप्रपातगुहाया अधस्तात् पूर्वदिग्भागेन वैताढ्यपर्वतमधो भित्त्वा दक्षिणभरतार्धमध्यभागेन गच्छति। तस्य च दक्षिणभरतार्धस्य बहुमध्यदेशभागं गत्वा पूर्वाभिमुखी परावर्तते, दक्षिणभरतार्धभाविनीभिरपि नदीभिरापूर्यमाणा समुद्रप्रवेशे सप्तभिर्नदीसहस्रैरापूरिता भवति। मूलत आरभ्य सर्वसङ्ख्यया चतुर्दशभिर्नदीसहस्रैरापूरिता पूर्वदिग्भागेन जगतीमधो विदार्य लवणसमुद्रं प्रविशति। एषा च गङ्गा महानदी मूले सक्रोशानि षड् योजनानि विस्तीर्णा, क्रोशार्धमुद्विद्धा। ततो गङ्गाप्रपातकुण्डादनन्तरं

सक्रोशयोजनमुद्वेधेन जायते ॥ २१२—२१३ ॥

मानया परिवर्धमाना परिवर्धमाना समुद्रप्रवेशे सार्धानि द्वाषष्टियोजनानि विष्कम्भतः सक्रोशयोजनमुद्वेधेन जायते ॥ २१२—२१३ ॥

एतदेव गाथादशकेन दर्शयति—

एयाउ हरयाउ, पुव्वद्दारेण निग्गया गंगा ।
पुव्वाभिमुहं गंतूण, जोयणाणं सए पंच ॥ २१४ ॥
गंगावत्तणकूडे, आवत्ता दाहिणामुहं तत्तो ।
पंच सए गंतूणं, तेवीसे तिन्नि उ कलाउ ॥ २१५ ॥
निवडइ गिरिसिहराउ, गंगाकुंडम्मि जिब्भियाए उ ।
मगरवियट्टाहरसं—ठियाए वइरामयतलम्मि ॥ २१६ ॥

व्याख्या—एतस्मात् पूर्वव्यावर्णितस्वरूपात् पद्मह्रदात् पूर्वद्वारेण गङ्गा महानदी विनिर्गता, सा च पूर्वाभिमुखं योजनानां पञ्च शतानि गत्वा । गङ्गावर्तनकूटे गङ्गावर्तनकूटस्याधोभागेन दक्षिणाभिमुखमावृत्ता, ततो दक्षिणाभिमुखं पर्वतस्योपरि पञ्च शतानि त्रयोविंशत्यधिकानि योजनानां तिस्रश्चैकोनविंशतिभागरूपाः कला गत्वा, तथाहि—हिमवत उपरि विस्तारो दश योजनशतानि द्विपञ्चाशदधिकानि, द्वा-

दश च कलाः १०५२ क० १२। गङ्गायाश्च पर्वतस्योपरि प्रवाहः पृथुत्वेन सक्रोशानि षड् योजनानि क्रोशेन चतुर्भागोनं कलापञ्चकं लभ्यते, स च गङ्गाप्रवाहः पर्वतस्य मध्यभागेन पद्महृदाद्विनिर्गच्छति, तदेतद्धिमवतो विस्ताराच्छोध्यते, शोधिते च सति तस्मिन् जातं शेषमिदम्—दश शतानि षट्चत्वारिंशदधिकानि कलाः सप्त चतुर्भागेनाधिकाः १०४६ क० ७ पा० १। अस्यार्धे लब्धानि पञ्च शतानि त्रयोविंशत्यधिकानि योजनानां, तिस्रश्च कलाः किञ्चित्समधिकार्धयुक्ताः, परं तत्किञ्चित्समधिकार्धं न विवक्षितमिति "तिन्नि च कला य(ज)" इत्युक्तं, तत एतावद्दक्षिणतो गत्वा। गिरिशिखरात् क्षुल्लहिमवतः शिखरात् गङ्गाकुण्डे गङ्गाप्रपातकुण्डे वज्रमयतले मकरविवृताधरसंस्थितया जिह्विकया निपतति ॥ २१४–२१५–२१६ ॥

सम्प्रति जिह्विकाया एव प्रमाणं स्वरूपं चाह—

छ जोयणे सकोसे, विक्खंभेणध्धकोसबाहल्लं।
दो कोसायामेणं, वइरामइ जिब्भिया सा उ ॥ २१७ ॥

व्याख्या—सा जिह्विका वज्रमयी वज्ररत्नमयी षड् योजनानि सक्रोशानि विष्कम्भतो विस्तारेण अर्धक्रोशं क्रोशार्धं बाहल्येन पिण्डेन द्वौ क्रोशौ आयामेन दैर्घ्येण ॥ २१७ ॥

सम्प्रति यस्मिन् गङ्गाकुण्डे निपतति तस्य प्रमाणमाह—

आयामो विक्खंभो, सट्ठिं कुंडस्स जोयणा हुंति ।
नउयसयं किंचूणं, परिही दसजोयणोगाहो ॥ २१८ ॥

व्याख्या—कुण्डस्य गङ्गाकुण्डस्यायामो विष्कम्भश्च प्रत्येकं षष्टिर्योजनानि भवन्ति । नवतिं नवत्यधिकं शतं किञ्चिदूनं योजनानां तस्य कुण्डस्य परिधिः । तथा दश योजनानि तस्य कुण्डस्यावगाह उण्डत्वम् ॥ २१८ ॥

कुंडस्स मज्झयारे, दो कोसे ऊसिओ जलंताओ ।
गंगादीवो रम्मो, विच्छिन्नो जोयणे अट्ठ ॥ २१९ ॥

व्याख्या—तस्य गङ्गाकुण्डस्य मध्यकारे मध्ये गङ्गाद्वीपो नाम द्वीपोऽस्ति । स च जलान्ताज्जलपर्यन्तादूर्ध्वं द्वौ क्रोशावुच्छ्रितः, वज्रमणिमयतया रम्यः, विस्तीर्णो योजनान्यष्टौ । विस्तीर्ण इति चोपलक्षणं, तेनायामतोऽप्यष्टौ योजनानीति प्रतिपत्तव्यं वृत्तत्वात्तस्येति ॥ २१९ ॥

वयरामयस्स तस्स उ, परिही पणुवीस जोयणा अहिया ।
मज्झम्मि तस्स भवणं, गंगादेवीए सिरिसरिसं ॥ २२० ॥

व्याख्या—तस्य गङ्गाद्वीपस्य वज्रमयस्य परिधिः पञ्चविंशतियोजनान्यधिकानि किञ्चित्समधिकानि ।

तस्य च गङ्गाद्वीपस्य मध्ये बहुसमे भूभागे गङ्गादेव्या भवनं, तच्च श्रीसदृशं यादृशं श्रीदेव्या भवनं प्राक् स्वरूपतः प्रमाणतश्च प्रतिपादितं तादृशमेतदपि द्रष्टव्यमिति भावः ॥ २२० ॥

गंगापवायकुंडा, निग्गंतू दाहिणिल्लदारेण ।
चोद्दससहस्ससहिया, सलिलाणं उयहिमवगाढा ॥ २२१ ॥

व्याख्या—गङ्गाप्रपातकुण्डाद्दक्षिणद्वारेण निर्गत्यापान्तराले नदीभिरापूर्यमाणा पर्यन्ते सर्वसङ्ख्यया सलिलानां नदीनां चतुर्दशभिः सहस्रैः सहिता पूर्वदिग्भागेनोदधिं लवणसमुद्रमवगाढाऽवतीर्णा ॥ २२१ ॥

छज्जोयणे सकोसे, पवहे गंगानईए विच्छारो ।
कोसध्धं उगाहो, कमसो परिवट्टमाणीउ ॥ २२२ ॥

व्याख्या—प्रवहे पद्महृदाद्विनिर्गमे षड् योजनानि सक्रोशानि गङ्गानद्या विस्तारः, क्रोशार्धमवगाहः ततो गच्छन्ती क्रमशः क्रमेण विष्कम्भतोऽवगाहतश्च मात्रया परिवर्धमाना भवति ॥ २२२ ॥

सा चैवं परिवर्धमाना समुद्रप्रवेशे कियती भवतीत्यत आह—

मुहमूले विच्छिन्ना, बासट्ठिं जोयणाणि अध्धं च ।
उव्वेहेण सकोसं, जोयणमेगं मुणेयव्वं ॥ २२३ ॥

व्याख्या—मुखमूखे विस्तीर्णा द्वाषष्टियोजनानि अर्धं च योजनस्य गव्यूतद्वयप्रमाणम् । उद्वेधेन छएरुत्वेन पुनरेकं योजनं सक्रोशमिति ॥ २२३ ॥

तदेवमुक्ता गङ्गानदीवक्तव्यता, सम्प्रति सिन्ध्वादयो वक्तव्याः, तत्र मेरोर्दक्षिणदिग्भाविनीनां नदीनां ह्रदादिनिर्गमे यो विस्तारस्तद्विषयं करणद्वयं विवक्षुराह—

मंदरदाहिणपासे, जा सलिलाउ रुहंति सेलाहिं ।

पवहे जो वित्थारो, तासिं करणाणि वोच्छामि ॥ २२४ ॥

व्याख्या—मन्दरस्य मेरोर्दक्षिणपार्श्वे याः सलिलाः सलिलमासामस्ति ( ताः ) सलिला नद्यः, "अभ्रादिभ्यः" ( सिद्ध हे० ७–२–४६ ) इति मत्वर्थीयोऽप्रत्ययः । रु(रो)हन्ति प्रादुर्भवन्ति शैलेभ्यो हिमवदादिभ्यः तासां नदीनां प्रवहे ह्रदादिनिर्गमे यो विस्तारस्तत्र करणे वक्ष्ये ॥ २२४ ॥

प्रतिज्ञातमेव निर्वाहयति—

पवहे दहविक्खारो, असीइभइउ उ दाहिणमुहीणं ।

स च चालीसइभइउ, सो चेव य उत्तरमुहीणं ॥ २२५ ॥

व्याख्या—ह्रदविस्तारः पद्मह्रदादिविष्कम्भोऽशीत्या भक्तः सन् यावत्प्रमाणो भवति तावत्प्रमाणो दक्षिणाभिमुखानां गङ्गाप्रभृतीनां नदीनां प्रवाहे ह्रदादिविनिर्गमविस्तारः । तद्यथा—पद्मह्रदस्य विस्तारः

पञ्च योजनशतानि ५०० तेषामशीत्या भागे हृते लब्धानि षड् योजनानि, शेषमुद्धरति विंशतिः, सा च योजनात्मिका, ततः सा क्रोशकरणाय चतुर्भिर्गुण्यते, जाताऽशीतिः, लब्धमेकं गव्यूतं, एतावान् गङ्गायाः सिन्धोश्च पद्महृदाद्विनिर्गमे विस्तारः। तथा महापद्महृदस्य विष्कम्भो योजनसहस्रं १०००, तस्याशीत्या भागे हृते लब्धानि द्वादश योजनानि, शेषमुद्धरति चत्वारिंशत्, सा च योजनात्मिका, ततो योजनार्धीकरणाय द्विकेन गुण्यते, जाताऽशीतिः, लब्धमेकं योजनार्धं, एतावान् रोहिताया महापद्महृदाद्विनिर्गमे विस्तारः। तथा तिगिञ्छिहृदस्य विष्कम्भो द्वे योजनसहस्रे २०००, तयोरशीत्या भागे हृते लब्धा पञ्चविंशतिः २५, एतावान् हरिसलिलायाः तिगिञ्छिहृदाद्विनिर्गमे विस्तारः। स एव च पद्मादिहृदविस्तारश्चत्वारिंशता भक्तः सन् यावान् भवति तावत्प्रमाण उत्तरमुखीनां नदीनां हृदाद्विनिर्गमे विस्तारः, तद्यथा—पद्महृदविष्कम्भपरिमाणं पञ्च योजनशतानि, तेषां चत्वारिंशता भागे हृते लब्धानि द्वादश योजनानि, शेषमुद्धरति विंशतिः, सा च योजनात्मिका, ततो योजनार्धीकरणाय द्विकेन गुण्यते, जाताश्चत्वारिंशत्, लब्धमेकं योजनार्धं, एतावान् रोहितांशायाः पद्महृदाद्विनिर्गमे विस्तारः। तथा महापद्महृदविष्कम्भपरिमाणं योजनसहस्रं १०००, तस्य चत्वारिंशता भागे हृते लब्धाः पञ्चविंशतिः, एतावान् हरिकान्ताया महापद्महृदाद्विनिर्गमे विस्तारः। तथा तिगिञ्छिहृदस्य विष्कम्भो द्वे योजनसहस्रे २०००, तयोश्चत्वारिंशता भागे हृते लब्धा पञ्चाशत्। एतावान् शीतोदायास्तिगिञ्छिहृदाद्विनिर्गमे विष्कम्भः ॥ २२५ ॥

सम्प्रति मेरोरुत्तरदिग्भाविनीनां नदीनामतिदेशेन प्रवाहविस्तारानयनाय करणमाह—

जो भण उत्तरपासे, एसेव गमो हवेज्ज नायव्वो ।
जो दाहिणाभिमुहीणं, सो नियमो उत्तरमुहीणं ॥ २२६ ॥

व्याख्या—याः पुनर्नद्यो मेरोरुत्तरपार्श्वे तासामप्येष एवानन्तरोक्तो गमः प्रकारः प्रवाहविस्तारानयने ज्ञातव्यः । नवरं यो मेरोर्दक्षिणतो दक्षिणाभिमुखीनां नदीनामुक्तः स मेरोरुत्तरत उत्तराभिमुखीनामवसेयः, यश्च मेरोर्दक्षिणत उत्तरदिग्भाविनीनामुक्तः स मेरोरुत्तरतो दक्षिणाभिमुखीनामिति । अयमत्र भावः—मेरोरुत्तरत उत्तराभिमुखीनां नदीनां स्वस्वह्रदविस्तारोऽशीत्या भक्तः सन् यावान् भवति तावत्प्रमाणं स्वस्वह्रदाद्विनिर्गमे विस्तारः, चत्वारिंशता तु भक्तः सन् यावान् भवति तावत्प्रमाणो दक्षिणाभिमुखीनाम् । तद्यथा—पुण्डरीकह्रदस्य विस्तारः पञ्च योजनशतानि ५००, तेषामशीत्या भागे हृते लब्धानि पूर्वोक्तप्रकारेण षड् योजनानि सक्रोशानि, एतावान् रक्तारक्तवत्योर्नद्योः प्रत्येकं पुण्डरीकह्रदाद्विनिर्गमे विस्तारः । महापुण्डरीकस्य ह्रदस्य विष्कम्भो योजनसहस्रं १०००, तस्याशीत्या भागे हृते लब्धानि पूर्वप्रकारेण सार्धानि द्वादश योजनानि, एतावान् रुक्मिकूलाया महापुण्डरीकह्रदाद्विनिर्गमे विस्तारः । तथा केसरिह्रदस्य विस्तारो द्वे योजनसहस्रे २०००, तयोरशीत्या भागे हृते लब्धा पञ्चविंशतिः, एतावान्नारीकान्तायाः केसरिह्रदाद्विनिर्गमे विस्तारः । तथा पुण्डरीकह्रदविष्कम्भपरिमाणस्य पञ्चयोजनशतरूपस्य

चत्वारिंशता भागो ह्रियते, हृते च भागे लब्धानि पूर्वप्रकारेण सार्धानि द्वादश योजनानि, एतावान् सुवर्णकूलायाः पुण्डरीकह्रदाद्विनिर्गमे विष्कम्भः। तथा महापुण्डरीकह्रदविष्कम्भपरिमाणं योजनसहस्रं, तस्य चत्वारिंशता भागहारे लब्धा पञ्चविंशतिः, एतावान्नरकान्ताया महापुण्डरीकह्रदाद्विनिर्गमे विष्कम्भः। ( तथा ) केसरिह्रदविष्कम्भो योजनसहस्रद्वयं, तस्य चत्वारिंशता भागे हृते लब्धा पञ्चाशत्, एतावान् शीताया महानद्याः केसरिह्रदात् प्रवाहमूले विस्तारः ॥ २२६ ॥

सम्प्रति सर्वासामपि नदीनां समुद्रप्रवेशे विस्ताराधिगतौ करणमाह—

जो जीसे वित्थारो, सलिलाए होइ आढवंतीए।
सो दसहिं पडुप्पन्नो, मुहवित्थारो मुणेयव्वो ॥ २२७ ॥

व्याख्या—यस्याः सलिलाया नद्याः आरम्भमाणाया ह्रदाद्विनिर्गच्छन्त्या यो विस्तारो भवति, स दशभिः प्रत्युत्पन्नो गुणितः सन् यावान् भवति तावत्प्रमाणस्तस्या नद्या मुखे समुद्रप्रवेशे विस्तारो ज्ञातव्यः। तत्र गङ्गायाः सिन्धोश्च ह्रदादिवि ( दाद्वि ) निर्गमे विस्तारः षड् योजनानि सक्रोशानि तानि दशभिर्गुण्यन्ते, जातानि द्वाषष्टिर्योजनानि द्वौ च क्रोशौ, एतावान् गङ्गायाः सिन्धोश्च समुद्रप्रवेशे विस्तारः। एवं सर्वासामपि भावनीयम् ॥ २२७ ॥

सम्प्रति सकलनदीनां समुद्वेधावगमे करणमाह—

जो जत्थ उ वित्थारो, सलिलाए होइ जंबुदीवम्मि ।
पन्नासइमं भागं, तस्सुव्वेहं वियाणाहि ॥ २२८ ॥

व्याख्या—जम्बूद्वीपे या काचित्सलिला नदी गङ्गाप्रभृतिका तस्या यावान् यत्र प्रदेशे विस्तारस्तस्य विस्तारस्य पञ्चाशत्तमं भागं तत्र प्रदेशे उद्वेधं विजानीहि । यथा गङ्गाया ह्रदादिनिर्गमे विस्तारः षड् योजनानि सक्रोशानि, तत्र षड् योजनानि गव्यूतकरणाय चतुर्भिर्गुण्यन्ते, जाताश्चतुर्विंशतिः, उपरितनं च गव्यूतं तत्र प्रक्षिप्यते, जाताः पञ्चविंशतिः, सा च गव्यूतार्धकरणाय द्विकेन गुण्यते, जाताः पञ्चाशत्, तस्याः पञ्चाशता भागे हृते लब्धमेकं गव्यूतार्धम्, एतावान् गङ्गायाः प्रवाह उद्वेधः । एवमन्यत्रापि भावनीयम् ॥ २२८ ॥

सम्प्रति नदीनां प्रवाहादारभ्य पर्यन्तं यावदेकपार्श्वे विस्तारवृद्धौ करणमाह—

पवहमुहवित्थराणं, विसेसमद्धं भयाहि सरियाणं ।
सरियायामेण चउ, सा वुड्ढी एगपासम्मि ॥ २२९ ॥

व्याख्या—सरितां नदीनां प्रवहे ह्रदादिनिर्गमे यो विस्तारो यश्च मुखे समुद्रप्रवेशे, एतयोर्द्वयोरपि

१ नदीनामुद्वेधा० इति वा.

विश्लेषः क्रियते । किमुक्तं भवति ? मुखविस्तारात्प्रवाहविस्तारः शोध्यते, शोधिते च सति तस्मिन् यदवशिष्यते तस्यार्धं क्रियते, तच्चार्धं सरिदायामेन पञ्चचत्वारिंशत्सहस्रप्रमाणेन भज पञ्चचत्वारिंशत्सहस्रपरिमाणेन सरिदायामेन तस्यार्धस्य भागो ह्रियत इत्यर्थः, ततो यल्लब्धं तदिष्टप्रदेशगतयोजनशतसङ्ख्यया गुण्यते, गुणिते च सति यावद्भवति तावत्येकपार्श्वे इष्टप्रदेशे विस्तारस्य वृद्धिः । तथाहि—गङ्गाया ह्रदाद्विनिर्गमे विस्तारः षड् योजनानि सक्रोशानि, समुद्रप्रवेशे विस्तारो द्वाषष्टिर्योजनानि द्वौ च क्रोशौ, तत्र समुद्रप्रवेशविस्तारात् प्रवाहविस्तारः शोध्यते, शोधिते च तस्मिन् जातानि शेषाणि षट्पञ्चाशद्योजनानि सक्रोशानि, तत्र षट्पञ्चाशद् गव्यूतकरणाय चतुर्भिर्गुण्यते, जाते द्वे शते चतुर्विंशत्यधिके गव्यूतानां, उपरितनं च गव्यूतं तत्र प्रक्षिप्यते, जाते द्वे शते पञ्चविंशत्यधिके २२५, ततोऽयं राशिरर्धं न ददातीति गव्यूतार्धकरणाय द्विकेन गुण्यते, जातानि चत्वारि शतानि पञ्चाशदधिकानि ४५०, तेषामर्धे लब्धे द्वे शते पञ्चविंशत्यधिके २२५, ततोऽनयोः सरिदायामेन पञ्चचत्वारिंशत्सहस्रप्रमाणेन भागो ह्रियते, तत्र भागहारराशिर्महानित्युपरितनो राशिर्भागं न प्रयच्छति, तेन स धनूरूपः क्रियते, अर्धगव्यूते च धनुषां सहस्रमिति द्वे शते पञ्चविंशत्यधिके सहस्रेण गुण्येते, जाते द्वे लक्षे पञ्चविंशतिसहस्राधिके २२५०००, ततः पञ्चचत्वारिंशत्सहस्रैर्भागे हृते लब्धानि पञ्च धनूंषि, तत्र प्रवाहादेकयोजनान्ते यदा वृद्धिर्ज्ञातुमिष्यते, तदा तानि पञ्च धनूंषि एकेन गुण्यन्ते, एकेन च गुणितं तदेव भवतीति जातानि पञ्चैव धनूंषि, एतावती प्रवाहादेकयोजनान्ते वृद्धिः । योजनद्विकान्ते च वृद्धौ ज्ञातुमिष्यमाणायां तानि पञ्च धनूंषि

द्विकेन गुण्यन्ते, जायन्ते दश, एतावती प्रवाहादेकपार्श्वे योजनद्विकान्ते वृद्धिः, एवं सर्वत्रापि भावनीयम् । यावत्येव प्रवाहादारभ्य योजनैकयोजनद्विकान्तादावेकपार्श्वे वृद्धिस्तावत्येव समुद्रप्रवेशादारभ्य योजनैकयोजनद्विकाद्यन्ते एकपार्श्वे हानिरवगन्तव्या यावत्प्रवाहः ॥ २२९ ॥

सम्प्रत्युभयपार्श्वयोः पृथुत्ववृद्धौ करणमाह—

सा चेव दोहि गुणिया, उभओ पासम्मि होइ परिवुड्ढी ।

व्याख्या—या चैव योजनान्तादावेकपार्श्वे प्रागुक्तकरणवशाद्विस्तारवृद्धिरागच्छति सैव द्वाभ्यां गुणिता सती यावती भवति तावत्युभयपार्श्वयोर्वृद्धिस्तत्र पृथुत्वस्यावगन्तव्या, यथैकपार्श्वे योजनान्ते पृथुत्वस्य वृद्धिः पञ्च धनूंषि, तानि द्वाभ्यां गुण्यन्ते जातानि दश, एतावती योजनान्ते उभयपार्श्वयोः पृथुत्ववृद्धिः । एवमन्यत्रापि भावनीयम् ॥

तदेवमुक्तं पृथुत्ववृद्धौ करणम् । सम्प्रति यदुक्तं भयाहि सरियायामेण चउ त्ति तत्र सरिदायामसङ्ख्यामाह—

जावइया सलिलाओ माणुसलोगम्मि सव्वम्मि ॥ २३० ॥
पणयालीस सहस्सा, आयामो होइ सव्वसरियाणं ।
एसेव भागहारो सरियाणं वुड्ढिहाणीसु ॥ २३१ ॥

व्याख्या—यावत्यः सलिला नद्यः सर्वस्मिन् मानुषे लोके वर्तन्ते तासां सर्वसरितामभ्यायामो भवति पञ्चचत्वारिंशद्योजनसहस्राणि । एतच्च सर्वसरितामायामपरिमाणं कोट्टककरणवशादवसेयम् । उक्तं च संस्कृते बृहत्क्षेत्रसमासे—"सर्वनदीनामयमायामः कोट्टककरणभिन्नकत्र" इति, अत्र कलाशब्दः परिमाण-वाची, एष एव च पञ्चचत्वारिंशत्सहस्रप्रमाणो भागहारः सरितां नदीनां पृथुत्वस्यैकपार्श्वे वृद्धौ हानौ वा करणवशादानीयमानायां कर्तव्यः ॥ २३१ ॥

अधुना नदीनां पर्वतोपरि गमनसङ्ख्यामाह—

जा जाउ उ पवूढा, सलिला सेलेहिं तेसिं विक्खंभो ।

दहवित्थारेणूणो, सेसऊ सलिल गच्छंति ॥ २३२ ॥

व्याख्या—याः सलिला नद्यो रोहितांशाप्रभृतयो येभ्यः शैलेभ्यः प्रव्यूढा विनिर्गतास्तेषां शैलानां यो विष्कम्भो विस्तारः स ह्रदविस्तारेणोनः क्रियते, कृत्वा च यच्छेषमवतिष्ठते तस्यार्धं पर्वतस्योपरि सलिला रोहितांशादयो गच्छन्ति । इदं च करणं गङ्गासिन्धुरक्तारक्तवतीवर्जितानां शेषाणां रोहितांशा-दीनां सुवर्णकूलापर्यन्तानां द्रष्टव्यं, न गङ्गाप्रभृतीनां, ता हि ह्रदाद्विनिर्गत्य पूर्वं यथायोगं पूर्वस्यां पश्चि-मायां ( वा ) दिशि गच्छन्ति, पश्चाद्दक्षिणाभिमुखमुत्तराभिमुखं वा परावर्तन्ते, ततः प्रभूतमपि ताः पर्व-तस्योपरि गच्छन्तीति तद्वर्जनम् । तत्र रोहितांशायामिदं करणं परिभाव्यते—क्षुल्लहिमवतो विष्कम्भो

दश योजनशतानि द्विपञ्चाशदधिकानि द्वादश च कलाः, पद्महृदस्य च विस्तारः पञ्चशतयोजनानि, तानि हिमवतो विष्कम्भाच्छोध्यन्ते, शोधितेषु च जातानि शेषाणि पञ्च योजनशतानि द्विपञ्चाशदधिकानि द्वादश च कलाः, एतेषामर्धं द्वे योजनशते षट्सप्तत्यधिके षट् च कलाः, एतावद् हृदाद्विनिर्गत्योदगभिमुखं पर्वतस्योपरि रोहितांशाया गमनम् । एवं सर्वासामपि भावनीयम् ॥ २३२ ॥

सम्प्रत्यतिदेशेन सिन्धुवक्तव्यतामाह—

**एस विही सिंधूए, अवराभिमुहीए होइ नायव्वो ।**

व्याख्या—एष गङ्गानदीविषयो विधिरनन्तरोक्तः सिन्धोरपि नद्या वक्तव्यः । नवरं सा सिन्धुः प्रथमतो हृदाद्विनिर्गच्छन्ती पश्चिमाभिमुखं गच्छति, ततः सिन्धुवर्तनकूटस्याधोभागेन दक्षिणाभिमुखं परावर्तते एतच्च अपराभिमुख्या' इतिविशेषणद्वारेणोक्तं दक्षिणाभिमुखं पर्वतस्योपरि गत्वा सिन्धुप्रपातकुण्डे निपतति, तस्माच्च दक्षिणद्वारेण विनिर्गत्य तमिस्रगुहायाः पश्चिमदिग्भागेन वैताढ्यपर्वतमधो भित्त्वा दक्षिणभरतार्धे प्रविशति, तत्र च दक्षिणभरतार्धे किञ्चिद्दक्षिणाभिमुखं गत्वा ततः पश्चिमाभिमुखं परावर्तते, ततः पश्चिमदिग्भागेन जगतीमधो विभिद्य लवणसमुद्रमभिसर्पति । शेषं जिह्विकासिन्धुप्रपातकुण्डनदीपरिवारपरिमाणं गङ्गानदीवद्द्रष्टव्यम् ॥

सम्प्रति रोहितांशानदीवक्तव्यतामाह—

**सलिलाऽवि रोहियंसा, हरयाउ उत्तरदिसाए ॥ २३३ ॥**

जोयणसयाणि डुन्नि उ, गंतुं डावत्तराणि डच्च कला ।
नगसिहराउ निवडिय, नियए कुंडम्मि वइरतले ॥ २३४ ॥

व्याख्या—सलिलाऽपि नद्यपि रोहितांशा ह्रदाडुत्तरदिशा उत्तरदिग्भाविनस्तोरणस्य मध्यभागेनोत्तराभिमुखं विनिर्गच्छन्ती पर्वतस्योपरि द्वे योजनशते षट्सप्तत्यधिके षट् चैकोनविंशतिभागरूपाः कला गत्वा अत्रान्तरे योजनायामया सार्धद्वादशयोजनविष्कम्भया क्रोशबाहल्यया जिह्विकया विवृत्त ( त ) मकरमुखसंस्थितया वज्रमय्या जिह्वया महता मुक्तावलिहारसंस्थितेन सातिरेकयोजनशतप्रमाणेन प्रपातेन नगशिखरात् क्षुल्लहिमवतः शिखरान्निजक आत्मीये रोहितांशाप्रतापकुण्डाभिधाने कुण्डे वज्रमयतले निपतति ॥ २३४ ॥

सम्प्रति कुण्डादिप्रमाणातिदेशमाह—

कुंडुव्वेहो दीवु—च्चउ य गंगासमो मुणेयव्वो ।
जिब्भियमाई सेसो, डुगुणो पुण रोहियंसाए ॥ २३५ ॥

व्याख्या—कुण्डस्य रोहितांशाप्रपातकुण्डस्य उद्वेध उण्डत्वं द्वीपस्य रोहितांशाद्वीपस्य उच्छ्रयः, चशब्दाद्रोहितांशादेवीभवनपरिमाणादिकं च गङ्गासमं ज्ञातव्यं, शेषः पुनर्जिह्विकाकुण्डपृथुत्वादिको गङ्गानद्यपेक्षया द्विगुणः प्रत्येतव्यः । तत्र जिह्विका द्विगुणप्रमाणाऽनन्तरमेव दर्शिता, शेषं कुण्डायामादि

द्विगुणमुपदर्श्यते—तत्र रोहितांशाप्रपातकुण्डायामविष्कम्भाभ्यां विंशत्यधिकं योजनशतं, त्रीणि योजन-
शतानि अशीत्यधिकानि किञ्चिदूनानि परिक्षेपतो, दश योजनान्युद्वेधेन, इदमुद्वेधपरिमाणं गङ्गाकुण्ड-
समानम् । तस्य च रोहितांशाप्रपातकुण्डस्य पूर्वोत्तरपश्चिमरूपासु तिसृषु दिक्षु प्रत्येकमेकैकं तोरणं, तस्य
च कुण्डस्य मध्ये वज्रमयो रोहितांशाद्वीपो नाम द्वीपः, स च षोडश योजनानि आयामविष्कम्भाभ्यां
सातिरेकाणि पञ्चाशद्योजनानि परिक्षेपतो जलपर्यन्तादूर्ध्वं द्वौ क्रोशावुच्छ्रितः, इदमपि द्वीपस्य जलपर्य-
न्तादूर्ध्वमुच्चयपरिमाणं गङ्गाद्वीपसमानं, तस्य च रोहितांशाद्वीपस्य बहुसमे भूभागे रोहितांशाया देव्या
भवनं, तच्चाविशेषेण गङ्गादेवीभवनपरिमाणं वक्तव्यम् । सा च रोहितांशा महानदी रोहितांशाप्रपात-
कुण्डादुदीच्यस्य तोरणस्य मध्यभागेनोत्तराभिमुखं विनिर्गच्छति, सा च विनिर्गच्छन्त्यपान्तराले हैमवतव-
र्षभाविनीभिरनेकाभिर्नदीभिरापूर्यमाणा शब्दापातिवृत्तवैताढ्यसमीपे सर्वसङ्ख्यया चतुर्दशभिर्नदीसहस्रै-
रापूरिता भवति, ततः क्रोशद्वयेन शब्दापातिनं वृत्तवैताढ्यमप्राप्ता सती पश्चिमाभिमुखं परावर्तते, ततः
पश्चिमाभिमुखमपि गच्छन्ती हैमवतवर्षं द्विधा विभजमानाऽपान्तरालेऽनेकाभिर्नदीभिरापूर्यमाणा पर्यन्ते
सर्वसङ्ख्ययाऽष्टाविंशतिसङ्ख्यैर्नदीसहस्रैः समग्रा रोहितांशा पश्चिमदिग्भागेन जगतीमधो विभिद्य लवण-
समुद्रं प्रविशति, रोहितांशायाश्च नद्याः प्रवहे सार्धानि द्वादश योजनानि विष्कम्भतो, गव्यूतमेकमुद्वे-
धेन, समुद्रप्रवेशे पञ्चविंशत्यधिकं योजनशतं विष्कम्भतोऽर्धतृतीयानि योजनानि उद्वेधेन ॥ २३५ ॥

एतदेवाह—

तोरणवरेणुदीणे—ण निग्गया नियकुंडाओ साऽवि ।
सद्दावइं नगवरं, अप्पत्ता दोहिं कोसेहिं ॥ २३६ ॥
अवरेण परावत्ता, अडवीसनईसहस्सपरिवारा ।
गंगाडुगुणपमाणा, अवरेणुदहिं अणुप्पत्ता ॥ २३७ ॥

व्याख्या—साऽपि रोहितांशा नदी उदीच्येन तोरणवरेण निजककुण्डाद्रोहितांशाप्रपातकुण्डात् विनिर्गत्य शब्दापातिनं नगवरं वृत्तवैताढ्यं द्वाभ्यां क्रोशाभ्यामप्राप्ता सती अपरेणापराभिमुखं परावर्तते, सा च तथा परावृत्ता समुद्रप्रवेशे सर्वसङ्ख्ययाऽष्टाविंशतिनदीसहस्रपरिवारा गङ्गाद्विगुणप्रमाणा ;गङ्गा-नद्यपेक्षया द्विगुणप्रमाणविष्कम्भोद्वेधा पञ्चविंशत्यधिकयोजनशतविष्कम्भाऽर्धतृतीययोजनगाहत्येत्यर्थः । अपरेण पश्चिमदिग्भागेन उदधिं लवणोदसमुद्रं प्राप्ता ॥ २३६–२३७ ॥

सम्प्रति शिखरिनदीवक्तव्यताऽतिदेशे शेषमाह—

सिहरिम्मि वि एस कमो, पुंडरियदहम्मि लच्छिनिलयम्मि ।
नवरं सलिला रत्ता, पुव्वेणवरेण रत्तवई ॥ २३८ ॥

व्याख्या—शिखरिण्यपि वर्षधरे पर्वते एषोऽनन्तरोक्तः पद्मसङ्ख्यापरिमाणादिक्रमः सर्वोऽपि पुण्डरीक-

ह्रदे वक्तव्यः, कथंभूते इत्याह—लक्ष्मीनिलये लक्ष्मीदेवीनिवासभूते, अनेनैतदाह—श्रीदेवीस्थाने लक्ष्मीदेवी वक्तव्येति। यथा च गङ्गासिन्धुरोहितांशा नद्यस्तथा रक्तारक्तवतीसुवर्णकूला नद्यो वक्तव्याः, नवरमयं विशेषः—रक्ता रक्ताभिधाना सलिला नदी पूर्वेण पूर्वदिग्भागेन, रक्तवती अपरेण पश्चिमदिग्भागेन उदधिं प्रविशति ॥ २३८ ॥

सलिला सुवण्णकूला, दाहिणओ चेव दोहिं कोसेहिं।
वियडावइमप्पत्ता, पुव्वेणुदहिं समोगाढा ॥ २३९ ॥

व्याख्या—सलिला नदी सुवर्णकूला सुवर्णकूलाभिधाना पुण्डरीकह्रदाद्विनिर्गत्य दक्षिणतोरणद्वारेण दक्षिणाभिमुखं पर्वतस्योपरि गच्छति, ततः सुवर्णकूलाप्रपातकुण्डे निपत्य ततः प्रथमतो दक्षिणाभिमुखं प्रयाति, ततो विकटापातिनं वृत्तवैताढ्यं द्वाभ्यां क्रोशाभ्यामप्राप्ता सती पूर्वाभिमुखं परावृत्त्य पूर्वदिग्भागेनोदधिं समवगाढा। शेषं रोहितांशाया इव तस्याः सर्वं वक्तव्यम् ॥ २३९ ॥

सम्प्रति महाहिमवन्नदीवक्तव्यतामाह—

हिमवंते य महंते, हरयाओ दाहिणुत्तरपवूढा।
रोहियहरिकंताओ, मज्झेणं पव्वयवरस्स ॥ २४० ॥

१ पउमयाओ प्रत्यंतर।

सोलस सयाणि पंचु–त्तराणि पंच य कला उ गंतूणं ।
नगसिहरा पमियाउ, कुंडेसुं नियगनामेसुं ॥ २४१ ॥

व्याख्या—हिमवति महति महाहिमवतीत्यर्थः, यो ह्रदो महापद्माख्यो दक्षिणोत्तरविस्तीर्णो दशयोजनावगाढो द्वे योजनसहस्रे आयामतः एकं योजनसहस्रं विष्कम्भतः वज्रमयतलो रजतमयकूलः सुवर्णरजतमयवालुकः तन्मध्ये द्वियोजनायामविष्कम्भं महापद्मं, शेषा पद्मवक्तव्यता एतदनुसारेण पद्मह्रद इव समस्ताऽपि कर्तव्या, नवरं तस्य मूलभूतस्य पद्मस्योपरि भवनं ह्रीदेवतायोग्यमिति वक्तव्यम् । भवनस्य प्रमाणं श्रीदेवीभवनस्येव द्रष्टव्यम् । तस्माच्च पद्मह्रदाद्दक्षिणतोरणद्वारेण रोहिता महानदी विनिर्गच्छति, उत्तरतोरणद्वारेण तु हरिकान्ता, ते च द्वे अपि यथाक्रमं दक्षिणत उत्तरतश्च महाहिमवत्पर्वतस्योपरि मध्येन षोडश शतानि पञ्चोत्तराणि पञ्च कला एकोनविंशतिभागरूपा गत्वा, तथाहि—महाहिमवतो विष्कम्भो द्विचत्वारिंशद्योजनशतानि दशोत्तराणि दश च कलाः ४२१० क० १०, एतस्मान्महापद्मह्रदविस्तारो योजनसहस्रं शोध्यते, शोधिते च तस्मिन् जातानि शेषाणि द्वात्रिंशच्छतानि दशोत्तराणि दश च कलाः ३२१० क० १०, एतेषामर्धे लब्धानि षोडश शतानि पञ्चोत्तराणि पञ्च च कलाः १६०५ क० ५ । तत एतावत्प्रमाणं द्वे अपि नद्यौ प्रत्येकं पर्वतस्योपरि गत्वा सातिरेकद्वियोजनशतप्रमाणेन

मुक्तावलिहारसंस्थितेन प्रपातेन निजनामकयोः कुण्डयोर्निपततः, रोहिता महाहिमवतो दक्षिणेन रोहिताप्रपातकुण्डे निपतति, हरिकान्ता महाहिमवत उत्तरतो हरिकान्ताप्रपातकुण्डे ॥ २४०–२४१ ॥

कुंडुव्वेहो दीवु–स्सओ य सव्वत्थ होइ अणुसरिसो ।
जिब्भियमाई सेसो, दुगुणो दुगुणो उ नायव्वो ॥ २४२ ॥

व्याख्या—कुण्डस्योद्वेध उण्डत्वं द्वीपस्य चोच्छ्रायः, चशब्दाद्भवनपरिमाणं च सर्वत्र सर्वासु नदीषु भवति अनुसदृशस्तुल्यः । जिह्विकादिः पुनः शेषो विधिः पूर्वक्षेत्रगतनद्यपेक्षयाऽग्रेतनाग्रेतनक्षेत्रनदीषु द्विगुणो द्विगुणो ज्ञातव्यः । एकक्षेत्रभाविन्योस्तु नद्योस्तुल्यः, तद्यथा—रोहिता महानदी महाहिमवतो वर्षधरात् हैमवते वर्षे निपतति, ततो यदेव रोहितांशाया जिह्विकादिप्रमाणमुक्तं तदेव तस्या अपि द्रष्टव्यं, तथाहि—रोहिता सार्धद्वादशयोजनविष्कम्भया योजनायामया क्रोशबाहल्यया जिह्विकया रोहिताप्रपात-कुण्डे प्रपतति । तच्च रोहिताप्रपातकुण्डं विंशत्यधिकं योजनशतमायामविष्कम्भाभ्यां, त्रीणि योजनशता-न्यशीत्यधिकानि किञ्चिदूनानि परिक्षेपतो, दश योजनान्युद्वेधेन । तस्य च रोहिताप्रपातकुण्डस्य बहुमध्य-देशभागे रोहिताद्वीपो नाम द्वीपः, स च षोडश योजनान्यायामविष्कम्भाभ्यां, सातिरेकाणि पञ्चाशद्यो-जनानि परिक्षेपतो, द्वौ क्रोशौ जलपर्यन्तादूर्ध्वमुच्छ्रितः । तस्य च रोहिताद्वीपस्य मध्यभागे महदेकं रोहितादेवीयोग्यं भवनम् । तस्य च भवनस्य परिमाणं गङ्गादेवीभवनस्येवावसेयम् । तस्माच्च रोहिता-

प्रपातकुण्डाद्रोहिता नदी दक्षिणतोरणेन विनिर्गत्य दक्षिणाभिमुखं तावद्गच्छति यावच्छब्दापातिनं वृत्तवैताढ्यं क्रोशद्वयेन न प्राप्नोति, ततः पूर्वाभिमुखं परावर्तते, पूर्वाभिमुखं गच्छन्ती हैमवतवर्षं द्विधा विभजमाना समुद्रप्रवेशे सर्वसङ्ख्ययाऽष्टाविंशतिनदीसहस्रसमग्रा पूर्वदिग्भागेन जगतीमधो विभिद्य लवणसमुद्रं प्रविशति । यथा च रोहितांशायाः प्रवहे समुद्रप्रवेशे च विस्तारादिपरिमाणमुक्तं तथा रोहिताया अपि वक्तव्यं । हरिकान्ता तु महानदी हरिकान्ताप्रपातकुण्डे द्वियोजनप्रमाणायामया पञ्चविंशतियोजनविष्कम्भया द्विगव्यूतप्रमाणबाहल्यया जिह्विकया प्रपतति । तच्च हरिकान्ताप्रपातकुण्डं चत्वारिंशदधिके द्वे योजनशते आयामविष्कम्भाभ्यां, एकोनपष्ट्यधिकानि सप्त योजनशतानि परिक्षेपतः । तस्य च हरिकान्ताप्रपातकुण्डस्य वज्रमयस्य बहुमध्यदेशभागे महानेको वज्ररत्नमयो हरिकान्ताद्वीपो नाम द्वीपः । स च द्वात्रिंशद्योजनान्यायामविष्कम्भतः, एकोत्तरं योजनशतं परिक्षेपतः, द्वौ क्रोशौ जलपर्यन्तादूर्ध्वमुच्छ्रितः । तस्य चोपरि हरिकान्तादेवीयोग्यं भवनं, तच्च गङ्गादेवीभवनमिव प्रमाणतोऽवसेयम् । तस्माच्च हरिकान्ताप्रपातकुण्डादुत्तरेण तोरणेनोत्तराभिमुखं तावद्गच्छति यावद्योजनमात्रेण गन्धापातिनं वृत्तवैताढ्यं न प्राप्नोति, अत्रान्तरे हरिकान्ताप्रपातकुण्डादारभ्यापान्तराले हरिवर्षक्षेत्रभाविनीभिर्नदीभिरापूर्यमाणा सर्वसङ्ख्ययाऽष्टाविंशतिनदीसहस्रैरापूरिता भवति, ततः पश्चिमाभिमुखं परावर्तते, सा च पश्चिमाभिमुखं गच्छन्ती हरिवर्षक्षेत्रं द्विधा विभजमानाऽपान्तरालेऽनेकाभिर्नदीभिरापूर्यमाणा समुद्रप्रवेशे मूलत आरभ्य सर्वसङ्ख्यया षट्पञ्चाशन्नदीसहस्रैः समन्विता पश्चिमदिग्भागेन जगतीमधो विभिद्य लव-

णसमुद्रं प्रविशति । हरिकान्तायाश्च नद्याः प्रवहे विष्कम्भः पञ्चविंशतियोजनानि, द्वौ क्रोशावुद्वेधेन, समुद्रप्रवेशेऽर्धतृतीयानि योजनशतानि विष्कम्भतः, पञ्च योजनान्युद्वेधेन ॥ २४२ ॥

एतदेव विवक्षुः प्रथमतो हरिवर्षादिषु क्षेत्रेषु द्वे द्वे नद्यौ यावता प्रमाणेन वृत्तवैताढ्यं मेरुं वा न प्राप्ते तत्प्रतिपादयति—

दोण्हं दोण्ह नईणं, उभओऽविय जाव सीय सीओया ।
खेत्ते खेत्ते य गिरिं, अप्पत्ता दुगुणदुगुणेणं ॥ २४३ ॥

व्याख्या—उभयतो दक्षिणत उत्तरतश्च क्षेत्रे क्षेत्रे हरिवर्षादौ 'दोण्हं दोण्ह नईणं' प्राकृतत्वात्प्रथमार्थे षष्ठी, ततोऽयमर्थः—द्वे द्वे नद्यौ गिरिं स्वस्वक्षेत्रभाविनं वृत्तवैताढ्यं मेरुं वा द्विगुणद्विगुणेन प्रमाणेनाप्राप्ते भवतः तावद्यावत् शीताशीतोदे । तथाहि—हैमवते वर्षे रोहितांशारोहिते शब्दापातिनं वृत्तवैताढ्यं क्रोशद्वयेनाप्राप्ते, हरिवर्षे हरिकान्ताहरिसलिले गन्धापातिनं वृत्तवैताढ्यं योजनेन, महाविदेहेषु शीताशीतोदे मेरुं योजनद्वयेन । उत्तरतो हैरण्यवते वर्षे सुवर्णकूलारुक्मकूले विकटापातिनं वृत्तवैताढ्यं क्रोशद्वयेनाप्राप्ते, रम्यके नरकान्तानारीकान्ते माल्यवन्तं वृत्तवैताढ्यं योजनेन ॥ २४३ ॥

सम्प्रति रोहिताहरिकान्तयोर्नद्योर्वक्तव्यतामाह—

हेमवए मज्झेणं, पुव्वोदहिं रोहिया गया सलिला ।
हरिकंता हरिवासं, मज्झेण वरोयहिं पत्ता ॥ २४४ ॥

व्याख्या—रोहिताऽभिधाना सलिला नदी हैमवतवर्षमध्यभागेन पूर्वोदधिं पूर्वसमुद्रं गता प्रविष्टा, हरिकान्ता पुनर्नदी हरिवर्षक्षेत्रमध्येनापरोदधिं पश्चिमसमुद्रं च प्राप्ता, एतच्च प्रागेव भावितम् ॥ २४४ ॥

सम्प्रति महापुण्डरीकह्रदविनिर्गतनदीवक्तव्यतामाह—

सलिलाऽवि रुप्पकूला, रुप्पीउ उत्तरेण उवइउं ।
अवरोयहिं अइगया, पुव्वोदहिमवि य नरकंता ॥ २४५ ॥

व्याख्या—रुक्मिणः पर्वतस्योपरि महापुण्डरीको नाम ह्रदः, स च महापद्मह्रदप्रमाणः, तत्र च महापुण्डरीकह्रदवक्तव्यता महापद्मह्रद इव द्रष्टव्या । महापुण्डरीकह्रदाच्चोत्तरेणोत्तरतः सलिला रुप्यकूला विनिर्गता, सा च रुक्मिणो वर्षधरपर्वतादवपत्यापरेण पश्चिमदिग्भागेनोदधिं लवणसमुद्रं गता, सा च रोहितानदीवदविशेषेण वक्तव्या । तस्मादेव च महापुण्डरीकह्रदाद्दक्षिणतोरणेन विनिर्गता नरकान्ताऽपि नदी रुक्मिणो वर्षधरात्पर्वतादवपत्य पूर्वदिग्भागेन समुद्रमभिगता, सा च हरिकान्ता नदीव सामस्त्येन भणनीया ॥ २४५ ॥

सम्प्रति निषधनदीवक्तव्यतामाह—

हरि सीओया निसहे, गच्छंति नदी उ दाहिणुत्तरओ ।
चउहत्तरिं सयाइं, इगवीसाइं कलं चेगं ॥ २४६ ॥

व्याख्या—निषधे निषधस्योपरि यस्तिगिंछिनामा ह्रदो दक्षिणोत्तरविस्तीर्णो दशयोजनावगाढश्चत्वारि योजनसहस्राण्यायामतो द्वे योजनसहस्रे विष्कम्भतो वज्रमयतलो रजतमयकूलः सुवर्णरजतमयवालुकः, तस्य चतसृषु दिक्षु प्रत्येकमेकैकं तोरणं। तस्य च तिगिञ्छिह्रदस्य मध्ये धृतिदेवीयोग्यं पद्मं, तच्च चत्वारि योजनान्यायामविष्कम्भाभ्यां द्वे योजने बाहल्यतः तत्परिक्षेपभूतं चाष्टोत्तरं पद्मशतं तदर्धप्रमाणं, शेषा च पद्मवक्तव्यता सर्वाऽपि पद्मह्रद इव वक्तव्या। तस्माच्च तिगिञ्छिह्रदात् हरिशीतोदे नद्यौ दक्षिणोत्तरतो निर्गच्छतः, तद्यथा—दक्षिणतोरणेन हरिनदी निर्गच्छति, उत्तरतोरणेन शीतोदा, एते च द्वे अपि नद्यौ निषधपर्वतस्योपरि प्रत्येकं चतुःसप्ततिशतान्येकविंशत्यधिकानि योजनानां कलां चैकामेकोनविंशतिभागरूपां गच्छतः। तथाहि—निषधपर्वतस्य विस्तारः षोडश सहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि योजनानां द्वे च कले १६८४२ क० २, तिगिञ्छिह्रदस्य च विस्तारो द्वे योजनसहस्रे, ते निषधपर्वतविष्कम्भादपनीयेते, अपनीतयोश्च तयोर्जातानि शेषाणि चतुर्दश सहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि योजनानां द्वे च कले १४८४२ क० २, तत एतेषामर्धेन लब्धानि चतुःसप्ततिशतानि एकविंशत्यधिकानि (योजनानां) एका च कला ७४२१ क० १, एतावत्प्रमाणं (णा) हरिनदी शीतोदा च नदी यथाक्रमं दक्षिणत उत्तरतश्च निषधपर्वतस्योपरि गत्वाऽत्रान्तरे साधिकचतुर्योजनशतप्रमाणेन मुक्तावलिहारसंस्थितेन प्रपातेन स्वस्मिन् स्वस्मिन् कुण्डे प्रपतति, तद्यथा—हरिनदी हरिप्रपातकुण्डे शीतोदा शीतोदाप्रपातकुण्डे। तत्र हरिनद्या जिह्विकाप्रमाणं कुण्डप्रमाणं नदीपरिवारः प्रवाहे

समुद्रप्रवेशे च विस्तारादिकमेतत्सर्वं हरिकान्तानद्या इवाविशेषेण प्रतिपत्तव्यम्, एकक्षेत्रनिवासित्वात्-केवलं हरिनदी दक्षिणाभिमुखयोजनमात्रेण गन्धापातिनमप्राप्ता सती पूर्वाभिमुखं परावर्तते, ततः पूर्वं, दिग्भागेन जगतीमधो विभिद्य लवणसमुद्रं प्रविशति। या तु तिगिञ्छिहृदादुत्तरतोरणद्वारेण शीतोदा गच्छति सा चतुःसप्ततिशतान्येकविंशत्यधिकानि योजनानां कलां चैकां पर्वतस्योपरि गत्वा चतुर्योजनायामया पञ्चाशद्योजनविष्कम्भया योजनबाहल्यया वज्रमय्या जिह्विकया वज्रमयतले शीतोदाप्रपात-कुण्डे निपतति। तच्च शीतोदाप्रपातकुण्डं चत्वारि योजनशतानि अशीत्यधिकानि आयामविष्कम्भाभ्यां पञ्चदश योजनशतानि अष्टादशाधिकानि किञ्चिदूनानि परिक्षेपतः। तस्य च पूर्वोत्तरपश्चिमरूपासु तिसृषु दिक्षु प्रत्येकमेकैकं तोरणं। तस्य च शीतोदाप्रपातकुण्डस्य मध्यभागे शीतोदाद्वीपो नाम द्वीपः, स चतुःषष्टियोजनानि आयामविष्कम्भाभ्यां द्वे च योजनशते द्व्युत्तरे परिक्षेपतो द्वौ क्रोशौ जलपर्यन्ता-दूर्ध्वमुच्छ्रितः, तस्योपरि शीतोदादेवीयोग्यं भवनं, तस्य च भवनस्य परिमाणं गङ्गादेवीभवनस्येवावसेयम्। तस्माच्च शीतोदाप्रपातकुण्डादुत्तरतोरणद्वारेण शीतोदा महानदी प्रव्यूढा सती देवकुरुमध्यभागेन चित्र-विचित्रकूटौ निषधदेवकुरुसुरसुलसविद्युत्प्रभनामकांश्च पञ्च ह्रदान् द्विधा विभजमाना देवकुरुभाविनी-भिरनेकाभिर्नदीभिरपान्तराले समापूर्यमाणा समापूर्यमाणा भद्रशालवनमध्येन तावदुत्तराभिमुखं गच्छति यावद् द्वाभ्यां योजनाभ्यां मेरुमप्राप्ता भवति। अत्रान्तरेऽपान्तरालभाविनीभिर्नदीभिर्मूलत आरभ्य सर्वसङ्ख्यया चतुरशीतिसहस्रसङ्ख्याभिः समेता भवति, ततो योजनद्विकेन मेरुमप्राप्ता सती विद्युत्प्रभस्य

वक्षस्कारगिरेरधोभागेन पश्चिमाभिमुखं परावर्तते, सा च पश्चिमाभिमुखं व्रजन्ती अपरविदेहान् द्विधा विभजमाना एकैकस्माद्विजयान्नदीनामष्टाविंशतिसहस्रैः अष्टाविंशतिसहस्रैः समुद्रप्रवेशे मूलत आरभ्य सर्वसङ्ख्यया पञ्चभिर्नदीनां शतसहस्रैर्द्वात्रिंशत्सहस्राधिकैः समेता जयन्ताभिधस्य द्वारस्याधो जगतीं विभिद्य पश्चिमदिग्भागेन लवणसमुद्रं प्रविशति । तस्याश्च शीतोदामहानद्याः प्रवहे पञ्चाशद्योजनानि विष्कम्भ उद्वेधो योजनं, समुद्रप्रवेशे विष्कम्भः पञ्च योजनशतानि दशयोजनान्युद्वेधः ॥ २४६ ॥

एतदेवाह—

हरिवासं मज्झेणं, हरिसलिला पुव्वसागरं पत्ता ।
कुरुाउ सीउया, उत्तरदिसि पभिया संती ॥ २४७ ॥
देवकुरुं पजांती, पंच वि हरए दुहा विभयमाणी ।
आपूरमाणसलिला, चुलसीइनईसहस्सेहिं ॥ २४८ ॥
मेरुवणं मज्झेणं, अट्ठहिं कोसेहिं मेरुमप्पत्ता ।
विज्जुप्पभस्स हिट्ठेण, वराभिमुही अह प्पयाया ॥ २४९ ॥

विजया वि य एक्केका, अठावीसाइनइसहस्सेहिं ।
आऊरमाणसलिला, अवरेणुदहिं अणुप्पत्ता ॥ २५० ॥

व्याख्या—हरिवर्षमध्ये हरिसलिला नदी विनिर्गच्छन्ती गन्धापातिनं वृत्तवैताढ्यं योजनेनाप्राप्ता पूर्वाभिमुखं परावृत्ता पूर्वसागरं पूर्वदिग्भागेन लवणसमुद्रं प्राप्ता । शीतोदा पुनर्नदी कुण्डात् शीतोदाप्रपातकुण्डात् उत्तरदिशि उत्तरदिगभिमुखं प्रस्थिता सती देवकुरून् परियन्ती देवकुरुमध्यभागेन गच्छन्ती पञ्चापि ह्रदान्निषधह्रदादीन् द्विधा विभजमाना चतुरशीतिनदीसहस्रैरापूर्यमाणसलिला मेरुवनमध्येन भद्रशालवनमध्यभागेन प्रयाति, सा चैवं प्रयान्ती अष्टभिः क्रोशैर्द्वाभ्यां योजनाभ्यां मेरुमप्राप्ता सती विद्युत्प्रभस्य वक्षस्कारगिरेरधोभागेनापराभिमुखी पश्चिमाभिमुखी परावर्तते। अथ पश्चिमाभिमुखं प्रयाता सती विजयादपि एकैकस्मात् प्रत्येकमष्टाविंशत्या नदीसहस्रैरापूर्यमाणसलिला, तथाहि—शीतोदाया दाक्षिणात्येष्वष्टसु विजयेषु प्रत्येकं द्वे द्वे गङ्गासिन्ध्वभिधाने महानद्यौ, औत्तराहेषु पुनरष्टसु विजयेषु प्रत्येकं द्वे द्वे रक्तारक्तवत्यभिधाने, एकैका च नदी चतुर्दशचतुर्दशनदीसहस्रपरिवारा, तत एकैकस्माद्विजयादष्टाविंशत्या नदीसहस्रैरापूर्यमाणसलिला भवति, तत एवंभूता सती अपरेण पश्चिमदिग्भागेनोदधिं लवणसमुद्रमनुप्राप्ता ॥ २४७–२४८–२४९–२५० ॥

सम्प्रति नीलवद्वर्षधरनदीवक्तव्यतामाह—

सीयाऽवि दाहिणदिसं, हरए उत्तरकुरा उ दालिंती ।
अप्पत्ता मेरुगिरिं, पुव्वेणं सागरमईइ ॥ २५१ ॥

व्याख्या—नीलवतः पर्वतस्योपरि केसरिनामा ह्रदः, स च तिगिञ्छिह्रद इवाविशेषेण सपद्मवक्तव्यताको वक्तव्यः । तस्माच्च केसरिह्रदात् शीताऽपि नदी दक्षिणतोरणेन विनिर्गता शीताप्रपातकुण्डे निपतति । ततोऽपि दक्षिणतोरणेन विनिर्गता उत्तरकुरून् यमकपर्वतौ नीलवदुत्तरकुरुचन्द्रैरावतमाल्यवन्नामकान् पञ्च ह्रदांश्च द्विधा विभजमाना भद्रशालवनमध्येन दक्षिणाभिमुखं तावत्प्रयाति यावत् द्वाभ्यां योजनाभ्यां मेरुं न प्राप्नोति, अत्रान्तरेऽपान्तरालभाविनीभिरनेकाभिर्नदीभिर्मूलत आरभ्य सर्वसङ्ख्यया चतुरशीतिसहस्रसङ्ख्याभिरापूरिता भवति । ततो योजनद्वयेन मेरुमप्राप्ता सती माल्यवतो वक्षस्कारगिरेरधोभागेन पूर्वाभिमुखं परावर्तते, पूर्वाभिमुखं गच्छन्ती पूर्वविदेहान् द्विधा विभजमाना एकैकस्माद्विजयादष्टाविंशत्या नदीसहस्रैरापूर्यमाणसलिला समुद्रप्रवेशे प्रवहादारभ्य सर्वसङ्ख्यया पञ्चभिर्नदीशतसहस्रैर्द्वात्रिंशत्सहस्राधिकैः समेता विजयद्वारस्याधो जगतीं विभिद्य पञ्चयोजनशतविष्कम्भा दशयोजनोद्वेधा पूर्वेण दिग्भागेन लवणसमुद्रमभ्येति । शेषं जिह्विकादिप्रमाणं शीतोदाया इव द्रष्टव्यम् ॥ २५१ ॥

सलिलाऽवि नारिकंता, उत्तरउ मालवंतपरियागं ।
चउकोसेहिं अपत्ता, अवरेणं सागरमईइ ॥ २५२ ॥

व्याख्या—सलिलाऽपि नारीकान्ता तस्मादेव केसरिह्रदादुत्तरतोरणेन विनिर्गत्योत्तराभिमुखं चतुःसप्ततिशतानि एकविंशत्यधिकानि योजनानां कलां चैकां पर्वतस्योपरि गत्वाऽत्रान्तरे द्वियोजनप्रमाणायामया पञ्चविंशतियोजनविष्कम्भया द्विगव्यूतप्रमाणबाहल्यया जिह्विकया मुक्तावलीहारसंस्थितेन सातिरेकचतुर्योजनशतप्रमाणेन प्रपातेन वज्रमयतले नारीकान्ताप्रपातकुण्डे निपतति। कुण्डस्य कुण्डमध्यवर्तिनो द्वीपस्य तदुपरिभवनस्य च परिमाणं हरिनद्या इव वेदितव्यम्। ततोऽसौ नारीकान्ता तस्मान्नारीकान्ताप्रपातकुण्डादुत्तराभिमुखं तावद्गच्छति यावच्चतुर्भिः क्रोशैर्माल्यवत्पर्यायं वृत्तवैताढ्यं न प्राप्नोति, अत्रान्तरे च नारीकान्ताप्रपातकुण्डादारभ्यापान्तराले रम्यकवर्षभाविनीभिर्नदीभिरापूर्यमाणाऽऽपूर्यमाणा सर्वसङ्ख्ययाऽष्टाविंशतिनदीसहस्रैरापूरिता भवति। ततः पश्चिमाभिमुखं परावर्तते, सा च पश्चिमाभिमुखं गच्छन्ती रम्यकक्षेत्रं द्विधा विभजमानाऽपान्तरालेऽनेकाभिर्नदीभिरापूर्यमाणा समुद्रप्रवेशे कुण्डादारभ्य सर्वसङ्ख्यया षट्पञ्चाशन्नदीसहस्रैः परिवृता पश्चिमदिग्भागेन जगतीमधो विभिद्य सागरं लवणसमुद्रमभ्येति। तस्याश्च नारीकान्ताया महानद्याः प्रवहे समुद्रप्रवेशे च विष्कम्भादिपरिमाणं हरिनद्या इव द्रष्टव्यम् ॥ २५२ ॥

सम्प्रति हैमवतहैरण्यवतक्षेत्रयोर्मनुष्याणां प्रमाणादिकमाह—

गाउयमुच्चा पलिओ—वमाउणो वज्जरिसहसंघयणा।
हेमवएरन्नवए, अहमिंद नरा मिहुणवासी ॥ २५३ ॥

चउसठी पिठकरं—न्याण मणुयाण तेसिमाहारो ।

न्नत्तस्स चउत्थस्स य, गुणसीदिणवच्चपालणया ॥ २५४ ॥

व्याख्या—हैमवते हैरण्यवते च वर्षे प्रत्येकं नरा मनुष्या मिथुनवासिनो मिथुनं स्त्रीपुरुषयुग्मं तद्रूपतया वसन्तीत्येवंशीला मिथुनवासिनो, गव्यूतमुच्चाः क्रोशपरिमाणशरीरोच्छ्रयाः, तथा पल्योपमायुषः पल्योपममायुर्येषां ते तथा, इदं चोत्कर्षत आयुःप्रमाणमुक्तं, जघन्यतः पुनः पल्योपमासङ्ख्येयन्नागहीनं पल्योपमं न्द्रष्टव्यम् । तथा च जीवान्निगमे स्त्रियमधिकृत्योक्तम्—"हेमवयहेरणवयअकम्मन्नूमगमणुस्सित्थीणं न्नंते केवइकालं ठिई पन्नत्ता ? गोयमा ! जहन्नेणं देसूणं पलिउवमं पलिउवमस्स असंखेजइन्नागेणं ऊणगं उक्कोसेणं एगपलिउवमं" इति । वज्रर्षन्ननाराचसंज्ञं संहननं येषां ते वज्रर्षन्ननाराचसंहननाः, उपलक्षणमेतत्, तेनानुलोमवायुवेगाः कङ्ककुक्षिपरिमाणाः, समचतुरस्रसंस्थानाः, सुरूपाः, तद्यथा—सुप्रतिष्ठितकूर्मचारुचरणाः सुकुमारश्लक्ष्णप्रविरलरोमकुरुविन्दवृत्तजङ्घायुगला निगूढसुवद्धसन्धिजानुप्रदेशाः करिकरसमवृत्तोरवः कण्ठीरवसदृक्षकटिप्रदेशाः शक्रायुधसममध्यन्नागाः प्रदक्षिणावर्तनान्निमण्डलाः श्रीवत्सलाञ्छितविशालमांसलवक्षस्थलाः पुरपरिघानुकारिदीर्घबाहवः सुश्लिष्टमणिबन्धा रक्तोत्पलपत्रानुकारिशोणिमपाणिपादतलाश्चतुरङ्गुलप्रमाणसमवृत्तकम्बुग्रीवाः शारदशशाङ्कसोमवदनाश्छत्राकारशिरसोऽस्फुटितस्निग्धकान्तिश्लक्ष्णमूर्धजाः कमण्डलुकलशयूपस्तूपवापीछत्रध्वजपताकासौवस्तिक-

यवमत्स्यमकरकूर्मरथवरस्थालशुकाष्टापदाङ्कुशसुप्रतिष्ठकमयूरश्रीदामाभिषेकतोरणमेदिनीजलधिवरभवना-
दर्शपर्वतगजवृषभसिंहचामररूपप्रशस्तोत्तमद्वात्रिंशल्लक्षणधराः । स्त्रियोऽपि सुजातसर्वाङ्गसुन्दर्यः समस्त-
महिलागुणसमन्विताः संहिताङ्गुलिदलपद्मसुकुमारकूर्मसंस्थानमनोहारिचरणाः रोमरहितप्रशस्तलक्षणो-
पेतजङ्घायुगला निगूढसन्धिमांसलजानुप्रदेशाः कदलीस्तम्भनिभसंहतसुकुमारपीवरोरुकाः वदनायामप्र-
माणद्विगुणमांसलविशालजघनधारिण्यः स्निग्धकान्तिसुविभक्तश्लक्ष्णरोमराजयः प्रदक्षिणावर्ततरङ्गभङ्गुर-
नाभिमण्डलाः प्रशस्तलक्षणोपेतकुक्षयः सङ्गतपार्श्वाः कनककलशोपमसमसहितात्युन्नतवृत्ताकृतिपीवरपयो-
धराः सुकुमारबाहुलतिकाः सौवस्तिकशङ्खचक्राद्याकृतिरेखालङ्कृतपाणिपादतला वदनत्रिभागोच्छ्रितमांसल-
कम्बुग्रीवाः प्रशस्तलक्षणोपेतमांसलहनुविभागा दाडिमपुष्पानुकारिशोणिमाधरोष्ठा रक्तोत्पलतालुजिह्वा
विकसितकुवलयपत्रायतकान्तलोचना आरोपितचापपृष्ठाकृतिसुसङ्गतभ्रूलताकाः प्रमाणोपपन्नललाटफलकाः
सुस्निग्धकान्तश्लक्ष्णशिरोरुहाः पुरुषेभ्यः किञ्चिदूनोच्छ्रयाः स्वभावत उदारशृङ्गारचारुवेषाः प्रकृत्यैव
हसितभणितिविलासविषयपरमनैपुण्योपेताः । तथा मनुष्याश्च स्वभावत एव सुरभिवदनाः प्रतनुक्रोधमा-
नमायालोभाः संतोषिणो निरौत्सुक्या मार्दवार्जवसंपन्नाः सत्यपि मनोहारिणि कनकमौक्तिकादौ ममत्व-
कारणे ममत्वाभिनिवेशरहिताः सर्वथाऽपगतवैरानुबन्धा हस्त्यश्वकरभगोमहिषादिसद्भावेऽपि तत्परिभो-
गपराङ्मुखाः पादविहारिणो ज्वरादिरोगयक्षभूतपिशाचादिग्रहमारिव्यसनोपनिपातविकलाः । तथा 'अह-
मिंद त्ति' सर्वेऽपि मनुष्यास्तत्राहमिन्द्राः, परस्परं प्रेष्यप्रेषकभावरहितत्वात् । तथा तत्रत्यानां मनुष्याणां

पृष्ठकरण्डकानि चतुःषष्टिसङ्ख्यानि भवन्ति। चतुर्थस्य च भक्तस्योर्ध्वमेकोपवासातिक्रम इत्यर्थः आहार आहारग्रहणं, स चाहारो न शाल्यादिधान्यनिष्पन्नः किंतु पृथ्वीमृत्तिका कल्पद्रुमाणां पुष्पफलानि च, तथाहि–जायन्ते खलु तत्रापि विश्रसात एव शालिगोधूममाषमुद्गादीनि धान्यानि, परं न तानि मनुष्याणामुपभोगं गच्छन्ति, या तु पृथिवी सा शर्करातोऽप्यनन्तगुणमाधुर्या, यश्च कल्पद्रुमफलानामास्वादः स चक्रवर्तिभोजनादप्यनन्तगुणः, तथा चोक्तं—"तेसि णं भंते पुप्फफलाणं केरिसे आसाए पन्नत्ते? गोयमा! से जहानामए रन्नो चाउरंतचक्कवट्टिस्स कल्लाणे भोयणजाते सयसहस्सनिप्फन्ने वन्नोववेए गंधोववेए रसोववेए आसायणिज्जे दप्पणिज्जे मयणिज्जे विंहणिज्जे सव्विंदियगायपल्हायणिज्जे आसाए एत्तो इट्ठतरा चेव आसाए पन्नत्ते"। ततः पृथिवी कल्पद्रुमपुष्पफलानि च तेषामाहारः, तथाभूतं चाहारमाहार्य प्रासादादिसंस्थाना ये गृहाकाराः कल्पद्रुमास्तेषु यथासुखमवतिष्ठन्ते, न च तत्र क्षेत्रे दंशमशकयूकामत्कुणमक्षिकादयः शरीरोपद्रवकारिणो जन्तव उपजायन्ते, येऽपि जायन्ते गजव्याघ्रसिंहादयस्तेऽपि मनुष्याणां न बाधायै प्रभवन्ति, नापि ते परस्परं हिंस्यहिंसकभावे वर्तन्ते, क्षेत्रानुभावतो रौद्रभावरहितत्वात्। मनुष्ययुगलानि च पर्यवसानसमये युगलं प्रसुवते, जातं च युगलमेकोनाशीतिदिनानि पालयन्ति, तथा चाह—'गुणसीदिणवच्चपालणया' अपत्यपालना एकोनाशीतिदिनानि। स्तोककषायतया स्तोकप्रेमानुबन्धतया च ते मृत्वा दिवमुपसर्पन्ति, मरणं च तेषां जृम्भाकासक्षुतादिमात्रव्यापारपुरस्सरं भवति, न शरीरपीडारम्भपुरस्सरमिति ॥ २५३–२५४ ॥

सम्प्रति हरिवर्षरम्यकक्षेत्रयोर्मनुष्याणामायुःप्रमाणादिकमाह—

हरिवासरम्मएसु उ, आउपमाणं सरीरमुस्सेहो।
पलिउवमाणि दोन्नि उ, दोन्नि य कोसूसिया भणिया ॥ २५५ ॥
छट्ठस्स य आहारो, चउसट्ठिदिणाणि पालणा तेसिं।
पिट्ठकरंडाण सयं, अट्ठावीसं मुणेयव्वं ॥ २५६ ॥

व्याख्या—हरिवर्षरम्यकयोः क्षेत्रयोः पुनः, तुशब्दः पुनरर्थे, मनुष्याणामायुःप्रमाणं शरीरस्य चोत्सेधो यथाक्रमं सदा द्वे पल्योपमे द्वौ च क्रोशौ भणितौ तीर्थंकरादिभिः। आयुःप्रमाणं चेदमुत्कर्षतो द्रष्टव्यं, जघन्यतः पुनर्द्वे पल्योपमे पल्योपमासङ्ख्येयभागहीने। तथा च स्त्रियमधिकृत्य जीवाभिगमसूत्रम्—"हरिवासरम्मगवासअकम्मभूमगमणुस्सित्थीणं भंते केवइयं कालं ठिई पन्नत्ता? गोयमा! जहन्नेणं देसूणाइं दो पलिउवमाइं पलिउवमासंखेज्जभागेणं, उक्कोसेणं दो पलिउवमाइं" तथा षष्ठभक्तस्योर्ध्वमुपवासद्वयातिक्रमे इत्यर्थः, आहार आहारग्रहणं। तथा तेषां हरिवर्षरम्यकभाविनां मनुष्याणां जन्मानन्तरं मातापितृभ्यां पालना क्रियते चतुःषष्टिदिनानि, तत ऊर्ध्वं तौ मातापितरौ क्षुतादियोगेन मरणमुपगम्य देवलोकमुपसर्पतः। तथा तेषां मनुष्याणां पृष्ठकरण्डकानां शतमष्टाविंशत्यधिकं ज्ञातव्यम्।

शेषं संहननादिकं पूर्ववद्वक्तव्यं, नवरं हैमवतहैरण्यवतवर्षापेक्षयाऽत्र मनुष्याणामुत्थानबलवीर्यादिकं कल्प-पादपानामास्वादो भूमेर्माधुर्यमित्येवमादिका भावाः पर्यायानधिकृत्यानन्तगुणा ज्ञातव्याः ॥ २५५–२५६ ॥

सम्प्रति देवकुरूत्तरकुरुवक्तव्यतामाह—

**मज्झे महाविदेहस्स, मंदरो तस्स दाहिणुत्तरओ ।**
**चंदद्धसंठियाओ, दो देवकुरूत्तरकुराओ ॥ २५७ ॥**

व्याख्या—महाविदेहस्य मध्ये मध्यभागे, तथाहि—महाविदेहक्षेत्रं चतुर्धा, तद्यथा—पूर्वविदेहा अपरविदेहा देवकुरव उत्तरकुरवः ( च )। एतेषां च चतुर्णामपि क्षेत्राणां बहुमध्यदेशभागे मन्दरो गिरिः, मन्दरो नाम मेरुरुच्यते, मेरोर्हि मेरुनामसहितानि षोडश नामानि, तद्यथा—मन्दरो मेरुर्मनोरमः सुदर्शनः स्वयंप्रभो गिरिराजो रत्नोच्चयः शिलोच्चयो लोकमध्यो लोकनाभिः अच्छः सूर्यावर्तः सूर्यावरणो गिर्युत्तमो दिगादिः गिर्यवतंसकः ( च )। तत्र मन्दरो नाम देवस्तत्र पल्योपमस्थितिको महर्द्धिकः परि-वसति, तेन तद्योगान्मन्दर इत्यभिधीयते १, एवं मेरुरिति नामापि परिभावनीयं २, तथा मनांसि देवाना-मप्यतिसुरूपतया रमयतीति मनोरमः ३, शोभनं जाम्बूनदमयतया रत्नबहुलतया च मनोनिर्वृतिकरं दर्शनं यस्यासौ सुदर्शनः ४, स्वयमादित्यादिनिरपेक्षका रत्नबहुलतया प्रभा प्रकाशो यस्य स स्वयंप्रभः५, तथा सर्वेषामपि गिरीणामुच्चैस्त्वेन तीर्थकरजन्माभिषेकाश्रयतया च राजा गिरिराजः ६, तथा रत्नानां

नानाविधानामुत्पादबहुल्येन चय उपचयो यत्र स रत्नोच्चयः ७, शिलानां पाण्डुकम्बलशिलाप्रभृतीनां वक्ष्यमाणस्वरूपाणामुत् ऊर्ध्वं शिरस उपरि चयः संचयो यत्र स शिलोच्चयः ८, ( तथा लोकमध्यः सर्वतिर्यग्लोकस्य मध्यवर्तीति लोकमध्यः ९, ) तथा लोकस्य तिर्यग्लोकस्य नाभिरिव स्थालमध्यगतः समुन्नतवृत्तचन्द्रक इव लोकनाभिः १०, तथाऽच्छः स्वच्छः सुनिर्मलजाम्बूनदरत्नबहुलत्वात् ११, तथा सूर्या उपलक्षणमेतत् चन्द्रग्रहनक्षत्रतारकाश्च प्रदक्षिणमावर्तन्ते यस्य स सूर्यावर्तः १२, तथा सूर्यैः उपलक्षणमेतत् चन्द्रग्रहनक्षत्रतारकाभिश्च समंततः परिभ्रमणशीलैरावियते स्म वेष्ट्यते स्मेति सूर्यावरणः, "कृद्बहुलं" ( सिद्धहेम ) इतिवचनात्कर्मण्यनट् प्रत्ययः १३, तथा गिरीणामुत्तमो गिर्युत्तमः १४, दिशामादिः प्रभवो दिगादिः, तथाहि—रुचकाद्दिशां विदिशां च प्रभवः, रुचकश्चाष्टप्रदेशात्मको मेरुमध्यवर्ती, ततो मेरुरपि दिगादिरित्युच्यते १५, तथा गिरीणामवतंसको गिर्यवतंसकः १६। न चैतदनार्षं, यत उक्तं जम्बूद्वीपप्रज्ञप्तौ—"मंदरस्स णं भंते पव्वयस्स कइ नामधेज्जा पन्नत्ता? गोयमा! सोलस नामधेज्जा पन्नत्ता, तं जहा—मंदर मेरु मणोरम, सुदंसण सयंपभे य गिरिराया। रयणुच्चए सिलोच्चय, मज्झे लोगस्स नाभीया ॥ १ ॥ अच्छे य सूरियावत्ते, सूरियावरणे इय। उत्तमे य दिसाईया, वडिंसेइ य सोलसे ॥ २ ॥" तस्य मन्दरस्य पर्वतस्य दक्षिणोत्तरतो यथाक्रमं द्वे कुरुनामके क्षेत्रे, तद्यथा—

देवकुरव उत्तरकुरवः ( च ) कुरूणां बहुवचनान्तत्वेऽपि द्वयोरेकवचनयोर्भावात्सूत्रे 'दो' इत्यादौ द्विवचनं निर्दिष्टं, ततस्तयोर्भेदे सत्येकवचनमित्यर्थः। किमुक्तं भवति? दक्षिणतो देवकुरव उत्तरत उत्तरकुरवः।

एकवचनं सूत्रे प्राकृतत्वात्, यदिवा वस्तूनामनन्तधर्मात्मकत्वादेकवचनान्तवाच्यताऽपि द्रष्टव्या । अथ कस्मादेतयोः क्षेत्रयोरेवंभूते नाम्नी ? उच्यते—तथानामकदेवाधिपत्ययोगात्, तथाहि—देवकुरुषु देवकुरुनामा देवः पल्योपमस्थितिको महर्द्धिक आधिपत्यं परिपालयति, तेन तद्योगात्ता देवकुरव इत्युच्यन्ते, उत्तरकुरुषु उत्तरकुरुनामा देवः, तेन ता उत्तरकुरवः । उक्तं च—"से केणट्ठेणं भंते एवं वुच्चइ उत्तरकुरा इति ? गोयमा ! उत्तरकुराए उत्तरकुरू नामं देवे परिवसइ महिड्ढिए जाव पलिओवमट्ठिईए, से एएणट्ठेणं गोयमा एवं वुच्चइ उत्तरकुरा" इति । तथा—"से केणट्ठेणं भंते एवं उच्चइ देवकुरा इति ? गोयमा ! देवकुराए देवकुरू नामं देवे पलिओवमट्ठिईए परिवसइ, से एएणट्ठेणं गोयमा एवं वुच्चइ देवकुरा" इति । ताश्च देवकुरव उत्तरकुरवश्च प्रत्येकं चन्द्रार्धसंस्थिता अर्धचन्द्रसंस्थानसंस्थिताः पूर्वापरायताः पूर्वापरतया दीर्घाः दक्षिणोत्तराः ( ततः ) रुन्दा विस्तीर्णाः गजदन्तसंस्थिताभ्यां गजदन्तसंस्थानसंस्थिताभ्यां द्वाभ्यां वक्षस्कारगिरिभ्यां गुप्ताः कृतमर्यादाः ॥ २५७ ॥

सम्प्रति वक्षस्कारगिरीणां नामनिर्देशं करोति—

विज्जुप्पभ सोमणसा, देवकुराए पइन्नपुव्वेण ।
इयरीए गंधमायण, एवं चिय मालवंतो वि ॥ २५८ ॥

व्याख्या— देवकुरवो विद्युत्प्रभसौमनसाभ्यां गुप्ताः, उत्तरकुरवो गन्धमादनमाल्यवद्भ्याम् । तत

विद्युत्प्रभसौमनसौ देवकुरूणामपाचीनपूर्वतया व्यवस्थितौ, देवकुरूणां पश्चिमदिशि विद्युत्प्रभः पूर्वस्यां दिशि सौमनस इत्यर्थः। तथा उत्तरस्या उत्तरकुरोः 'एवं चिय' एवमेव अपाचीनपूर्वतया इत्यर्थः गन्धमादनो माल्यवांश्च वेदितव्यः, उत्तरकुरूणां पश्चिमदिशि गन्धमादनः पूर्वस्यां माल्यवान् इति भावः। अथ कस्मादेतेषामेवंभूतानि नामानि? उच्यते—विद्युत्प्रभो विद्युदिव जात्यतपनीयतया प्रकर्षेण सर्वतः समंततो भासते, तेन विद्युत्प्रभः, यदिवा विद्युत्प्रभो नाम देवस्तत्र पल्योपमस्थितिको महर्द्धिक आधिपत्यं परिपालयति, तेन तद्योगाद्विद्युत्प्रभ इत्युच्यते, उक्तं च—"से केणट्ठेणं भंते एवं वुच्चइ विज्जुप्पभ वक्खारपव्वए इति? गोयमा! विज्जुप्पभेणं वक्खारपव्वते विज्जुमिव सव्वतो समंता ओभासइ उज्जोवइ पभासइ। विज्जुप्पभे य एत्थ देवे पलिओवमट्ठिईए महिड्ढीए जाव परिवसइ। से एएणट्ठेणं गोयमा! एवं वुच्चइ विज्जुप्पभे वक्खारपव्वए" इति। तथा सौमनसे वक्षस्कारपर्वते बहवो देवा देव्यश्च सुमनसः प्रशान्तचेतसः परिवसन्ति, ततः सुमनसामयमावास इति सौमनस इत्युच्यते, अथवा सौमनसो नाम देवस्तत्र पल्योपमस्थितिकः परिवसति, तेन तद्योगात्सौमनसः, उक्तं च—"से केणट्ठेणं भंते एवं वुच्चइ सोमणसे वक्खारपव्वए? गोयमा! सोमणसे णं वक्खारपव्वते बहवो देवा य देवी य सोम्मा सुमणसो य एत्थ देवे महिड्ढीए जाव परिवसति, से एएणट्ठेणं गोयमा एवं वुच्चइ सोमणसे वक्खारपव्वते" इति। तथा गन्धमादनवक्षस्कारपर्वते गन्धः कोष्ठपुटादिभ्योऽप्यतिशायनतरो मनोज्ञतरस्तथाक्षेत्रस्वाभाव्यात्समन्ततः सर्वासु दिक्षु विदिक्षु च प्रवर्तते, ततो गन्धेन स्वयं माद्यतीव, यदिवा मदयति तन्निवासिनां देवानां देवीनां च

मनांसीति गन्धमादनः, "कृद्बहुलं" ( सिद्धहेम- ) इतिवचनात्कर्तर्यनट् प्रत्ययः, "घञ्युपसर्गस्य
बहुलम्" ( सि० हे० ३-२-८६ ) इत्यत्र बहुलाधिकारादतिशायनादिवत् मकारस्य दीर्घत्वम् । अथवा
गन्धमादननामा देवस्तत्र पल्योपमस्थितिकः परिवसति, तद्योगाद्गन्धमादन इत्युच्यते, उक्तं च—"से
केणट्ठेणं भंते एवं वुच्चइ गंधमायणवक्खारपव्वए ? गोयमा ! से जहानामए कोट्ठपुडाण वा नगरपुडाण वा
जाव पीसिज्जमाणाणं उक्किरिज्जमाणाणं परिभुज्जमाणाणं उराला मणुण्णा गंधा अभिनिस्सवंति, गंधमायणस्स
णं एत्तो इट्ठतरागे चेव कंततरागे चेव मणुण्णतरागे चेव गंधे पण्णत्ते, से एएणट्ठेणं गोयमा एवं वुच्चइ
गंधमायणवक्खारपव्वते, गंधमायणे य एत्थ देवे महिड्ढिए परिवसइ, तेणं गंधमायणे इति पवुच्चइ" । तथा
माल्यवति वक्षस्कारपर्वते तत्र तत्र प्रदेशे बहूनि गुल्मानि तद्यथा—कश्चिन्नवमालिकागुल्मानि कश्चिन्मृ-
गदन्तिकागुल्मानि इत्यादि, तानि च गुल्मानि क्षेत्रानुभावतः सदैव यथायोगं नानाविधकुसुमकुसुमि-
तानि, नवमालिकादिगुल्माग्रशाखाश्च वातेन विधूयमाना माल्यवतो वक्षस्कारपर्वतस्य बहुसमरमणीयं
भूमिभागं पुष्पपुञ्जोपचारकलितं कुर्वन्ति । ततो माल्यमस्यास्तीति माल्यवान् । यदिवा माल्यवन्नामा
देवस्तत्र पल्योपमस्थितिकः परिवसति, तेन तद्योगात्सोऽपि माल्यवान् । उक्तं च—"से केणट्ठेणं भंते
एवं वुच्चइ मालवंते वक्खारपव्वते ? गोयमा ! मालवंते णं वक्खारपव्वते तत्थ तत्थ देसे तहिं तहिं बहवे नव-
मालिया गुम्मा जाव मगदंतिया गुम्मा, ते णं गुम्मा दसद्धवण्णकुसुमंति जेण तं मालवंतस्स वक्खारपव्वयस्स
बहुसमरमणिज्जं भूमिभागं वायविधुयग्गसालामुक्कपुप्फपुंजोवयारकलियं करेंति, मालवंते य एत्थ देवे महि-

ङ्घिए जाव पलिउंवमट्ठिइए परिवसइ, से एएणठेणं गोयमा एवं वुच्चइ मालवंते वक्खारपव्वते इति"। एते च चत्वारोऽपि वक्षस्कारगिरयो दक्षिणोत्तरायताः पूर्वापरविस्तीर्णास्ततस्तथैव ॥ २५८ ॥

साम्प्रतममीषामायामादिप्रमाणमाह—

वक्खारपव्वयाणं आयामो तीस जोयणसहस्सा ।
दोन्नि य सया नवहिया, बच्च कलाउ चोदृहं पि ॥ २५९ ॥

व्याख्या—चतुर्णामपि विद्युत्प्रभादीनां वक्षस्कारपर्वतानामायामः प्रत्येकं त्रिंशत्सहस्राणि द्वे शते नवोत्तरे योजनानां षट् चैकोनविंशतिभागरूपाः कलाः ३०२०९ क० ६ ॥ २५९ ॥

तथा—

वासहरगिरंते णं, रुंदा पंचेव जोयणसयाइं ।
चत्तारि सय उव्विद्धा, उंगाढा जोयणाण सयं ॥ २६० ॥

व्याख्या—वर्षधरगिर्यन्ते वर्षधरपर्वतसमीपे रुन्दा विस्तीर्णाः पञ्च योजनशतानि, किमुक्तं भवति ? निषधसमीपे विद्युत्प्रभसौमनसौ नीलवतः समीपे गन्धमादनमाल्यवन्तौ प्रत्येकं पञ्च योजनशतानि विस्तीर्णाविति । तथा चत्वारोऽपि वर्षधरपर्वतसमीपे प्रत्येकं चत्वारि योजनशतानि उद्विद्धा उच्चाः ।

अवगाढा भूमावन्तःप्रविष्टाः पुनः प्रत्येकं योजनानामेकं शतम् तदनन्तरं मात्रया विष्कम्भतः परिहीय-
माना उत्सेधावगाढाभ्यां परिवर्धमानाः परिवर्धमानास्तावदवसेया यावन्मेरोः समीपम् ॥ २६० ॥

तत्रोच्चत्वादिपरिमाणमाह—

पंच सए उव्विद्धा, उंगाढा पंच गाउय सयाइं ।
अंगुलअसंखभागं, विच्छिन्ना मंदरंतेणं ॥ २६१ ॥

व्याख्या—मन्दरान्ते मन्दरगिरिसमीपे चत्वारोऽपि वक्षस्कारगिरयः प्रत्येकं पञ्च योजनशतानि उद्वि-
द्धा उच्चाः, अवगाढा भूमौ निमग्नाः पञ्च गव्यूतशतानि पञ्चविंशं योजनशतमित्यर्थः । तथाऽङ्गुलासङ्ख्य-
भागमङ्गुलासङ्ख्येयभागमात्रं विस्तीर्णाः एकैकश्च वक्षस्कारगिरिरुभयोः पार्श्वयोः प्रत्येकमेकैकया पद्मवरवे-
दिकया एकैकेन च वनखण्डेन परिक्षिप्तः ॥ २६१ ॥

सम्प्रत्यमीषामेव वर्णविभागमाह—

गिरि गंधमायणो पीय—उ य नीलो य मालवंत गिरी ।
सोमणसो रययमउ, विज्जुप्पभ जच्चतवणिज्जो ॥ २६२ ॥

व्याख्या—गिरिर्वक्षस्कारगिरिर्गन्धमादननामा पीतकः पीतमणिमयः कनकमय इत्यन्ये, नीलो नील:

वर्णो वैडूर्यमणिमयत्वात् माल्यवद्गिरिः, तथा सौमनसो रजतमयो रूप्यमयः; तथा सर्व (जात्य)-तपनीयमयो विद्युत्प्रभः ॥ २६१ ॥

सम्प्रति देवकुरूणामुत्तरकुरूणां च विष्कम्भजीवे प्रतिपादयति—

अठ सया बायाला, एक्कारस सहस्स दो कलाओ य।
विक्खंभो उ कुरूणं, तेवन्नं सहस्स जीवा सिं ॥ २६२ ॥

व्याख्या—देवकुरूणामुत्तरकुरूणां च प्रत्येकं विष्कम्भो दक्षिणोत्तरतया विस्तारो योजनानामेकादश सहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि द्वे चैकोनविंशतिभागरूपे कले ११८४२ क० २। तथा 'सिं ति' आसां देवकुरूणामुत्तरकुरूणां च प्रत्येकं या जीवा पूर्वापरायता सा त्रिपञ्चाशद्योजनसहस्राणि ५३००० ॥ २६२ ॥

सम्प्रति विष्कम्भकरणं जीवाकरणपातनां चाह—

वइदेहा विक्खंभा, मंदरविक्खंभसाहियद्धं जं।
कुरुविक्खंभं जाणसु, जीवाकरणं इमं होइ ॥ २६४ ॥

व्याख्या—वैदेहात् विदेहसत्कात् विष्कम्भात् मन्दरविष्कम्भशोधितार्धं यद्भवति तत् कुरुविष्कम्भं जानीहि। किमुक्तं भवति ? महाविदेहक्षेत्रसत्कात् विष्कम्भान्मन्दरविष्कम्भः शोध्यते, शोधिते च सति

बृहत्
।१३॥

विष्कम्भः। तत्र महाविदेहविष्क-
तस्मिन् यदवशिष्यते तस्यार्धं यावत्परिमाणमेतावान् प्रत्येकं कुरूणां विष्कम्भः। तत्र महाविदेहविष्क-
म्भस्त्रयस्त्रिंशद्योजनसहस्राणि षट् शतानि चतुरशीत्यधिकानि चतस्रश्च कलाः ३३६८४ क० ४, एतस्मा-
न्मेरुविष्कम्भो दश योजनसहस्राणि १०००० शोध्यते, शोधितेषु च तेष्ववतिष्ठन्ते पश्चात्त्रयोविंशतिसह-
स्राणि षट् शतानि चतुरशीत्यधिकानि योजनानां चतस्रश्च कलाः २३६८४ क० ४, एतेषामर्धे लब्धान्ये-
कादश सहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि योजनानां द्वे च कले ११८४२ क० २। जीवा-
करणं पुनरिदं भवति ॥ २६४ ॥

तदेव दर्शयति—

मंदरपुव्वेणायय, बावीससहस्स भद्दसालवणं।
दुगुणं मंदरसहियं, दुसेलरहियं च कुरुजीवा ॥ २६५ ॥

व्याख्या—मन्दरस्य मेरोः पूर्वेण पूर्वस्यां दिशि भद्रशालवनमायतं दीर्घं द्वाविंशतियोजनसहस्राणि २२०००, तद्भद्रशालवनदैर्घ्यपरिमाणं द्विगुणं क्रियते, द्विगुणं च कृत्वा तत्र मन्दरविष्कम्भपरिमाणं प्रक्षिप्यते, प्रक्षिप्य च यत् ( द्विशैलरहितं ) द्वयोर्वक्षस्कारपर्वतयोर्मूले पृथुत्वं तद्रहितं सत् यावद्भवति तावत्प्रमाणा कुरूणां प्रत्येकं जीवा। तथाहि—भद्रशालवनस्य मेरोः पूर्वतः पश्चिमायां च दिशि प्रत्येक-दैर्घ्यपरिमाणं द्वाविंशतियोजनसहस्राणि, ततस्तानि द्विगुणीक्रियन्ते, जातानि चतुश्चत्वारिंशद्योजनसह-

स्राणि ४४०००, मन्दरविष्कम्भपरिमाणं दश योजनसहस्राणि १००००, तानि पूर्वराशौ प्रक्षिप्यन्ते, जातानि चतुःपञ्चाशत्सहस्राणि ५४०००। एकैकस्य च वक्षस्कारगिरिवर्षधरपर्वतसमीपे पृथुत्वं पञ्च योजनशतानि। ततो द्वयोर्वक्षस्कारगिर्योः पृथुत्वपरिमाणं योजनसहस्रं भवति, तत्पूर्वराशेरपनीयते, जातः पूर्वराशिस्त्रिपञ्चाशद्योजनसहस्राणि ५३०००, एतावती प्रत्येकं कुरूणां जीवा ॥ २६५ ॥

सम्प्रति भद्रशालवनायामानयनाय करणमाह—

जीवा दुसेलसहिया, मंदरविक्खंभरहियसेसद्धं।
पुव्वावरविक्खंभो, नायव्वो भद्दसालस्स ॥ २६६ ॥

व्याख्या—जीवा देवकुरुजीवा यदिवा उत्तरकुरुजीवा द्विशैलसहिता द्विवक्षस्कारगिरिमूलपृथुत्वसहिता मन्दरविष्कम्भरहिता क्रियते, तस्यां च मन्दरविष्कम्भरहितीकृतायां शेषं यदवतिष्ठते तस्यार्धं पूर्वतोऽपरतश्च प्रत्येकं भद्रशालवनस्यायामो ज्ञातव्यः। तत्र जीवा त्रिपञ्चाशद्योजनसहस्राणि ५३०००, एकैकस्य च वक्षस्कारगिरेर्मूले पृथुत्वं पञ्च योजनशतानि, ततो द्वयोः शैलयोर्मूले पृथुत्वपरिमाणं योजनसहस्रं भवति, तत्पूर्वराशौ प्रक्षिप्यते, जातानि चतुःपञ्चाशत्सहस्राणि ५४०००, तेभ्यो मन्दरविष्कम्भपरिमाणं दशयोजनसहस्ररूपं शोध्यते, शोधिते च तस्मिन् जातानि शेषाणि चतुश्चत्वारिंशद्योजनसहस्राणि ४४०००, तेषामर्धे लब्धानि द्वाविंशतियोजनसहस्राणि २२०००, एतावान्मेरोः पूर्वस्यामपरस्यां च दिशि प्रत्येकमायामो भद्रशालवनस्य ॥ २६६ ॥

सम्प्रति कुरूणां धनुःपृष्ठस्य गजदन्ताकृतिवक्षस्कारगिरीणां दैर्घ्यस्य चानयनाय करणमाह—

आयामो सेलाणं, दोण्ह वि मिलिउं कुरूण धणुपिठं ।
धणुपिठं दुविहत्तं, आयामो होइ सेलाणं ॥ २६७ ॥

व्याख्या—द्वयोर्विद्युत्प्रभसौमनसयोः यदिवा गन्धमादनमाल्यवतोः शैलयोर्वक्षस्कारपर्वतयोरायामो मिलितः सन् यावान् भवति, तावत्परिमाणमेकैकासां कुरूणां धनुःपृष्ठं । तत्रैकस्य वक्षस्कारगिरेरायाम-स्त्रिंशद्योजनसहस्राणि द्वे शते नवोत्तरे षट् च कलाः३०२०९ क० ६, द्वयोश्च मिलित आयामः षष्टिः सहस्राणि चत्वारि शतानि अष्टादशोत्तराणि योजनानां द्वादश च कलाः ६०४१८ क० १२, एतावत्कुरूणां प्रत्येकं धनुःपृष्ठपरिमाणं, तथा चैतदग्रेतन्या गाथया दर्शयिष्यति । तथा धनुःपृष्ठपरिमाणं षष्टिः सहस्राणि चत्वारि शतानि अष्टादशोत्तराणि योजनानां द्वादश च कलाः ६०४१८ क० १२, एतेषामर्धे लब्धानि त्रिंशद्योजनसहस्राणि द्वे शते नवोत्तरे षट् च कलाः ३०२०९ क० ६ एतावान् प्रत्येकं शैलाना-मायामः ॥ २६७ ॥

सम्प्रति प्रागुक्तकरणलब्धमेव धनुःपृष्ठे परिमाणमाह—

चत्तारि सया अठा–रसोत्तरा सठि चेव य सहस्सा ।
बारस य कला सकला, धणुपठाइं कुरूणं तु ॥ २६८

व्याख्या—व्याख्यातार्था ॥ २६८ ॥

सम्प्रति विचित्रकूटादिपर्वतवक्तव्यतामाह—

देवकुराए गिरिणो, विचित्तकूडो य चित्तकूडो य ।
दो जमगपव्वयवरा, वसिंसया उत्तरकुराए ॥ २६९ ॥
एए सहस्समुच्चा, हरिकूडसमा पमाणउ होंति ।
सीया सीओयाणं, उभउ कूले मुणेयव्वा ॥ २७० ॥

व्याख्या—देवकुरौ देवकुरुषु निषधस्योत्तराहाच्चरमपर्यन्तादुत्तराभिमुखमष्टौ योजनशतानि चतुस्त्रिंशदधिकानि चतुरश्च सप्तभागान् योजनस्यातिक्रम्य अत्रान्तरे शीतोदाया महानद्या उभयोः कूलयोर्द्वौ गिरी, तद्यथा—पूर्वकूले विचित्रकूटः पश्चिमकूले चित्रकूटः । तथा उत्तरकुरुषु अवतंसकावतंसभूतौ द्वौ यमकौ यमकाख्यौ पर्वतवरौ, तौ च नीलवतो वर्षधरपर्वतस्य दाक्षिणात्याच्चरमपर्यन्तादारभ्यार्वाग्दक्षिणाभिमुखमष्टौ शतानि चतुस्त्रिंशदधिकानि योजनानां चतुरश्च योजनसप्तभागानतिक्रम्यात्रान्तरे शीताया महानद्या उभयोः कूलयोर्ज्ञातव्यौ, तद्यथा—एकः पूर्वकूले एकः पश्चिमकूले, एते चत्वारोऽपि पद्मवरवेदिकया वनखण्डेन च समन्ततः परिक्षिप्ताः, तथा प्रत्येकं योजनसहस्रमुच्चाः, तथा प्रमाणतोऽवगाहादिप्रमाणमधिकृत्य हरिकूटतुल्या वेदितव्याः, तद्यथा—अर्धतृतीयानि योजनशतानि अवगाढा,

मूले योजनसहस्रमेकमायामविष्कम्भाभ्यां १०००, मध्येऽर्धाष्टमानि योजनशतानि ७५०, उपरि पञ्च योजनशतानि ५००, मूले त्रीणि योजनसहस्राणि शतं चैकं द्विषष्ट्यधिकं किञ्चिद्विशेषाधिकं परिक्षेपतः ३१६२, मध्ये योजनानां द्वे सहस्रे त्रीणि शतानि द्विसप्तत्यधिकानि २३७२, तथा उपरि पञ्चदश योजनशतानि एकाशीत्यधिकानि किञ्चिद्विशेषाधिकानि १५८१। ते चत्वारोऽपि पर्वताः कनकमयाः, एतेषां चोपरि प्रत्येकं बहुमध्यदेशभागे एकैकः प्रासादावतंसकः, ते च प्रासादावतंसकाः सार्धानि द्वाषष्टियोजनान्युच्चैस्त्वेन, सक्रोशान्येकत्रिंशद्योजनान्यायामविष्कम्भाभ्यां, मध्ये चैकैकस्य प्रासादावतंसकस्य स्वस्वाधिपतिदेवयोग्यं महदेकं सिंहासनं, तस्य चैकैकस्य सिंहासनस्य समंततः सर्वासु दिक्षु विदिक्षु चेन्द्रसामानिकादिदेवयोग्यानि सिंहासनानि। अथ कस्मात् द्वौ पर्वतौ यमकनामकौ द्वौ च चित्रकूटविचित्रकूटाख्याविति? उच्यते—द्वयोः पर्वतयोरुत्तरकुरुभाविनोः प्रत्येकमेकैको यमकनामा व्यन्तराधिपतिर्देवः परिवसति, तेन तद्योगात्तौ यमकाख्यौ। चित्रकूटे चित्रनामा देवो विचित्रकूटे विचित्रनामा, तेन तौ देवकुरुभाविनौ चित्रकूटविचित्रकूटसंज्ञकौ। ते च चत्वारोऽपि यमकादयो देवाः प्रत्येकं पल्योपमस्थितयः प्रत्येकं चतसृणामिन्द्रसामानिकसहस्राणां चतसृणामग्रमहिषीणां सपरिवाराणां तिसृणां पर्षदां सप्तानामनीकानां सप्तानामनीकाधिपतीनां षोडशानामात्मरक्षकदेवसहस्राणां अन्येषां च बहूनां स्वस्वराजधानीवास्तव्यानां वानमन्तराणां देवानां देवीनां चाधिपतयः। तत्र यमकदेवयो राजधान्यौ मेरोरुत्तरतस्तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्यापरस्मिन् जम्बूद्वीपे द्वादश योजनसहस्राण्यव-

गाह्य परतो यथास्थानं वेदितव्ये, चित्रविचित्रदेवयोर्मेरोर्दक्षिणतः । ताश्च राजधान्यो विजयदेवराजधानीवत् द्रष्टव्याः ॥ २६९–२७० ॥

सम्प्रति ह्रदवक्तव्यतामाह—

सीयासीओयाणं, बहुमज्झे पंच पंच हरयाउ ।
उत्तरदाहिणदीहा, पुव्वावरवित्थरा इणमो ॥ २७१ ॥

व्याख्या—शीताशीतोदयोर्बहुमध्ये प्रत्येकं पञ्च पञ्च ह्रदा भवन्ति, ते चैवम्—यमकपर्वताभ्यामर्वाग्दक्षिणाभिमुखमष्टौ शतानि चतुस्त्रिंशदधिकानि योजनानां चतुरश्च सप्त भागान् योजनस्यातिक्रम्यात्रान्तरे शीताया बहुमध्यभागे प्रथमो ह्रदः, तस्मादेव तावता प्रमाणेनार्वाक् द्वितीयः, ततोऽपि तावता प्रमाणेनार्वाक् तृतीयः, ततोऽपि तावता प्रमाणेनार्वाक् चतुर्थः, ततोऽपि तावता प्रमाणेनार्वाक् पञ्चमः । उक्तं च—"जावइयम्मि पमाणम्मि होंति जमगा उ नीलवंता उ । तावइयमन्तरं खलु जमगदहाणं दहाणं च ॥ १ ॥" तथा देवकुरुषु चित्रकूटविचित्रकूटपर्वताभ्यां परत उत्तरस्यां दिशि अष्टसु शतेषु चतुस्त्रिंशदधिकेषु योजनानां चतुर्षु च सप्तभागेषु योजनस्यातिक्रान्तेषु अत्रान्तरे शीतोदाया बहुमध्यभागे प्रथमो ह्रदः. तस्मादेव तावता प्रमाणेन परो द्वितीयः, ततोऽपि तावता प्रमाणेन परस्तृतीयः, तस्मादपि तावता प्रमाणेन परश्चतुर्थः, ततोऽपि तावता प्रमाणेन व्यवस्थितः पञ्चमः । ते च सर्वेऽप्युत्तरदक्षिणदीर्घा दक्षिणोत्तरायताः पूर्वापरविस्तृताः पूर्वपश्चिमरूपतया विस्तीर्णाः इमे एतद्वक्ष्यमाणनामकाः ॥ २७१ ॥

तान्येव नामान्याह—

पढमे ब्ब नीलवंतो, उत्तरकुरुहरय चंदहरउ य ।
एरावयद्दहो च्चिय, पंचमउ मालवंतो य ॥ २७२ ॥
निसहद्दह देवकुरू, सूरे सुलसे तहेव विज्जुपन्ने ।

व्याख्या—उत्तरकुरुयमकपर्वताभ्यामर्वाक् यः प्रथमो ह्रदः स नीलवान् नीलवन्नामा, यतस्तत्र तेषु तेषु प्रदेशेषु बहूनि शतपत्राणि सहस्रपत्राणि वा नीलवद्वर्णधरप्रतिनिकायानि नीलवन्नामा च देवस्तत्र नागकुमारेन्द्रः परिवसति, तेन स नीलवन्नामा । द्वितीये ह्रदे बहूनि तत्र तत्र प्रदेशे शतपत्राणि सहस्रपत्राणि वा उत्तरकुरुसंस्थितानि उत्तरकुरुनामा च देवस्तत्र व्यन्तराधिपतिः परिवसति, तेन स उत्तरकुरुनामा । तृतीये ह्रदे तत्र तत्र प्रदेशे बहूनि शतपत्राणि सहस्रपत्राणि वा चन्द्रनिभानि चन्द्राकारसंस्थितानि च वर्तन्ते, चन्द्रनामा च देवस्तत्र व्यन्तराधिपतिः परिवसति, तेन स चन्द्रनामा । चतुर्थे ह्रदे ऐरावतनिभानि तत्र तत्र प्रदेशे बहूनि शतपत्राणि सहस्रपत्राणि वा यदिवा ऐरावतनामा देवस्तत्र व्यन्तराधिपतिः परिवसति, तेन स ऐरावतनामा । पञ्चमे ह्रदे माल्यवद्वक्षस्कारनिभानि तत्र तत्र प्रदेशे बहूनि शतपत्राणि सहस्रपत्राणि वा माल्यवान् वा देवस्तत्र पल्योपमस्थितिको व्यन्तराधिपः परिवसति, तेन स माल्यवन्नामा । तथा देवकुरुषु चित्रकूटविचित्रकूटाभ्यां परो यः प्रथमो ह्रदस्तत्र तेषु तेषु प्रदेशेषु

निषधवर्षधरनिभानि बहूनि शतपत्राणि सहस्रपत्राणि वा यदिवा निषधनामा देवस्तत्र परिवसति, तेनासौ निषधह्रदः । द्वितीये ह्रदे देवकुरुसंस्थितानि तत्र तत्र प्रदेशे बहूनि शतपत्राणि सहस्रपत्राणि वा विद्यन्ते, देवकुरुनामा च देवस्तत्र परिवसति, तेन स देवकुरुह्रद इत्युच्यते । तृतीयह्रदे सूरनामा देव आधिपत्यं परिपालयति, तेन तद्योगादसौ सूरह्रदः । चतुर्थे सुलसनामा देवस्तेन सुलसः । पञ्चमे विद्युदिव पाटलतया तत्र तत्र प्रदेशे बहूनि शतपत्राणि सहस्रपत्राणि वा प्रकर्षेण भान्ति विद्युत्प्रभनामा च देवस्तत्राधिपत्यमुपभुङ्क्ते, तेन स विद्युत्प्रभः । एते च सर्वेऽपि ह्रदाः प्रत्येकमुभयोरपि पार्श्वयोरेकैकया पद्मवरवेदिकया एकैकेन च वनखण्डेन परिक्षिप्ताः, एकैकस्य च ह्रदस्य तत्र तत्र प्रदेशे बहूनि त्रिसोपानानि द्वाराणि एकैकस्य च द्वारस्य प्रत्येकमेकैकं तोरणम् । द्वारवर्णकश्च प्रागिव भावनीयः ॥

सम्प्रति ह्रदमध्यगतवक्तव्यतामाह—

**पउमद्दहसरिसगमा,**

व्याख्या—पद्मह्रदस्य सदृशः समानो गमः प्रकारो येषां ते पद्मह्रदसदृशगमाः, यथा पद्मह्रदस्य दैर्घ्ये योजनसहस्रं १०००, पृथुत्वे पञ्च योजनशतानि ५००, यथा पद्मह्रदस्य मध्ये महदेकं पद्मं, यावच्च तस्य परिमाणं, यथा च तस्यान्येऽपि त्रयः परिक्षेपाः, यथा च तस्य पद्मस्य तदर्धप्रमाणाष्टोत्तरशतसङ्ख्यपद्मपरिक्षेपः प्रथमः । द्वितीय इन्द्रसामानिकादिदेवयोग्यपद्मपरिक्षेपस्तृतीय आरक्षकदेवयोग्यः परिक्षेपः ।

यथा चान्येऽपि तत्र त्रयः पद्मपरिक्षेपाः, यावत्प्रमाणं च तस्य मूलभूतस्य पद्मस्योपरि भवनं, भवनमध्ये यावत्परिमाणा मणिमयी पीठिका, तस्याश्चोपरि यत्परिमाणं शयनीयं, तदेतत्सर्वमन्यूनातिरिक्तमेतेष्वपि ह्रदेषु प्रत्येकं वक्तव्यमिति ॥

सम्प्रति ह्रदाधिपतीनां देवानां नामप्रतिपादनार्थमाह—

## दहसरिसनामा उ देवित्ति ॥ २७२ ॥

व्याख्या—अत्र एतेषु ह्रदेषु ह्रदसदृशनामानो देवाः, किमुक्तं भवति ? यानि नामानि ह्रदानां प्रागु-
क्तानि, तान्येव तदधिपतीनामपि देवानां नामानि द्रष्टव्यानि, तानि च तथैव प्राग्भावितानि, नवरं
नीलवति ह्रदे नागकुमारेन्द्राधिपतिः, शेषेषु तु व्यन्तराः । ते च देवाः सर्वेऽपि प्रत्येकं पल्योपमस्थितयः
प्रत्येकं च चतुर्णामिन्द्रसामानिकसहस्राणां चतसृणामग्रमहिषीणां सपरिवाराणां तिसृणां पर्षदां सप्तानाम-
नीकानां सप्तानामनीकाधिपतीनां षोडशानामात्मरक्षकदेवसहस्राणामन्येषां च स्वस्वराजधानीवास्तव्यानां
बहूनां देवानां देवीनां चाधिपतयो राजधान्यश्चोत्तरकुर्वादिह्रदाधिपतीनां नीलवदुत्तरकुरुचन्द्रैरावतमा-
ल्यवन्नामकानां पञ्चानां देवानां मेरूत्तरतस्तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्यापरस्मिन् जम्बूद्वीपे द्वादश
योजनसहस्राणि अवगाह्य परतो यथास्थानमवसेयाः । शेषाणां तु देवकुर्वादिह्रदाधिपतीनां पञ्चानां
देवानां दक्षिणत इति ॥ २७१–२७२ ॥

अधुना ह्रदप्रत्यासन्नगिरिवक्तव्यतामाह—

दसजोयणअंतरिया, पुव्वेण वरेण चेव हरियाणं ।
दस दस य कंचणगिरी, दोन्नि सया हौंति सव्वेऽवि ॥ २७४ ॥

व्याख्या—देवकुरुभाविनामुत्तरकुरुभाविनां च ह्रदानां सर्वसङ्ख्यया दशसङ्ख्यानां प्रत्येकं पूर्वेण पूर्वस्यां दिशि अपरेण चापरस्यां दिशि पृथग्दशयोजनान्तरिता दश दश योजनानि ह्रदेभ्योऽपान्तराले मुक्त्वा दश काञ्चननामानो गिरयः सन्ति । इयमत्र भावना—नीलवतो ह्रदात् पूर्वस्यां दिशि दश योजनान्यपान्तराले विमुच्यात्रान्तरे परस्परं मूले संबद्धा दश काञ्चनगिरयः, एवं पश्चिमायामपि दिशि नीलवतो ह्रदाद्दश योजनान्यतिवाह्यात्रान्तरे दश काञ्चनगिरयो वेदितव्याः । एवं सर्वेषामपि ह्रदानां प्रत्येकं पूर्वस्यामपरस्यां च दिशि दश दश काञ्चनगिरयो भावनीयाः । सर्वसङ्ख्यया काञ्चनगिरयो द्वे शते, तथा चाह—'दोन्नि सया हौंति सव्वेऽवि' ते च सर्वेऽपि काञ्चनमयाः प्रत्येकमेकैकया पद्मवरवेदिकया एकैकेन च वनखण्डेन परिक्षिप्ताः ॥ २७४ ॥

सम्प्रत्येतेषामुच्चत्वादिप्रमाणमाह—

जोयणसयमुव्विद्धा, सयमेगं तेसि मूलविक्खंभो ।
पन्नासं उवरितले, पणसयरी जोयणा मज्झे ॥ २७५ ॥

व्याख्या—एतेऽनन्तरोदिताः सर्वेऽपि द्विशतसङ्ख्याः काञ्चनगिरयः प्रत्येकं योजनशतमेकमुद्विद्धा उच्चाः, शतमेकं योजनानां मूलविष्कम्भः, उपरितले आयामविष्कम्भौ पञ्चाशद्योजनानि, मध्ये मध्यभागे पञ्चसप्ततिः ॥ २३५ ॥

सम्प्रति मूले मध्यभागे उपरि च यथाक्रमं परिधेः परिमाणमाह—

तिन्नि सया सोलहिया सत्तत्तीसा सया भवे दोन्नि ।
सयमेगठावन्नं, परिही तेसिं जहासंखं ॥ २३६ ॥

व्याख्या—तेषां द्विशतसङ्ख्यानां काञ्चनगिरीणां प्रत्येकं मूलमध्योपरिभागेषु यथासङ्ख्यं परिधिरेवंरूपो ज्ञातव्यः, तद्यथा-मूले त्रीणि शतानि षोडशाधिकानि किञ्चिद्विशेषाधिकानि योजनानां ३१६ । मध्ये द्वे शते सप्तत्रिंशदधिके किञ्चिद्विशेषाधिके २३७ । उपरि शतमेकमष्टपञ्चाशदधिकं किञ्चिदूनमिति १५८ । एतेषां च सर्वेषामपि काञ्चनगिरीणामुपरि प्रत्येकं बहुसमरमणीये भूमिभागे महानेकैकः प्रासादावतंसकः, ते च प्रासादावतंसकाः प्रत्येकं सार्धानि द्वाषष्टियोजनानि उच्चैस्त्वेन, सक्रोशानि एकत्रिंशद्योजनानि विष्कम्भतः, तेषु प्रासादावतंसकेषु मध्ये प्रत्येकं द्वियोजनप्रमाणायामविष्कम्भा सर्वमणिमयी मणिपीठिका, तासां च मणिपीठिकानामुपरि प्रत्येकं स्वस्वाधिपतिदेवयोग्यं सिंहासनं सपरिवारम् । अथ कस्मादेते काञ्चनगिरय इति विश्रुताः ? उच्यते—एषु काञ्चनगिरिषु प्रत्येकं तासु तासु क्षुल्लासु वापीषु सरस्सु

सरःपङ्क्तिषु वा बहूनि शतपत्राणि सहस्रपत्राणि वा काञ्चनवर्णानि काञ्चननामानश्च देवास्तत्राधिपत्यं परिपालयन्ति, तेन काञ्चनगिरय इत्युच्यन्ते। ते च काञ्चननामानो देवाः प्रत्येकं पल्योपमस्थितयः प्रत्येकं च विजयदेव इव महर्द्धिकाः। उक्तं च—"से केणट्ठेणं भंते एवं वुच्चइ कंचणपव्वया कंचणपव्वया" इति ? गोयमा ! कंचणपव्वएसु णं खुड्डा खुड्डियासु वावीसु जाव बिलपंतियासु बहवे उप्पलाइं पउमाइं जाव सहस्सपत्ताइं कंचणप्पभाइं कंचणवन्नाइं कंचणगा य एत्थ देवा महिड्ढीया जाव पलिओवमट्ठिइया परिवसंति, ते णं तत्थ पत्तेयं पत्तेयं चउण्हं सामाणियसाहस्सीणं जाव सोलसण्हमायरक्खदेवसहस्साणं कंचणगपव्वयाणं कंचणगरायहाणीण य अन्नेसिं च बहूणं वाणमंतराणं देवाणं देवीण य आहेवच्चं कारेमाणा जाव विहरंति, से एएणट्ठेणं गोयमा एवं वुच्चइ कंचणपव्वया" इति। काञ्चननाम्नां च देवानां काञ्चननामानो राजधान्य-उत्तरकुरुभाविकाञ्चनगिरिस्वामिनां मेरोरुत्तरतोऽपरस्मिन् जम्बूद्वीपे वेदितव्याः, देवकुरुभाविकाञ्चनगिरिस्वामिनां तु दक्षिणत इति ॥ २७६ ॥

इह नीलवतो यमकपर्वतयोश्चापान्तरालमेकमन्तरं, यमकपर्वतयोः प्रथमह्रदस्य च द्वितीयं, तस्माच्च प्रथमह्रदादारभ्य शेषाणां चतुर्णां ह्रदानामन्तराणि चत्वारि, पञ्चमह्रदस्य वक्षस्कारगिरिपर्यन्तस्य चापान्तरालं सप्तममन्तरम्, एतानि च सप्ताप्यन्तराणि तुल्यानि, तत एतेषां प्रमाणानयनाय करणमाह—

कुरुविक्खंभा सोहिय, सहस्स आयाम जमगहरए य।
सेसस्स सत्तभागं, अंतरिमो जाण सव्वेसिं ॥ २७७ ॥

व्याख्या—कुरुविष्कम्भादुत्तरकुरुविष्कम्भात् सहस्रायामान् यमकह्रदान् यमकपर्वतौ ह्रदांश्च संशोध्य शेषस्य सप्तभिर्भागे हृते यदागच्छति तावत्प्रमाणमन्तरं सर्वेषां नीलवद्यमकह्रदानां द्रष्टव्यम् । तत्रोत्तरकुरूणां विष्कम्भ एकादश सहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि योजनानां द्वे च कले ११८४२ क० २, यमकपर्वतयोः पञ्चानां च ह्रदानां प्रत्येकं दैर्घ्यपरिमाणं योजनसहस्रं, ततस्तानि सर्वसङ्ख्यया षट् सहस्राणि भवन्ति, तानि प्रागुक्तादुत्तरकुरुविष्कम्भात् शोध्यन्ते, शोधितेषु च तेषु जातानि शेषाणि पञ्च सहस्राण्यष्टौ शतानि द्विचत्वारिंशदधिकानि योजनानां द्वे च कले ५८४२ क० २, तत्र कलाद्वयं स्तोकत्वान्न गण्यते, शेषस्य राशेः सप्तभिर्भागो ह्रियते, लब्धान्यष्टौ शतानि चतुस्त्रिंशदधिकानि योजनानां चत्वारश्च सप्त भागा योजनस्य, एतावत्प्रमाणानि सप्ताप्यन्तराणीति । एवं देवकुरुष्वपि निषधचित्रविचित्रकूटह्रदपञ्चकवक्षस्कारगिरिपर्यन्तानामष्टानां वस्तूनां सप्तान्तराणि, तान्यपि प्रत्येकमेतावत्प्रमाणानि द्रष्टव्यानि ॥ २७७ ॥

तथा चोक्तम्—

अठ सया चउत्तीसा, चत्तारि य होंति सत्त भागाउ ।
दोसु वि कुरासु एयं, हरयनगाणंतरं भणियं ॥ २७८ ॥

व्याख्या—अष्टौ शतानि चतुस्त्रिंशदधिकानि योजनानां चत्वारश्च सप्त भागा योजनस्येत्येतावत्प्र-

माणं द्वयीष्वपि कुरुषु देवकुरुषूत्तरकुरुषु चेत्यर्थः, ह्रदपञ्चकवर्षधरादिपर्वतानामन्तरं भणितं तीर्थंकरगणधरैः ॥ २७८ ॥

सम्प्रति उत्तरकुरुवर्ती यो जम्बूवृक्षस्तद्वक्तव्यतामाह—

जंबूनयमेयं जं–बूपीढमुत्तरकुराइ पुवद्धे ।
सीयाए पुव्वेणं, पंचसयायामविक्खंभं ॥ २७९ ॥

व्याख्या—उत्तरकुरवः शीता ( त ) या महानद्या द्विधा विभक्ताः,तद्यथा–एकं पूर्वार्धमुत्तरकुरूणामपरं पश्चिमार्धं, तत्र शीताया महानद्याः पूर्वेण पूर्वस्यां दिशि यदर्धं तत्पूर्वार्धं तस्मिन् पूर्वार्धे बहुमध्यभागे जम्बूपीठं जम्बूवृक्षस्तकं पीठं जाम्बूनदमयं, तच्च पञ्चयोजनशतायामविष्कम्भं पञ्च योजनशतान्यायामतः पञ्च योजनशतानि विष्कम्भतः सर्वतो वृत्तमित्यर्थः ॥ २७९ ॥

सम्प्रति परिध्यादिप्रमाणमाह—

पन्नरसेक्कासीए, साहीए परिहिमघ्रबाहल्लं ।
जोयण छुक्क कमसो, हायंततेसु दो कोसा ॥ २८० ॥
सव्वरयणामईए, दुगाउउच्चाइ तं परिक्खित्तं ।
पउमवरवेइयाए, रुंदाए धणुसए पंच ॥ २८१ ॥

व्याख्या—पञ्चदश शतानि एकाशीत्यधिकानि साधिकानि किञ्चिद्विशेषाधिकानि तस्य जम्बूपीठस्य परिधिः, तथा जम्बूपीठस्य मध्ये बाहल्यं बहलता योजनद्विपट्के द्वादश योजनानि ततः क्रमेण मात्रया परिहीयमानं परिहीयमानं तद्बाहल्यमन्तेषु प्रान्तेषु द्वौ क्रोशौ द्विक्रोशपरिमाणम्, तज्जम्बूपीठमेकया पद्मवर-वेदिकया सर्वरत्नमय्या द्विगव्यूतोच्छ्रितया पञ्च धनुःशतानि विस्तृतया परिक्षिप्तम् ॥ २००–२०१ ॥

तस्य च जम्बूपीठस्य चतसृषु पूर्वादिषु दिक्षु प्रत्येकमेकैकं त्रिसोपानं द्वारं, ततस्तेषां द्वाराणां प्रमाण-प्रतिपादनार्थमाह—

दो गाउ ऊसियाइं, गाउ य रुंदा चउद्दिसिं तस्स ।
पीढस्स दुवाराइं, सछत्तझयतोरणाइं च ॥ २०२ ॥

व्याख्या—तस्य पीठस्य चतसृषु पूर्वादिषु दिक्षु प्रत्येकमेकैकद्वारभावेन चत्वारि द्वाराणि, तानि च प्रत्येकं द्विगव्यूतोच्छ्रितानि गव्यूतमेकं रुन्दानि विस्तीर्णानि, तेषु च द्वारेषु भूमावन्तर्गता भूमेरुन्निष्काम-न्तश्च प्रदेशा वज्रमया भूमेरूर्ध्वं प्रतिष्ठानभूताः प्रदेशा रिष्टरत्नमया वैडूर्यमयाः स्तम्भाः सुवर्णरूप्य-मयानि फलकानि, तेषां च फलकानां गलकस्थानीयः सन्धिर्वैडूर्यरत्नमयो नानामणिमयान्यालम्बनानि नानामणिमय्य आलम्बनबाहाः । तेषु चतुर्ष्वपि द्वारेषु प्रत्येकमेकैकं तोरणं, तानि च तोरणानि नाना-मणिमयस्तम्भनिविष्टानि वृषभतुरगेहामृगविहगरुरुशरभकुञ्जरचामरवनलतापद्मभित्तिचित्राणि, तेषां च

तोरणानामुपरि प्रत्येकमुत्तरङ्गेषु सर्वरत्नमयानि स्वस्तिकश्रीवत्सादीनि अष्टावष्टौ मङ्गलकानि, तेभ्योऽप्युपरि तोरणेषु प्रत्येकं बहवो वज्रमया दण्डाः कृष्णचामरध्वजा नीलचामरध्वजा लोहितचामरध्वजा हरिद्रचामरध्वजाः शुक्लचामरध्वजाः, तेषामप्युपरि बहूनि सर्वरत्नमयानि छत्रातिछत्राणि पताकातिपताकाः भूयांसि घण्टायुगलानि भूयांसि चामरयुगलानि भूयांस उत्पलहस्ता भूयांसः पद्महस्ताः भूयांसः कुमुदहस्ताः सर्वरत्नमयाः, हस्तशब्दोऽत्र सङ्घातवाची। एतदेव ध्वजादिकं सूचयति—'सछत्तभयतोरणाइं च'। न केवलं चतसृषु दिक्षु द्वाराणि, किंतु तेषु द्वारेषु तोरणानि चेति चशब्दार्थः, तानि च तोरणानि सछत्रध्वजानि यथोक्तैश्छत्रैर्ध्वजैश्च सहितानि ॥ २०२ ॥

चउजोयणूसियाए, अठेव य जोयणाइ रुंदाए।
मणिपीढियाए जंबू, वेइहिं गुत्ता दुवालसहिं ॥ २०३ ॥

व्याख्या—तस्य जम्बूपीठस्योपरि बहुमध्यदेशभागे महत्येका मणिमयी पीठिका, सा चाष्टौ योजनानि आयामविष्कम्भतः चत्वारि योजनान्युच्चैस्त्वेन, तस्याश्चतुर्योजनोच्छ्रिताया अष्टौ योजनानि विस्तीर्णाया मणिपीठिकाया उपरि जम्बूनामा वृक्षः, स च जम्बूवेदीभिः प्राकारविशेषैर्गुप्तो द्वादशभिः ॥ २०३ ॥

सम्प्रत्यस्या एव जम्ब्वा वर्णविभागप्रदर्शनार्थमाह—

मूला वइरमया से, कंदो खंधो य रिठ वेरुलिउं ।
सोवन्निया य साहा, पसाह तह जायरूवा य ॥ २७४ ॥
विडिमा रायय वेरुलिय, पत्त तवणिज्ज पत्तविंटा से ।
पल्लवअग्गपवाला, जंबूनयरायया तीसे ॥ २७५ ॥

व्याख्या—'से' तस्या जम्ब्वा मूलानि वज्रमयानि, मूलेभ्य उपरि कन्दो भूमध्यस्थोऽरिष्टरत्नमयः, कन्दादुच्छ्रितः स्कन्धो वैडूर्यमयः, सौवर्णिक्यः सुवर्णमय्यः शाखाः, प्रशाखा जातरूप्याः सुवर्णविशेषजातरूपमयाः ( य्यः ), विडिमा नाम दिक्प्रासृतशाखामध्यगता ऊर्ध्वशाखा सा राजती रजतमयी, पत्राणि वैडूर्याणि वैडूर्यरत्नमयानि। तथा से तस्या जम्ब्वाः पत्रवृन्तानि तापनीयानि तपनीयमयानि, तथा तस्या जम्ब्वाः पल्लवाः प्रतिशाखोद्भवा गोच्छका जाम्बूनदा जाम्बूनदमयाः, अग्रप्रवाला अङ्कुरा राजता रजतमयाः ॥ २७४–२७५ ॥

रयणमया पुप्फफला, विक्खंभो अठ अठ उच्चत्तं ।
कोसदुगं उव्वेहो, खंधो दो जोयणुव्विद्धो ॥ २७६ ॥

दो कोसे विछिन्नो, विडिमा छ जोयणाणि जंबूए ।
चाउद्दिसिं पि सालो, पुव्विल्ले तत्थ सालम्मि ॥ २७७ ॥
भवणं कोसपमाणं, सयणिज्जं तत्थ णाढियसुरस्स ।
तिसु पासाया सेसेसु, तेसु सीहासणा रम्मा ॥ २७८ ॥

व्याख्या—तस्या जम्ब्वाः पुष्पाणि फलानि च रत्नमयानि नानारत्नात्मकानि, तस्याः सशाखाकाया जम्ब्वाः पृथुत्वमष्टौ योजनानि, अष्टावेव योजनान्युच्चत्वं, क्रोशद्विकमुद्वेधः भूतलमध्ये प्रवेशः, अत एव सर्वाग्रेण सा जम्बूः सातिरेकाण्यष्टौ योजनान्युच्चैस्त्वेन भवति । तथा तस्या जम्ब्वाः स्कन्धः कन्दादुपरितनः शाखाप्रभवपर्यन्तो विभागो द्वे योजने उद्विद्ध उच्चः, द्वौ क्रोशौ विस्तीर्णौ, या तु दिक्प्रसृतशाखामध्यभागप्रभवा ऊर्ध्वं गता शाखा विडिमापरपर्याया सा षड् योजनान्युच्चैस्त्वेन, अत एव कन्दादारभ्य सर्वाग्रेण सा जम्बूरष्टौ योजनान्युच्चैस्त्वेन प्रागुक्ता, स्कन्धगताभ्यां द्वाभ्यां योजनाभ्यां विडिमागतैः षड्भिर्योजनैर्योजनाष्टकभावात् । तस्याश्च जम्ब्वाश्चतसृष्वपि दिक्षु शाखाः, किमुक्तं भवति? चतसृषु पूर्वादिषु दिक्षु प्रत्येकमेकैका शाखा, ताश्च शाखाः प्रत्येकं क्रोशोनानि चत्वारि योजनानि दीर्घाः, तथाहि—तस्या जम्ब्वा विष्कम्भोऽष्टौ योजनानि, तत्र स्कन्धगतस्योपरितनभागस्य द्वौ क्रोशौ, तत एकैकस्याः शाखायाः पृथुत्वं क्रोशोनानि चत्वारि योजनानि भवति । तत्र तासु चतसृषु शाखासु मध्ये पूर्वस्यां

शाखायां बहुमध्यदेशभागेऽनादृतस्यानादृताभिधानस्य देवस्य योग्य महदेकं भवनं भवति, तच्च भवनं मयं अनेकमणिमयस्तम्भशतसन्निविष्टं, क्रोशप्रमाणमायामतः, विष्कम्भतोऽर्धक्रोशं, देशोनं क्रोशमुच्चैस्त्वेन, तस्य च भवनस्य त्रीणि द्वाराणि, तद्यथा—एकं द्वारं पूर्वस्यामेकमुत्तरत एकं दक्षिणतः, तानि च द्वाराणि प्रत्येकं पञ्च धनुःशतान्युच्चैस्त्वेन, अर्धतृतीयानि धनुःशतानि विष्कम्भतः। तत्र च भवने बहुमध्यदेशभागे महत्येका मणिमयी पीठिका, सा च पञ्चधनुःशतायामविष्कम्भा अर्धतृतीयधनुःशतबाहल्या, तस्याश्च मणिपीठिकाया उपरि महदेकं शयनीयं, शेषासु च तिसृषु शाखासु प्रासादाः प्रासादावतंसका एकैकस्यां शाखायामेकैकः प्रासादावतंसक इत्यर्थः, तेऽपि च प्रासादावतंसकाः सर्वरत्नमयाः, तेषु च प्रासादेषु मध्ये सिंहासनानि रम्याणि नानामणिमयतया रमणीयानि, किमुक्तं भवति ? एकैकस्य प्रासादावतंसकस्य मध्ये पञ्चधनुःशतायामविष्कम्भाऽर्धतृतीयधनुःशतबाहल्या मणिमयपीठिका, तासां च मणिपीठिकानामुपरि प्रत्येकमनादृतदेवयोग्यं सर्वरत्नमयं सिंहासनमिति ॥ २०६–२०७–२०८ ॥

सम्प्रति प्रासादानां परिमाणमाह—

ते पासाया कोसं, समूसिया कोसअद्धविच्छिन्ना ।
विडिमोवरि जिणभवणं, कोसद्धं होइ विच्छिन्नं ॥ २०९ ॥
देसूणकोसमुच्चं,

व्याख्या—तेऽनन्तरोदिताः प्रासादाः कोशमेकं देशोनमिति शेषः समुच्छ्रिता उच्चाः, कोशमर्धमर्धकोशं विस्तीर्णाः, परिपूर्णमेकं कोशं दीर्घाः । तथा विडिमा दिक्प्रसृतशाखामध्यभागविनिर्गता ऊर्ध्वशाखा तस्या उपरि बहुमध्यदेशभागे महदेकं जिनभवनं सिद्धायतनं, तच्च कोशमेकमायामतः, अर्धकोशं भवति विस्तीर्णं, देशोनं कोशमेकमुच्चं, नानामणिस्तम्भशतसंनिविष्टं, तस्य च त्रीणि द्वाराणि, तानि च प्रागनन्तरव्यावर्णितभवनस्येव वेदितव्यानि, तस्य च सिद्धायतनस्य मध्ये महत्येका मणिमयी पीठिका, सा च पञ्च धनुःशतानि आयामविष्कम्भाभ्यां, अर्धतृतीयानि धनुःशतानि बाहल्यतः, तस्याश्च मणिपीठिकाया उपरि महानेकः सर्वरत्नमयो देवच्छन्दकः, स च पञ्चधनुःशतायामविष्कम्भः, सातिरेकपञ्चधनुःशतप्रमाणोच्चैस्त्वः, तत्र पञ्चधनुःशतप्रमाणानां जिनप्रतिमानामष्टाधिकं शतं, जिनप्रतिमावर्णकः समस्तोऽपि कूटगतसिद्धायतनवद्वेदितव्यः ॥

जंबू अट्ठसएण जंबूणं ।
परिवारिया विरायइ, तत्तो अद्धप्पमाणेणं ॥ १९० ॥

व्याख्या— सा जम्बूरनन्तरव्यावर्णितस्वरूपाऽन्येन जम्बूनामष्टशतेनाष्टाधिकेन शतेन, ततस्तस्या मूलभूताया जम्ब्वा अपेक्षया अर्धप्रमाणमात्रेण यत्प्रमाणं मूलजम्ब्वा उक्तमादित आरभ्य तदपेक्षयाऽर्धप्रमाणेन, तथाहि—ता अष्टाधिकशतसङ्ख्या जम्ब्वः प्रत्येकं चत्वारि योजनान्युच्चैस्त्वेन कोशमेकमवगाहेन, एकं योजनमुच्चः स्कन्धः, त्रीणि योजनानि विडिमा, सर्वाग्रेणोच्चैस्त्वेन चत्वारि योजनानि,

विष्कम्भतोऽपि चत्वारि योजनानि, तत्रैकैका शाखाऽर्धगव्यूतहीने द्वे द्वे योजने दीर्घा, क्रोशपृथुत्वः स्कन्धः इति भवन्ति सर्वसङ्ख्यया विष्कम्भतश्चत्वारि योजनानि। ताश्च जम्ब्वः सर्वा अपि प्रत्येकं षड्भिः षड्भिः पद्मवरवेदिकाभिः परिक्षिप्ताः एवंभूतेनार्धप्रमाणेन जम्बूनामष्टशतेन परिवारिता विराजन्ते। तासां चाष्टाधिकशतसङ्ख्यानां जम्बूनां वर्णविभागो मूलजम्ब्वा इव द्रष्टव्यः, यथा—वज्ररत्नमयानि मूलानि, रिष्टरत्नमयः कन्द इत्यादि ॥ १९० ॥

तदेवमुक्त एको जम्बूपरिक्षेपः, सम्प्रति शेषान् जम्बूपरिक्षेपानतिदेशेनाह—

पउमद्दहे सिरीए, जो परिवारो कमेण निद्दिठ्ठो ।
सो चेव य नायव्वो, जंबूएऽणाढियसुरस्स ॥ १९१ ॥

व्याख्या—यः पद्मह्रदे श्रियाः श्रीदेव्याः परिवारः क्रमेण निर्दिष्टः स एव तादृग्भूत एव जम्ब्वामनादृतदेवस्य वेदितव्यः। इयमत्र भावना—यथा पद्मह्रदे द्वितीये पद्मपरिक्षेपे इन्द्रसामानिकादिदेवयोग्यानि पद्मानि तृतीये पद्मपरिक्षेपे आरक्षकदेवयोग्यानि तथाऽत्रापि जम्ब्वो वेदितव्याः, तद्यथा—वायव्यामुत्तरस्यामुत्तरपूर्वस्यां च सर्वसङ्ख्ययाऽनादृतदेवस्य जम्बूद्वीपाधिपतेः संबन्धिनामिन्द्रसामानिकचतुःसहस्राणां योग्यानि चत्वारि जम्बूसहस्राणि, पूर्वस्यां दिशि चतसृणामग्रमहिषीणां योग्याश्चतस्रो जम्ब्वः, दक्षिणपूर्वस्यामभ्यन्तरपर्षदो योग्यान्यष्टौ सहस्राणि, दक्षिणस्यां मध्यपर्षद्योग्यानि दश सहस्राणि, दक्षि-

णपश्चिमायां बाह्यपर्षद्योग्यानि द्वादश सहस्राणि, पश्चिमायां सप्तानामनीकाधिपतीनां योग्याः सप्त जम्ब्वः। तृतीये जम्बूपरिक्षेपे षोडशानामात्मरक्षकदेवसहस्राणां योग्यानि षोडश जम्बूसहस्राणि । सा चैवंपरिवारा जम्बूस्त्रिभिर्योजनशतप्रमाणैर्वनखण्डैः परिक्षिप्ता, तद्यथा—अभ्यन्तरेण मध्येन बाह्येन च, तत्र प्रथमे वनखण्डे चतसृष्वपि दिक्षु प्रत्येकं पञ्चाशत्पञ्चाशद्योजनान्यवगाह्यात्रान्तरे महदेकैकं भवनं, तानि च भवनानि पूर्वशाखाभाविभवनमिवाविशेषेण वक्तव्यानि यावन्मध्ये एकैकं शयनीयम् । तथा तस्मिन्नेव प्रथमे वनखण्डे उत्तरपूर्वस्यां दिशि पञ्चाशद्योजनान्यवगाह्यात्रान्तरे चतस्रो नन्दापुष्करिण्यः, ताश्चैवंनामानः, तद्यथा—पूर्वस्यां दिशि पद्मा, दक्षिणस्यां पद्मप्रभा, पश्चिमायां कुमुदा, उत्तरस्यां कुमुदप्रभा, ताश्चतस्रोऽपि प्रत्येकं क्रोशमेकमायामेन, अर्धक्रोशं विष्कम्भेण, पञ्च धनुःशतान्युद्वेधेन, एताश्च प्रत्येकमेकैकया पद्मवरवेदिकया एकैकेन च वनखण्डेन परिक्षिप्ताः, तासां चतसृणामपि वापीनां मध्ये महानेकः प्रासादावतंसकः, स च जम्बूवृक्षशाखाभाविप्रासाद इव वक्तव्यः । एवं दक्षिणपूर्वस्यामपरदक्षिणस्याम-परोत्तरस्यां (च) चतस्रश्चतस्रः पुष्करिण्यो वक्तव्याः, तासां च मध्ये महानेकैकः प्रासादावतंसकः, ताश्च पुष्करिण्यः प्रासादावतंसकाश्च पूर्ववद्वक्तव्याः, नवरं नामनानात्वं, तच्चेदम्—दक्षिणपूर्वस्यां पूर्वदिशि उत्पलगुल्मा, दक्षिणस्यां नलिना, पश्चिमायामुत्पलोज्ज्वला, उत्तरस्यामुत्पला । अपरदक्षिणस्यां पूर्वदिशि भृङ्गा, दक्षिणस्यां भृङ्गनिभा, पश्चिमायामञ्जना, उत्तरस्यां कज्जलप्रभा । अपरोत्तरस्यां पूर्वदिशि श्रीकान्ता, दक्षिणस्यां श्रीमहिता, पश्चिमायां श्रीचन्द्रा, उत्तरतः श्रीनिलया । तथा तस्मिन्नेव प्रथमे वनखण्डे

पूर्वदिग्भाविनो भवनस्योत्तरत उत्तरपूर्वदिग्भाविनः प्रासादावतंसकस्य दक्षिणतो बहुमध्यदेशभागे महा-
नकः कूटः, स चाष्टौ योजनान्युच्चैस्त्वेन, मूले द्वादश योजनानि आयामविष्कम्भतः, मध्येऽष्टौ योजनानि
उपरि चत्वारि योजनानि, मूले सातिरेकाणि सप्तत्रिंशद्योजनानि परिक्षेपतः, मध्ये सातिरेकाणि पञ्चविं-
विंशतियोजनानि, उपरि सातिरेकाणि द्वादश योजनानि, आदेशान्तरेण मूलेऽष्टौ योजनानि आया-
मविष्कम्भतः, मध्ये षड् योजनानि. उपरितले चत्वारि योजनानि, मूले सातिरेकाणि पञ्चविंशतियोज-
नानि परिक्षेपतः, मध्ये साधिकान्यष्टादश योजनानि, उपरि सातिरेकाणि द्वादश योजनानि, मूले
विस्तीर्णो, मध्ये संक्षिप्तः, उपरि तनुकः, गोपुच्छसंस्थानसंस्थितो जाम्बूनदमय एकया पद्मवरवेदिकया
एकेन वनखण्डेन ( च ) समन्ततः परिक्षिप्तः, तस्य च कूटस्योपरि बहुसमरमणीये भूमिभागे महदेकं
सिद्धायतनं, तच्च प्रागुक्तविक्रमोपरिसिद्धायतनमिव वेदितव्यम् । तथा पूर्वदिग्भाविनो भवनस्य दक्षिणतो
दक्षिणपूर्वदिग्भाविनः प्रासादावतंसकस्योत्तरतः, तथा दक्षिणदिग्भाविनो भवनस्य पूर्वतो दक्षिणपूर्वदि-
ग्भाविनः प्रासादावतंसकस्यापरतः, तथा दक्षिणदिग्भाविनो भवनस्य पश्चिमायां दक्षिणापरदिग्भाविनः
प्रासादावतंसकस्य पूर्वतः, तथा पश्चिमदिग्भाविनो भवनस्य दक्षिणतो दक्षिणापरदिग्भाविनः प्रासादाव-
तंसकस्योत्तरतः, तथा पश्चिमदिग्भाविनो भवनस्योत्तरत उत्तरपश्चिमदिग्भाविनः प्रासादावतंसकस्य
दक्षिणतः, तथा उत्तरदिग्भाविनो भवनस्य पश्चिमायामुत्तरपश्चिमदिग्भाविनः प्रासादावतंसकस्य पूर्वतः,
तथा उत्तरदिग्भाविनो भवनस्य पूर्वतः उत्तरपूर्वदिग्भाविनः प्रासादावतंसकस्यापरतः प्रत्येकमेकैकः

पूर्वोक्तप्रमाणकूटो वक्तव्यः, तेषां च कूटानामुपरि प्रत्येकमेकैकं सिद्धायतनं, तानि च सिद्धायतनानि प्राग्वद्वक्तव्यानि ॥ २९१ ॥

एतदेव दिदर्शयिषुराह—

बहुविहरुक्खगणेहिं, वणसंडेहिं घणनिवहजूएहिं ।
तेहिं जोयणसएहिं, सुदंसणा संपरिक्खित्ता ॥ २९२ ॥

व्याख्या—सा सुदर्शना जम्बूस्त्रिभिर्वनखण्डैर्बहुविधवृक्षगणैर्नानाप्रकारतरुगणसमूहारमकैर्घननिवहजूःतैर्जलभृतमेघवृन्दकल्पैर्योजनशतिकैर्योजनशतप्रमाणपृथुत्वैः संपरिक्षिप्ता ॥ २९२ ॥

जंबूउ पन्नासं, दिसि विदिसि गंतु पढमवणसंडे ।
चउरो दिसासु भवणा, विदिसासु य होंति पासाया ॥ २९३ ॥

व्याख्या—प्रथमे वनखण्डे दिक्षु विदिक्षु च प्रत्येकं सपरिवाराया जम्बूतः पञ्चाशत्पञ्चाशद्योजनानि गत्वाऽत्रान्तरे चतसृषु पूर्वादिषु दिक्षु प्रत्येकमेकैकभवनभावेन चत्वारि भवनानि, चतसृषु विदिक्षु प्रत्येकमेकैकप्रासादभावेन चत्वारः प्रासादाः प्रासादावतंसकाः ॥ २९३ ॥

भवनानां प्रासादावतंसकानां च प्रमाणमाह—

कोसपमाणा भवणा, चउवाविपरिग्गया य पासाया ।
कोसद्धवित्थरा कोस—मूसियाणाढियसुरस्स ॥२९४ ॥

व्याख्या—क्रोशप्रमाणानि भवनानि दीर्घत्वेन, विष्कम्भतः कोशार्धं, उच्चैस्त्वेन देशोनक्रोशमित्युपलक्षणव्याख्यानादवसेयम् । तथा विदिक्षु ये वर्तन्ते प्रासादास्ते प्रत्येकं चतुर्वापीपरिगताः प्रत्येकं च कोशार्धं विस्तृताः, देशोनं क्रोशमुच्छ्रिताः, कोशमायताः । एतानि भवनानि प्रासादावतंसकाश्चानादृताभिधानस्य देवस्य संबन्धिनो वेदितव्याः ॥ २९४ ॥

सम्प्रति वापीनामुद्धेधादिप्रमाणमाह—

पंचेव धणुसयाइं, उव्वेहेणं हवंति वावीउ ।
कोसद्धवित्थराउ, कोसायामाउ सव्वाउ ॥ २९५ ॥

व्याख्या—सर्वा अपि वाप्य उद्वेधेन पञ्च धनुःशतानि भवन्ति, तथा क्रोशार्धं विस्तृताः, कोशमायामतः ॥ २९५ ॥

साम्प्रतमेतासां नामान्याह—

उत्तरपुरच्छिमाए, वावी नामा पयक्खिणा इणमो ।

पउमा पउमाज्ञ कुमुया, कुमुयाज्ञा पढमपासाए ॥ २७६ ॥
उप्पल ज्ञोमा ज्ञलिणु–प्पलुजाला उप्पला य बीयम्मि ।
जिंगा जिंगनिजंजणा, कज्जलपज्ञ तश्यए ज्ञणिया ॥ २७७ ॥
सिरिकंता सिरिमहिया, सिरि चंदा पच्छिमम्मि सिरिनिलया ।
पासायाण चउण्हं, ज्ञवणाणं अंतरे कूमा ॥ २७८ ॥

व्याख्या— एतास्तिस्रोऽपि गाथा गतार्था ज्ञावार्थश्च प्रागेव कथितः, नवरं द्वितीये प्रासादे पूर्वदक्षिणदिग्ज्ञाविनि, तृतीये दक्षिणापरदिग्ज्ञाविनि, चतुर्थे तूत्तरापरदिग्ज्ञाविनि । एतेषां च चतुर्णां ज्ञवनानां चतुर्णां ( च ) प्रासादावतंसकानामपान्तरालेषु प्रत्येकमेकैकः कूटः, ते च कूटाः सर्वसङ्ख्ययाऽष्टौ ॥ २७६–२७७–२७८ ॥

सम्प्रति तेषां परिमाणमाह—

अट्ठुसहकूमसरिसा, सवे जंबूनयामया ज्ञणिया ।
तेसुवरिं जिणज्ञवणा, कोसपमाणा परमरम्मा ॥ २७९ ॥

व्याख्या—प्रासादज्ञवनापान्तरालज्ञाविनः सर्वसङ्ख्ययाऽष्टौ कूटाः, ते च सर्वेऽपि जाम्बूनदमया वृषज्ञकूटसदृशा वृषज्ञकूटवत्परिमाणतो ज्ञणिताः, तेषां च कूटानामुपरि जिनज्ञवनानि प्रत्येकमेकैकं तेषामुपरि

जिनभवनमित्यर्थः, तानि च जिनभवनानि दीर्घत्वेन क्रोशप्रमाणानि । उपलक्षणमेतत् ( तेन ) क्रोशार्धं विस्तृतानि, देशोनं क्रोशमुच्छ्रितानि, विविधरत्नमयतया परमरम्याणि । तथा तस्या जम्ब्वा द्वादश नामधेयानि, तद्यथा—सुदर्शना १, अमोघा २, सुप्रबुद्धा ३, यशोधरा ४, भद्रा ५, विशाखा ६, सुजाता ७, सुमनाः ८, विदेहजम्बूः ९, सौमनसा १०, नियता ११, नित्यमण्डिता १२ । उक्तं च—"सुदंसणा १ अमोहा २ य, सुप्पबुद्धा ३ जसोधरा ४ । भद्दा ५ य विसाखा ६ य, सुजाया ७ सुमणा ८ वि य ॥ १ ॥ विदेहजंबू ९ सोमणसा १०, नियया ११ निच्चमंडिया १२ । सुदंसणाए जंबूए, नाम विज्जा दुवालस ॥ २ ॥" तस्या अधिपतिरनादृतनामा देवः, स च पल्योपमस्थितिकश्चतुर्णामिन्द्रसामानिकसहस्राणां चतसृणामग्रमहिषीणां सपरिवाराणां तिसृणां पर्षदां सप्तानामनीकानां सप्तानामनीकाधिपतीनां षोडशानामात्मरक्षकदेवसहस्राणामन्येषां चानादृताभिधानराजधानीवास्तव्यानां बहूनां वानमन्तराणां देवानां देवीनां च स्वामी । सा चानादृतस्य देवस्य संबन्धिनी राजधानी अनादृताऽभिधाना मेरोरुत्तरतस्तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्यापरस्मिन् जम्बूद्वीपे द्वादशयोजनसहस्रेभ्यः परतो यथास्थानमवसेया । देवकुरवोऽपि शीतोदया महानद्या द्विधा विभक्ताः, तद्यथा—एकं पूर्वार्धमपरमपरार्धं, तत्र यत् शीतोदायाः पूर्वस्मिन् भागे तत्पूर्वार्धमपरदिग्भागेऽपरार्धम् । तत्रापरार्धबहुमध्यदेशभागे शाल्मली नाम वृक्षः, स च जम्बूवृक्षवदविशेषेण वक्तव्यः, नवरमत्र शाल्मलीपीठं कूटानि च रजतमयानि, तस्य शाल्मलीवृक्षस्याधिपतिर्गरुडवेगो नाम देवः, तस्य च राजधानी मेरोर्दक्षिणतः, शेषं तथैव ॥ २९९ ॥

एतदेवाह—

देवकुरुपच्छिमद्धे, गरुलावासस्स सामलिदुमस्स ।
एसेव कमो नवरं, पेढं कूडा य रययमया ॥ ३०० ॥

व्याख्या—देवकुरूणां पश्चिमेऽर्धे गरुडावासस्य गरुडवेगनाम्नो देवस्यावासभूतस्य शाल्मलीद्रुमस्य एष एवानन्तरोदितो जम्बूवृक्षविषयः क्रमो वेदितव्यः । नवरं शाल्मलीवृक्षस्य पीठं कूटानि प्रासादभवनापान्तरालवर्तीनि रजतमयानि । अपि चायं शाल्मलीवृक्षो यदा तदा वा सुवर्णकुमाराधिपतिवेणुदेववेणुदालिक्रीडास्थानं, तथा चाह सूत्रकृताङ्गचूर्णिकृत् शाल्मलीवृक्षस्य वक्तव्यताऽवसरे—"तत्थ वेणुदेवे वेणुदाली य वसइ" तयोर्हि तत्क्रीडास्थानमिति ॥ ३०० ॥

सम्प्रति देवकुरूत्तरकुरुनरवक्तव्यतामाह—

दोसु वि कुरासु मणुआ, तिपल्लपरमाउणो तिकोसुच्चा ।
पिट्ठकरंडसयाइं, दो छप्पन्नाइं मणुयाणं ॥ ३०१ ॥
सुसमसुसमाणुभावं, अणुहवमाणाणवच्चगोवणया ।
अउणापन्नदिणाइं, अट्ठमभत्तस्स आहारो ॥ ३०२ ॥

व्याख्या—द्वयोरपि कुर्वोः देवकुरुषूत्तरकुरुषु चेत्यर्थः, मनुजा मनुष्यास्त्रीणि पल्यानि पल्योपमानि परममुत्कृष्टमायुर्येषां ते त्रिपल्यपरमायुषः, जघन्यतस्तु पल्योपमासङ्ख्येयभागहीनत्रिपल्योपमायुषः, तथा चोक्तं जीवाभिगमे स्त्रियमधिकृत्य—"देवकुरुउत्तरकुरुअकम्मभूमगमणुस्सिस्त्रीणं भंते केवइकालं ठिई पन्नत्ता ? गोयमा ! जहन्नेणं देसूणाइं तिन्नि पलिउवमाइं पलिउवमस्स असंखिजइभागेणं ऊणगाइं, उक्कोसेणं तिन्नि पलिउवमाइं" इति । तथा त्रिक्रोशोच्चाः त्रीणि गव्यूतान्युच्चाः, तथा तेषां तत्रत्यानां मनुष्याणां पृष्ठकरण्डशते[1] द्वे षट्पञ्चाशे षट्पञ्चाशदधिके, ते च मनुष्याः सदैव सुषमसुषमानुभावमनुभवन्ति । यदपि च कल्पपादपपुष्पफलास्वादादिकं तदपि हरिवर्षादिक्षेत्रापेक्षयाऽनन्तगुणविशिष्टानुभावं, इत्थंभूतं च सुषमसुषमानुभावमनुभवतां मनुष्याणामपत्यगोपना स्वापत्यपरिपालना एकोनपञ्चाशद्दिनानि, तदूर्ध्वं काशजृम्भादिव्याजेन मरणमुपगम्य दिवमुपसर्पन्ति, तथा तेषां तत्रत्यानां मनुष्याणामाहार आहारग्रहणमष्टमभक्तस्योर्ध्वमुपवासत्रयातिक्रमे इत्यर्थः ॥ ३०१–३०२ ॥

तदेवमुक्ता देवकुरूत्तरकुरुवक्तव्यता, सम्प्रति मेरुवक्तव्यतामाह—

लोगस्स नाभिभूओ, नवनवइ सहस्स जोयणुव्विद्धो ।
मेरुगिरी रयणमओ, अवगाढो जोयणसहस्सं ॥ ३०३ ॥

---

१ पृष्ठकरण्डाना शते इति षष्ठीसमासः ।

व्याख्या—उत्तरकुरूणां दक्षिणतो देवकुरूणामुत्तरतः पूर्वविदेहानां पश्चिमदिग्भागेऽपरविदेहानां पूर्वतः सकलस्यापि लोकस्य तिर्यग्लोकस्य नाभिभूतो मध्यभूतो, नाभिशब्दोऽत्र मध्यवाची प्रतिपत्तव्यः, मेरुर्नाम गिरिरस्ति, स च रत्नमयो नानाविधरत्नबहुलो मूले विस्तीर्णो मध्ये संक्षिप्त उपरि तनुको गोपुच्छसंस्थानसंस्थित एकया पद्मवरवेदिकया एकेन च वनखण्डेन समन्ततः परिक्षिप्तो नवनवतियोजनसहस्राण्युद्विद्धोऽवगाढो भूमौ प्रविष्टो योजनसहस्रम् ॥ ३०३ ॥

सम्प्रत्यस्यैव विष्कम्भपरिमाणमाह—

दस एक्कारसभागा, नउया दस चेव जोयणसहस्सा ।
मूले विक्खंभो से, धरणियले दस सहस्साइं ॥ ३०४ ॥

व्याख्या—मूले कन्दे 'से' तस्य मेरोर्विष्कम्भो दश योजनसहस्राणि नवत्यधिकानि दश चैकादश भागा योजनस्य १००९० अं० $\frac{10}{11}$ धरणितले समे भूभागे पुनः तस्य मेरोर्विष्कम्भो दश योजनसहस्राणि १०००० ॥ ३०४ ॥

जोयणसहस्समुवरिं, मूले इगतीस जोयणसहस्सा ।
नव सय दसहिय तिन्नि य, एक्कारसभाग परिही से ॥ ३०५ ॥

धरणियले इगतीसं, तेवीसा छस्सया य परिही से ।
उवरिं तिन्नि सहस्सा, बावट्ठं जोयणसयं च ॥ ३०६ ॥

व्याख्या—उपरि शिरोभागे यत्र चूलिकाया उद्गमः सर्वतश्च तस्याः पण्डकवनपरिक्षेपस्तत्र प्रदेशे योजनसहस्रं विष्कम्भः । तथा मूले कन्दे 'से' तस्य मेरोः परिधिरेकत्रिंशत्सहस्राणि नव शतानि दशाधिकानि योजनानां त्रयश्चैकादश भागा योजनस्य ३१९१० क० ३ । तथाहि—मूले विष्कम्भो दश योजनसहस्राणि नवत्यधिकानि दश चैकादश भागा योजनस्य १००९०;;, तत्र योजनराशिरेकादशभागकरणार्थमेकादशभिर्गुण्यते, गुणयित्वा च तत्र दश भागाः प्रक्षिप्यन्ते, ततो जाता एकादशभागा लक्षमेकमेकादश सहस्राणि १११००० । ततोऽस्य राशेर्वर्गो विधीयते, जात एककः द्विकः त्रिकद्विकः एककः षट्शून्यानि १२३२१००००००। ततो दशभिर्गुण्यते, जातानि सप्त शून्यानि १२३२१०००००००। ततो वर्गमूलानयने लब्धः त्रिकः पञ्चकः एककः शून्यं एककः त्रिकः ३५१०१३ । अत्र या काचिदूनता सा न विवक्षिता । ततोऽस्य राशेर्योजनानयनार्थमेकादशभिर्भागो ह्रियते, लब्धान्येकत्रिंशत्सहस्राणि नव शतानि दशाधिकानि योजनानां त्रयश्चैकादशभागा योजनस्य । तथा 'से' तस्य मेरोर्धरणितले परिधिरेकत्रिंशद्योजनसहस्राणि षट् शतानि त्रयोविंशत्यधिकानि ३१६२३, उपरि त्रीणि योजनसहस्राणि शतं चैकं द्वाषष्टं द्वाषष्ट्यधिकं परिधिः ३१६२ ॥ ३०५–३०६ ॥

सम्प्रति मेरोरुपरितलादारभ्याधोमुखगमनेन पृथुत्वानयनाय करणमाह—

जह्निह्मसि विक्खंभं, मंदरसिहराहि उवइत्ताणं ।
एक्कारसहि विभत्तं, सहस्ससहियं च विक्खंभं ॥ ३०७ ॥

व्याख्या—इह मेखलाद्यविवक्षया गोपुच्छाकारेण सर्वत्र वृत्ताकारस्य सतो विवक्षितस्य मेरोः पूर्वाण्यमूनि करणानि पूर्वाचार्योक्तानि वेदितव्यानि—तत्र मन्दरस्य शिखराडुपरितलाद्योजनसहस्रविष्कम्भपरिमाणात् अवपत्य यत्र योजनादौ विष्कम्भं ज्ञातुमिच्छसि तद्योजनादिकमेकादशभिर्विभज्यते, विभक्ते च सति यल्लभ्यते तत्सहस्रसहितं तत्र प्रदेशे विष्कम्भं विष्कम्भपरिमाणं जानीहि । तत्र किलोपरितलाद्योजनलक्षमवतीर्णस्ततो लक्षं ध्रियते १००००० , तस्यैकादशभिर्भागे हृते लब्धानि नवतिशतानि नवत्यधिकानि दश चैकादशभागा ९०९० $\frac{10}{11}$, एतत्सहस्रसहितं क्रियते, जातानि दश योजनसहस्राणि नवत्यधिकानि दश चैकादशभागा योजनस्य १००९० $\frac{10}{11}$ । अथवाऽवतीर्ण उपरितलान्नवनवतियोजनसहस्राणि ९९०००, ततस्तेषामेकादशभिर्भागो ह्रियते, हृते च भागे लब्धानि नव सहस्राणि ९०००, एतानि सहस्रसहितानि क्रियन्ते, जातानि दश सहस्राणि १००००, एतावान् धरणितले विष्कम्भः । एवमन्यत्रापि भावनीयम् ॥ ३०७ ॥

साम्प्रतमधोभागादूर्ध्वगमनेन पृथुत्वानयने करणमाह—

एमेव उप्पइत्ता, जं लद्धं सोहियाहि मूलिल्ला ।

विक्खारा जं सेसं, सो विक्खारो तहिं तस्स ॥ ३०८ ॥

व्याख्या—एवमेव पूर्वोक्तेन प्रकारेण मूलादूर्ध्वमुत्प्लुत्य यत्र यत्र योजनादौ विष्कम्भं ज्ञातुमिच्छसि तस्य योजनादिकमेकादशभिर्भागे हृते यल्लब्धं तन्मूलसत्काद्विस्ताराच्छोधयित्वाऽपनीय यच्छेषमवतिष्ठते स विस्तारस्तस्य मेरोस्तत्र प्रदेशे । तत्र किल कन्दाद्योजनलक्षमूर्ध्वं गतः, ततो योजनलक्षं ध्रियते, तस्यैकादशभिर्भागे हृते लब्धानि नवतिशतानि नवत्यधिकानि योजनानां दश चैकादशभागा योजनस्य ९०९० १०/११, एतन्मूलविस्ताराद्दश योजनसहस्राणि नवत्यधिकानि दश चैकादशभागा योजनस्येत्येवंपरिमाणाच्छोध्यते, शोधिते च सति जातं शेषं सहस्रं १००० । एवमन्यत्रापि भावनीयम् ॥ ३०८ ॥

सम्प्रति मेरोर्मस्तकादारभ्य मूलं यावदेकपार्श्वे वृद्धौ मूलादारभ्य मस्तकान्तं यावदेकपार्श्वे हानौ च करणमाह—

उवरिमहिट्ठिल्लाणं, विक्खाराणं विसेसमद्धं जं ।

उस्सेहरासिभइयं, वुड्ढी हाणी य एगत्तो ॥ ३०९ ॥

व्याख्या—उपरितनाधस्तनयोर्विस्तारयोर्विश्लेषः, किमुक्तं भवति ? महतोऽधस्तनाद्विस्ताराल्लघीयानु-

परितनो विस्तारः शोध्यते, शोधिते च सति यदवशिष्यते तस्यार्धं क्रियते, तस्मिंश्चार्धे उत्सेधराशिना भक्ते सति यल्लभ्यते तदेकपार्श्वे वृद्धौ हानौ वा ज्ञातव्यम्। तत्रोपरितनो विस्तारो योजनसहस्रं १०००, अधस्तनो दश योजनसहस्राणि नवत्यधिकानि दश चैकादशभागाः १००९० १०/११, अस्मादधस्तनाद्विस्तारात्प्राक्तन उपरितनो विस्तारः शोध्यते, जातानि शेषाणि नवतिशतानि नवत्यधिकानि योजनानां दश चैकादशभागा योजनस्य ९०९० १०/११, तत एतेषामर्धे लब्धानि पञ्चचत्वारिंशच्छतानि पञ्चचत्वारिंशदधिकानि योजनानां पञ्च चैकादशभागा योजनस्य ४५४५ ५/११, तत्र योजनराशिरेकादशभागकरणार्थमेकादशभिर्गुण्यते, गुणयित्वा चोपरितनाः पञ्चैकादशभागास्तत्र प्रक्षिप्यन्ते, ततो जाताः सर्वसङ्ख्यया एकादशभागाः पञ्चाशत्सहस्राणि ५००००, मेरोश्चोत्सेधपरिमाणं योजनलक्षं १०००००, तेन भागहारो दीयते, तत्रोपरितनराशेरधस्तनराशेश्च पञ्चाशत्सहस्रैरपवर्तना क्रियते, लब्धोंऽश एकश्छेदो द्विकः १/२, छेदराशेरेकादशभागकरणार्थमेकादशभिर्गुणना क्रियते, जाता द्वाविंशतिः, आगत एकपार्श्वे मूलादूर्ध्वगमने हानौ ऊर्ध्वभागादधःपतने वृद्धौ ( च ) योजनान्ते द्वाविंशतितम एको भागः ॥ ३०९ ॥

सम्प्रत्युभयोः पार्श्वयोर्वृद्धौ करणमाह—

सा चेव दोहिं गुणिया, उभओ पासम्मि होइ परिवुड्ढी ।
हाणी य गिरिस्स भवे, परिहायं तेसु पासेसु ॥ ३१० ॥

व्याख्या—सा चैकपार्श्वगता वृद्धिर्हानिर्वा द्वाभ्यां गुणिता सती गिरेर्मेरुगिरेरुपरितलादारभ्याधोगतावुभयोः पार्श्वयोः परिवृद्धिर्मूलादारभ्योर्ध्वगमने हानिः (वा) अवगन्तव्या। तत्रैकपार्श्वे योजनान्ते वृद्धिर्हानिर्वा एको द्वाविंशतितमो भागः, स द्वाभ्यां गुण्यते, जातौ द्वौ भागौ द्वाविंशतितमौ, ततोऽशराशेश्छेदराशेश्च द्विकेनापवर्तना क्रियते, ततोंऽश एकको जातश्छेद एकादश ¹⁄₁₁ लब्ध उभयोः पार्श्वयोर्वृद्धौ हानौ वा योजनान्ते एक एकादशो भागः॥ ३१०॥

साम्प्रतमुच्चत्वपरिज्ञानाय करणमाह—

जो जत्थ उ विक्खारो, गिरिस्स तं सोहियाहि मूलिल्ला।
विक्खारा जं सेसं, सो छेयगुणो उ उस्सेहो॥ ३११॥

व्याख्या—गिरेर्मेरुगिरेर्यत्र प्रदेशे भूतलादौ यो यावान् विस्तारस्तं मूलसत्काद्विस्ताराच्छोधय, शोधिते च सति तस्मिन् यच्छेषं तत् छेदेनैकादशलक्षणेन गुणितं सद्यावद्भवति तावत्प्रमाणस्तत्रोत्सेधः। तत्रोपरितले विस्तारो योजनसहस्रं १०००, स कन्दसत्काद्विस्ताराद्दश योजनसहस्राणि नवत्यधिकानि दश चैकादशभागा योजनस्येत्येवंपरिमाणाच्छोध्यते, शोधिते च सति जातं शेषं नवतिसहस्राणि नवत्यधिकानि दश चैकादशभागा योजनस्य ९०९०¹⁰⁄₁₁, एतानि छेदराशिना एकादशलक्षणेन गुण्यन्ते, जातानि नवनवतिसहस्राणि नव शतानि नवत्यधिकानि ९९९९०, ये (च) दशैकादशभागास्तेऽप्येकादशभिर्गुण्य-

न्ते, जातं दशोत्तरं शतं ११०, तस्यैकादशभिर्भागे हृते लब्धानि दश योजनानि, ( तानि ) पूर्वराशौ प्रक्षिप्यन्ते, जातं योजनानां लक्षं, एतावदधोविस्तारोपरितनविस्तारयोरन्तरे उच्चत्वम् । एवं मध्यभागादावपि उच्चत्वपरिमाणं परिभावनीयम् । अथ कस्मादेकादशलक्षणश्छेदः कस्माद्वा तेन शेषं गुण्यते ? उच्यते—एकादशानां योजनानामन्ते एकं योजनं, एकादशानां योजनशतानामन्ते एकं योजनशतं, एकादशानां योजनसहस्राणामन्ते एकं योजनसहस्रं त्रुट्यति, तत एकादशलक्षणश्छेदः, तेन चोच्चत्वपरिज्ञानाय विस्तारशेषः गुण्यते ॥ ३११ ॥

सम्प्रति मेरोः काण्डादिवक्तव्यतामाह—

मेरुस्स तिन्नि कंडा, पुढवोवलवइरसक्करा पढमे ।
रयए य जायरूवे, अंके फलिहे य बीयम्मि ॥ ३१२ ॥
एगागारं तइयं, तं पुण जंबूणयामयं होइ ।
जोयणसहस्स पढमं, बाहल्लेणं च बीयं तु ॥ ३१३ ॥
तेवट्ठि सहस्साइं, तइयं छत्तीस जोयणसहस्सा ।

व्याख्या—मेरोः पर्वतस्य त्रीणि काण्डानि, काण्डं नाम विशिष्टपरिमाणानुगतो विच्छेदः, तत्र प्रथमे

काण्मे पृथिव्युपलवज्रशर्कराः, किमुक्तं भवति? प्रथमं काण्डं क्वचित्पृथिवीबहुलं, क्वचिदुपलबहुलं, क्वचिद्वज्रबहुलं, क्वचिच्छर्कराबहुलम्। तथा द्वितीयकाण्डे रजतं, जातरूपम्, अङ्करत्नानि, स्फटिकरत्नानि च, अत्रापीयं भावना—द्वितीयं काण्डं क्वचिद्रजतबहुलं, क्वचिज्जातरूपबहुलं, क्वचिदङ्करत्नबहुलं, क्वचित्स्फटिकरत्नबहुलम्। तृतीयं पुनरेकाकारं, तच्च सर्वात्मना जाम्बूनदमयम्। उक्तं च—"मंदरस्स णं भंते पव्वयस्स कइ कंडा पन्नत्ता? गोयमा! तिन्नि कंडा पन्नत्ता, तं जहा—हेट्ठिल्ले कंडे मज्झिल्ले कंडे उवरिमे कंडे। मंदरस्स णं भंते पव्वयस्स हिट्ठिल्ले कंडे कइविहे पन्नत्ते? गोयमा! चउव्विहे पन्नत्ते, तं जहा—पुढवी उवले वइरे सक्करा। मंदरस्स णं भंते पव्वयस्स मज्झिल्ले कंडे कइविहे पन्नत्ते? गोयमा! चउविहे पन्नत्ते, तं जहा—अंके फलिहे रयए जायरूवे। मंदरस्स णं भंते पव्वयस्स उवरिमे कंडे कइविहे पन्नत्ते? गोयमा! एगागारे पन्नत्ते, तं जहा—सव्वजंबूणयामए"। तत्र प्रथमं काण्डं बाहल्येन योजनसहस्रं योजनसहस्रपरिमाणं, तच्च भूमाववगाढं, द्वितीयं तु त्रिषष्टिसहस्राणि, तच्च समतलभूभागादारभ्य प्रतिपत्तव्यं, तृतीयं षट्त्रिंशद्योजनसहस्राणि। एवं काण्डत्रयपरिमितो मेरुर्योजनलक्षप्रमाणः॥

मेरुस्स उवरि चूला, उव्विद्धा जोयणड्डवीसं॥ ३१४॥
एवं सव्वग्गेणं, समूसिओ मेरु लक्खमइरित्तं।

व्याख्या—मेरोर्लक्षप्रमाणस्योपरि योजनसहस्रप्रमाणायामविष्कम्भस्योपरितनस्य तलस्य बहुमध्यभागे

द्वे विंशती ( ४० ) योजनानामुच्छ्रिता चूला, एवं सर्वात्मना परिमाणतश्चिन्त्यमानो मेरुर्योजनलक्षमतिरिक्तं भवति चत्वारिंशदधिकयोजनलक्षप्रमाणो भवतीत्यर्थः ॥

सम्प्रति मेरुगतवनवक्तव्यतामाह—

गोपुच्छसंठियम्मि, ठियाइ चत्तारि य वणाइं ॥ ३१५ ॥

भूमीइ भद्दसालं, मेहलजुयलम्मि दोन्नि रम्माइं ।
नंदणसोमणसाइं, पंडगपरिमंडियं सिहरं ॥ ३१६ ॥

व्याख्या—तस्मिन् मेरौ गोपुच्छसंस्थिते चत्वारि वनानि सन्ति, तद्यथा—भूमौ भद्रशालवनं, तथा मेखलायुगले द्वे रम्ये नन्दनसौमनसाख्ये वने, किमुक्तं भवति ? प्रथममेखलायां नन्दनवनं, द्वितीयस्यां मेखलायां सौमनसमिति । शिखरं पण्डकवनमण्डितमिति शिखरे चतुर्थं चूलिकायाः समन्ततः परिक्षेपि पण्डकवनम् ॥ ३१६ ॥

तत्र प्रथमस्य भद्रशालाख्यस्य वनस्यायामविष्कम्भादिप्रतिपादनार्थमाह—

बावीस सहस्साइं, पुव्वावरमेरुभद्दसालवणं ।
अड्ढाइज्जसया पुण, दाहिणपासम्मि उत्तरउ ॥ ३१७ ॥

व्याख्या—भद्रशालवनं पूर्वापरायतं दक्षिणोत्तरविस्तीर्णं मेरोर्वलयाकारेण परिक्षेपि च । तत्र मेरोः

पूर्वस्यामपरस्यां च दिशि प्रत्येकं भद्रशालवनमायामतो द्वाविंशतियोजनसहस्राणि २२००० । दक्षिण-पार्श्वे उत्तरपार्श्वे ( च ) प्रत्येकं विष्कम्भोऽर्धतृतीयानि योजनशतानि २५० ॥ ३१७ ॥

सम्प्रत्यस्यैव भद्रशालवनस्य विस्तारानयनाय करणमाह—

पुव्वेण मंदराओ, जो आयामो उ भद्दसालवणे ।

अट्ठासीइ विभत्तो, सो विक्खारो हु दाहिणतो ॥ ३१८ ॥

व्याख्या—मन्दरान्मेरोः पूर्वेण पूर्वस्यां दिशि, उपलक्षणमेतत्,( तेन ) पश्चिमायां वा, य आयामो भद्रशालवने सोऽष्टाशीतिविभक्तः सन् यावान् भवति, किमुक्तं भवति ? तस्यायामपरिमाणस्याष्टाशीत्या भागे हृते यल्लभ्यते स तावान् विस्तारः । 'हु' निश्चितम् । दक्षिणतो दक्षिणस्यां दिशि, उपलक्षणमेतत्, ( तेन ) उत्तरस्यां च । तत्र पूर्वस्यां पश्चिमायां वा दिशि भद्रशालवनस्यायामो द्वाविंशतियोजनसहस्राणि २२०००, तेषामष्टाशीत्या भागे हृते लब्धानि अर्धतृतीयानि योजनशतानि २५०, तावान् दक्षिणत उत्तरतो वा भद्रशालवनस्य विष्कम्भः ॥ ३१८ ॥

साम्प्रतमायामानयने करणमाह

दाहिणपासे गिरिणो, जो विक्खारो उ भद्दसालवणे ।

अट्ठासीइगुणो सो, आयामो होइ पुव्विल्ले ॥ ३१९ ॥

व्याख्या—गिरेर्मेरुगिरेर्दक्षिणपार्श्वे, उपलक्षणमेतत्, (तेन) उत्तरपार्श्वे वा यो भद्रशालवने विस्तारो विष्कम्भः सोऽष्टाशीत्या गुणितः सन् यावान् भवति तावत्प्रमाण आयामः पूर्वदिग्भावी, उपलक्षणमेतत्, पश्चिमदिग्भावी वा। तत्र दक्षिणपार्श्वे उत्तरपार्श्वे वा विष्कम्भोऽर्धतृतीयानि योजनशतानि २५०, तान्यष्टाशीत्या गुण्यन्ते, जातानि द्वाविंशतिसहस्राणि २२०००, एतावान् पूर्वस्यामपरस्यां च दिशि आयामः ॥ ३१९ ॥

साम्प्रतमस्यैव भद्रशालवनस्य विभागप्रदर्शनार्थमाह—

चउपन्न सहस्साइं, मेरुवणं अट्ठभागपविभत्तं।
सीयासीओयाहिं, मंदरवक्खारसेलेहिं ॥ ३२० ॥

व्याख्या—मेरुणा मध्यगतेन युक्तं वनं भद्रशालं मेरुवनं मेरुसहितं भद्रशालवनमित्यर्थः, तच्च दैर्घ्यपरिमाणेन चिन्त्यमानं चतुःपञ्चाशद्योजनसहस्राणि, तथाहि—द्वाविंशतियोजनसहस्राणि पूर्वस्यां दिशि, द्वाविंशतियोजनसहस्राण्यपरस्यां, मेरोरायामो दश योजनसहस्राणि, सर्वमीलने जातानि चतुःपञ्चाशत्सहस्राणि ५४०००, एवंरूपं मेरुसहितं भद्रशालवनम्। शीताशीतोदाभ्यां मन्दरेण वक्षस्कारगिरिभिश्चाष्टभागप्रविभक्तम् अष्टभिर्भागैर्विभक्तस्वरूपम्, तद्यथा—एको भागो मन्दरस्य पूर्वतः, द्वितीयोऽपरतः, तृतीयो विद्युत्प्रभसौमनसमध्ये दक्षिणतः, चतुर्थो गन्धमादनमाल्यवन्मध्ये उत्तरतः, तथा शीतोदया

उत्तरतो गच्छन्त्या दक्षिणखण्डं पूर्वपश्चिमविभागेन द्विधा कृतं, ततो लब्धः पञ्चमो भागः, पश्चिमतो गच्छन्त्या पश्चिमं खण्डं दक्षिणोत्तरविभागेन द्विधा कृतं ततो लब्धः षष्ठो भागः, तथा शीतया महानद्या दक्षिणाभिमुखं गच्छन्त्या उत्तरं खण्डं पूर्वपश्चिमभागेन द्विधा कृतं ततो लब्धः सप्तमो भागः, पूर्वतो गच्छन्त्या पूर्वखण्डं दक्षिणोत्तरविभागेन द्विधा कृतं ततो लब्धोऽष्टमो भागः। स्थापना ॥ ३२० ॥

सम्प्रति भद्रशालवने सिद्धायतनादिवक्तव्यतामाह—

**मेरूउ पन्नासं, दिसि विदिसि गंतु भद्दसालवणे।**
**चउरो सिद्धाययणा, दिसासु विदिसासु पासाया ॥ ३२१ ॥**

व्याख्या—मेरोरारभ्य चतसृषु दिक्षु चतसृषु विदिक्षु ( च ) प्रत्येकं भद्रशालवनं पञ्चाशत्पञ्चाशद्योजनान्यवगाह्यात्रान्तरे चतसृषु दिक्षु प्रत्येकमेकैकसिद्धायतनभावेन चत्वारि सिद्धायतनानि, चतसृषु विदिक्षु ( च ) प्रत्येकमेकैकप्रासादभावेन चत्वारः प्रासादाः। इयमत्र भावना–मेरोरुत्तरपूर्वत उत्तरकुरुमध्ये शीताया महानद्या उत्तरदिग्भागे पञ्चाशद्योजनेभ्यः परः प्रासादः, मेरोः पूर्वस्यां दिशि शीताया महानद्याः पञ्चाशद्योजनेभ्यः परं सिद्धायतनं, मेरोर्दक्षिणपूर्वस्यां पञ्चाशद्योजनान्यवगाह्यात्रान्तरे देवकुरूणां बहिः शीताया महानद्या दक्षिणत एव प्रासादः, मेरोर्दक्षिणतो देवकुरूणां मध्ये शीतोदाया महानद्याः पूर्वतो मेरुमधिकृत्य पञ्चाशद्योजनातिक्रमेण सिद्धायतनं, मेरोरपरदक्षिणतः पञ्चाशद्योजनान्य-

वगाह्य देवकुरूणां मध्ये शीतोदाया महानद्या दक्षिणतः प्रासादः, मेरोः पश्चिमायां दिशि पञ्चाशद्योजनान्यतिवाह्य शीतोदाया महानद्या दक्षिणतः सिद्धायतनं, मेरोरपरोत्तरस्यां दिशि पञ्चाशद्योजनान्यवगाह्यात्रान्तरे उत्तरकुरूणां बहिः शीतोदाया महानद्या उत्तरत एव प्रासादः, मेरोरुत्तरत उत्तरकुरूणां मध्ये शीताया महानद्याः पश्चिमतो मेरुमधिकृत्य पञ्चाशद्योजनातिक्रमे सिद्धायतनम् ॥ ३२१ ॥

सम्प्रति सिद्धायतनादीनामुच्चत्वादिमानमाह—

छत्तीसुच्चा पणुवीस–विछन्ना दुगुणमाययाऽऽययणे ।
चउवाविपरिक्खित्ता, पासाया पंचसयमुच्चा ॥ ३२२ ॥

व्याख्या—सर्वाण्यपि सिद्धायतनानि प्रत्येकं षट्त्रिंशद्योजनान्युच्चानि, पञ्चविंशतियोजनानि विस्तृतानि, द्विगुणमायतानि पञ्चाशद्योजनान्यायतानीत्यर्थः, तानि च सर्वाण्यपि अनेकमणिमयस्तम्भशतसन्निविष्टानि, एकैकस्य च सिद्धायतनस्य पूर्वोत्तरदक्षिणरूपासु तिसृषु दिक्षु प्रत्येकमेकैकद्वारभावेन त्रीणि त्रीणि द्वाराणि, तानि च द्वाराणि प्रत्येकमष्टावष्टौ योजनान्युच्चानि, चत्वारि चत्वारि योजनानि विष्कम्भतः । एकैकस्य च सिद्धायतनस्य बहुमध्यदेशभागे महत्येकैका मणिमयी पीठिका, ताश्च मणिपीठिकाः प्रत्येकमष्टावष्टौ योजनान्यायामविष्कम्भाभ्यां, चत्वारि चत्वारि योजनानि बाहल्यतः, तासां च मणिपीठिकानामुपरि प्रत्येकमेकैको देवच्छन्दकः, ते च प्रत्येकमष्टावष्टौ योजनान्यायामविष्कम्भाभ्यां, सातिरेका-

ण्यष्टावष्टौ योजनान्युच्चैस्त्वेन, एकैकस्मिंश्च देवच्छन्दकेऽष्टोत्तरमष्टोत्तरं शतं जिनप्रतिमानां, ताश्च जिनप्रतिमाः प्रमाणतो वर्णतश्च प्राग्व्यावर्णितसिद्धायतनवद्द्रष्टव्याः। ये तु प्रासादास्ते प्रत्येकं पञ्च पञ्च योजनशतान्युच्चाः, अर्धतृतीयान्यर्धतृतीयानि योजनशतानि दीर्घाः, अर्धतृतीयान्यर्धतृतीयानि योजनशतानि विस्तीर्णाः। तथा प्रत्येकं चतुर्वापीपरिक्षिप्ताः चतसृभिश्चतसृभिर्वापीभिः समंततः परिक्षिप्ताः ॥ ३२२ ॥

सम्प्रति वापीनां दैर्घ्यादिकमाह—

**दीहाउ पन्नासं, पणुवीसं जोयणाणि विच्छिन्ना।**
**दसजोयणावगाढा, जंबूवावीसरिसनामा ॥ ३२३ ॥**

व्याख्या—ताः प्रासादपरिक्षेपिण्यो वाप्यः प्रत्येकं पञ्चाशत्पञ्चाशद्योजनानि दीर्घाः, पञ्चविंशतिपञ्चविंशतियोजनानि विस्तीर्णाः, दशदशयोजनान्यवगाढाः, जम्बूवापीसदृशनामानः। किमुक्तं भवति? यान्येव प्राग्जम्बूवृक्षवक्तव्यतायां प्रासादपरिक्षेपिणीनां वापीनां यथा नामान्युक्तानि तान्येवाधिकृतानामपि वापीनां नामान्यवसेयानि। तद्यथा—मेरोरुत्तरपूर्वस्यां दिशि यः प्रासादस्तस्य पूर्वेण वापी पद्मा, दक्षिणतः पद्मप्रभा, पश्चिमायां कुमुदा, उत्तरतः कुमुदप्रभा। दक्षिणपूर्वस्यां प्रासादस्य पूर्वत उत्पलगुल्मा, दक्षिणतो नलिना, अपरत उत्पलोज्ज्वला, उत्तरत उत्पला। दक्षिणापरस्यां दिशि प्रासादस्य

पूर्वतो भृङ्गा, दक्षिणतो भृङ्गनिभा, अपरतोऽञ्जनप्रभा, उत्तरतः कज्जलप्रभा। अपरोत्तरस्यां दिशि प्रासादस्य पूर्वतः श्रीकान्ता, दक्षिणतः श्रीमहिता, अपरतः श्रीचन्द्रा, उत्तरतः श्रीनिलया। एतासां च सर्वासामपि वापीनां प्रत्येकं चतसृषु पूर्वादिषु दिक्ष्वेकैकद्वारभावेन चत्वारि चत्वारि त्रिसोपानानि द्वाराणि, एकैकस्मिंश्च द्वारे एकैकं तोरणं, द्वारवर्णनं तोरणवर्णनं च प्रागिव भावनीयम्। एकैका च वापी एकैकया पद्मवरवेदिकया एकैकेन च वनखण्डेन परिक्षिप्ता ॥ ३२३ ॥

ईसाणस्सुत्तरिया, पासाया दाहिणा य सक्कस्स।

व्याख्या—उत्तरीयौ उत्तरपूर्वोत्तरापरदिग्भाविनौ प्रासादावीशानस्य ईशानदेवलोकाधिपतेराभजतः, अत एव तयोः प्रासादयोर्मध्ये प्रत्येकमीशानदेवलोकाधिपतेर्योग्यं सपरिवारं सिंहासनम्। दाक्षिणात्यौ दक्षिणपूर्वापरदक्षिणदिग्भाविनौ प्रासादौ शक्रस्य सौधर्मदेवलोकाधिपतेः, अत एव तयोर्मध्ये प्रत्येकं शक्रेन्द्रयोग्यं सपरिवारं सिंहासनम् ॥

सम्प्रति दिग्गजकूटवक्तव्यतामाह—

अठ्ठदिसि हत्थिकूडा, सीयासीओयाउभयकूले ॥ ३२४ ॥

व्याख्या—अष्टौ दिग्हस्तिकूटाः, ते च शीताशीतोदयोरुभयकूले प्रासादसिद्धायतनानामपान्तराले वेदितव्याः ॥ ३२४ ॥

एतदेव वक्तव्यतामा ( व्यक्तया ) ह—

दो दो चउद्दिसिं मं-दरस्स हिमवंतकूडसमकप्पा ।
पउमोत्तरोऽत्थ पढमो, सीयापुव्वुत्तरे कूले ॥ ३२५ ॥

तत्तो य नीलवंतो, सुहत्थि तह अंजणागिरी कुमुए ।
तह य पलासे वडिंसे, अट्ठमए रोयणागिरी य ॥ ३२६ ॥

व्याख्या—मन्दरस्य मेरोश्चतसृषु दिक्षु विदिग्रूपासु द्वौ द्वौ दिग्हस्तिकूटौ, ततः सर्वसङ्ख्ययाऽष्टौ भवन्ति, ते च हिमवत्कूटसमकल्पाः हिमवत्कूटसदृशस्थितयः । किमुक्तं भवति ? यादृशी स्थितिर्हिमवत्कूटेषु प्रागभिहिता प्रमाणादिविषया तादृश्येतेषामपि द्रष्टव्या । तद्यथा—एते सर्वेऽपि कूटाः प्रत्येकं पञ्चपञ्चयोजनशतान्युच्चैस्त्वेन, पञ्चविंशं पञ्चविंशं योजनशतमवगाहेन, मूले पञ्चपञ्चयोजनशतान्यायामविष्कम्भाभ्यां, मध्ये त्रीणि त्रीणि योजनशतानि पञ्चसप्तत्यधिकानि ३७५, उपर्यर्धतृतीयान्यर्धतृतीयानि योजनशतानि २५०, मूले प्रत्येकमेतेषां परिधिः पञ्चदश योजनशतानि एकाशीत्यधिकानि १५८१, मध्ये एकादश योजनशतानि षडशीत्यधिकानि किञ्चिदूनानि ११८६, उपरि सप्त शतानि एकनवत्यधिकानि किञ्चिदूनानि ७९१, मूले विस्तीर्णा मध्ये संक्षिप्ता उपरि तनुका गोपुच्छसंस्थानसंस्थिताः सर्वरत्नमयाः

प्रत्येकमेकैकया पद्मवरवेदिकया एकैकेन च वनखण्डेन परिक्षिप्ताः । एकैकस्य च दिग्घस्तिकूटस्योपरि बहुमध्यदेशभागे एकैकः प्रासादावतंसकः, ते च प्रासादावतंसकाः प्रत्येकं सार्धानि द्वाषष्टियोजनान्यायामविष्कम्भाभ्यां, सक्रोशान्येकत्रिंशद्योजनान्युच्चैस्त्वेन सर्वरत्नमया नानामणिमयस्तम्भशतसन्निविष्टाः । तेषु मध्ये स्वस्वाधिपतिदेवयोग्यं सपरिवारं सिंहासनम् । सम्प्रत्यमीषां दिग्घस्तिकूटानां नामान्याह— 'पउमोत्तर' इत्यादि, अत्र एतेषु दिग्घस्तिकूटेषु मध्ये प्रथमो दिग्घस्तिकूटः पद्मोत्तरनामा, स च मन्दरपर्वतस्योत्तरपूर्वस्यां दिशि पूर्वाभिमुखं गच्छन्त्याः शीताया महानद्या उत्तरतः, तस्याधिपतिः पद्मोत्तरनामा देवः, स पल्योपमस्थितिको विजयदेव इव महर्द्धिकः, तस्य राजधानी मेरोरुत्तरपूर्वस्यां दिशि तिर्यगसङ्ख्यातान् द्वीपसमुद्रानतिक्रम्यापरस्मिन् जम्बूद्वीपे द्वीपे द्वादशयोजनसहस्राण्यवगाह्य परतो यथास्थानं वेदितव्या । ततस्तदनन्तरं प्रदक्षिणाक्रमेण द्वितीयो नीलवन्नामा दिग्घस्तिकूटः, स च मेरोर्दक्षिणपूर्वस्यां पूर्वाभिमुखं गच्छन्त्याः शीताया महानद्या दक्षिणतः, तस्याधिपतिर्नीलवन्नामा देवः, स च पद्मोत्तर इव महर्द्धिको वेदितव्यः, नवरमेतस्य राजधानी मेरोर्दक्षिणपूर्वस्यामपरस्मिन् जम्बूद्वीपे । तृतीयः सुहस्तिनामा दिग्घस्तिकूटः, स च मन्दरपर्वतस्य दक्षिणपूर्वस्यां शीतोदाया महानद्याः पूर्वतः, तस्याधिपतिः सुहस्तिनामा देवः, सोऽपि पद्मोत्तर इव महर्द्धिकः, अस्यापि राजधानी मेरोर्दक्षिणपूर्वतोऽपरस्मिन् जम्बूद्वीपे । चतुर्थो दिग्घस्तिकूटोऽञ्जनगिरिः, स च मेरोर्दक्षिणापरस्यां दिशि शीतोदाया महानद्या अपरतः, तस्याधिपतिरञ्जननामा देवः, सोऽपि पद्मोत्तरदेव इव महाविभूतिसंपन्नः, तस्य राजधानी मेरोरपरदक्षिणतोऽपर-

स्मिन् जम्बूद्वीपे । पञ्चमः कुमुदनामा दिग्घस्तिकूटः, सोऽपि मेरोर्दक्षिणापरस्यां दिशि पश्चिमाभिमुखं गच्छन्त्याः शीतोदाया दक्षिणतः, तस्याधिपतिः कुमुदनामा देवः, सोऽपि पद्मोत्तर इव महर्द्धिकः, राजधानी तस्यापि मेरोर्दक्षिणापरतोऽपरस्मिन् जम्बूद्वीपे । षष्ठः पलाशनामा दिग्घस्तिकूटः, स च मेरोरुत्तरापरस्यां दिशि पश्चिमाभिमुखं गच्छन्त्याः शीतोदाया उत्तरतः, तस्याधिपतिः पलाशनामा देवः, सोऽपि पद्मोत्तरदेववन्महर्द्धिकः, तस्य राजधानी मेरोरपरोत्तरतोऽपरस्मिन् जम्बूद्वीपे । सप्तमोऽवतंसकनामा दिग्घस्तिकूटः, सोऽपि मन्दरपर्वतस्योत्तरापरदिशि शीताया महानद्या अपरतः, तस्याधिपतिरवतंसकनामा देवः, राजधानी तस्यापि मेरोरुत्तरापरतोऽपरस्मिन् जम्बूद्वीपे । अष्टमो रोचनगिरिनामा दिग्घस्तिकूटः, स च मन्दरपर्वतस्योत्तरपूर्वस्यां दक्षिणाभिमुखं गच्छन्त्याः शीताया महानद्याः पूर्वतः, तस्याधिपतिर्देवो रोचनगिरिनामा, सोऽपि पद्मोत्तरदेव इव महर्द्धिकः, राजधानी तस्य मेरोरुत्तरपूर्वतोऽपरस्मिन् जम्बूद्वीपे ॥ ३२५–३२६ ॥

सम्प्रति नन्दनवनवक्तव्यतामाह—

पंचेव जोयणसए, उड्ढं गंतूण पंचसयपिहुलं ।
नंदणवणं सुमेरुं, परिक्खित्ता ठियं रम्मं ॥ ३२७ ॥

व्याख्या—समतलाद्भूभागात्पञ्च योजनशतान्यूर्ध्वं गत्वाऽत्रान्तरे पञ्चयोजनशतपृथुलं पञ्चयोजनशत-

प्रमाणविष्कम्नं नन्दनं नाम वनं वलयाकारेण सुमेरुं परिक्षिप्य स्थितं, तच्चानेकमणिमयकूटवापीमण्डपादिकलिततया रम्यं रमणीयम् ॥ ३२७ ॥

तत्र बहिर्विष्कम्नपरिमाणप्रतिपादनार्थमाह—

बाहिं गिरिविक्खंनो, तहियं नवनवइजोयणसयाइं ।

चउपन्न जोयणाणि य, एक्कारस नाग छच्चेव ॥ ३२८ ॥

व्याख्या—तस्मिन्नन्दनवने बहिर्मेखलाया बहिर्विनागे गिरिविष्कम्नो नवनवतियोजनशतानि चतुःपञ्चाशदधिकानि षट् चैकादशन्नागा योजनस्य ९९५४ 6/11 । तथाहि—मेरावेकस्मिन् योजनेऽतिक्रान्ते एक एकादशन्नागो योजनस्यातिक्रान्तः प्राप्यते, ततोऽत्र त्रैराशिककर्मविकाशः तच्चेदं त्रैराशिककर्म—यदि योजनमेकमारुह्योपरिक्षेत्रस्य वृत्तताया अपचयः सर्वत्रैकादशन्नागो योजनस्यैको लन्यते, ततः पञ्चयोजनशतारोहणे कोऽपचयः प्राप्यते ? लब्धानि पञ्चचत्वारिंशद्योजनानि पञ्च चैकादशन्नागा योजनस्य, एतत्समतलन्नूनागगतस्य मेरुवृत्तक्षेत्रपरिमाणस्य दशयोजनसहस्ररूपस्य मध्यादपनीयते, ततो यथोक्तं नन्दनवने बहिर्विष्कम्नपरिमाणं नवति ॥ ३२८ ॥

सम्प्रति नन्दनवन एवान्तर्विष्कम्नपरिमाणप्रतिपादनार्थमाह—

अडणानउइ सयाइं, चउपन्नहियाइं नंदणवणम्मि ।

अंतो गिरिविक्खंभो, एक्कारस भाग छच्चेव ॥ ३२९ ॥

व्याख्या—एकोननवतिशतानि चतुःपञ्चाशदधिकानि योजनानां षट् चैकादशभागा योजनस्य ८९५४ ६/११ एतावान्नन्दनवनेऽन्तर्गिरिविष्कम्भः । तथाहि—नन्दनवनं मेरुं सर्वतश्चक्रवालतया व्यवस्थितं, विष्कम्भपरिमाणं च नन्दनवनस्यैकपार्श्वे पञ्च योजनशतानि, ततस्तानि द्विगुणीक्रियन्ते, जातं सहस्रं, तत्प्रागुक्तान्नन्दनवनगतवहिर्विष्कम्भपरिमाणात् नवनवतिशतानि चतुःपञ्चाशदधिकानि षट् चैकादशभागा योजनस्येत्येवंरूपादपनीयते, ततो यथोक्तपरिमाणो मध्यविष्कम्भो भवति ॥ ३२९ ॥

सम्प्रति नन्दनवन एव वहिर्विष्कम्भपरिधिमाह—

इगतीस सहस्साइं, चत्तारि सयाइं अउणसीयाइं ।
बाहिं नगस्स परिही, सविसेसा नंदणवणम्मि ॥ ३३० ॥

व्याख्या—नन्दनवने नगस्य मेरोः पर्वतस्य वहिः परिधिरेकत्रिंशत्सहस्राणि चत्वारि शतान्येकोनाशीत्यधिकानि सविशेषाणि योजनानां ३१४७९, तथाहि—नन्दनवने वहिर्विष्कम्भो नवनवतिशतानि चतुःपञ्चाशदधिकानि योजनानां षट् चैकादशभागा योजनस्य ९९५४ ६/११ ततो योजनराशिरेकादशभागकरणार्थमेकादशभिर्गुण्यते, गुणयित्वा चोपरितनाः षट् एकादशभागास्तत्र प्रक्षिप्यन्ते, जाता एकादश-

गागाः सर्वसङ्ख्यया लक्षमेकं नव सहस्राणि पञ्च शतानि १०९५००, ततो "विक्खंभवग्ग दहगुणे"-त्यादिना प्रागुक्तेन करणेन यथोक्तं परिधिपरिमाणमागच्छति ॥ ३३० ॥

सम्प्रत्यन्तर्विष्कम्भपरिधिपरिमाणमाह—

अट्ठावीस सहस्सा, तिन्नि सया जोयणाण सोलहिया ।
अंतोगिरिस्स परिरउ, एक्कारसभाग अट्ठेव ॥ ३३१ ॥

व्याख्या—अष्टाविंशतिसहस्राणि त्रीणि शतानि षोडशाधिकानि योजनानामष्टौ चैकादशभागा योजनस्य २८३१६ ८/११ एतावान्नन्दनवनेऽन्तर्गिरेः परिरयः । परिरयानयनं च पूर्ववत्कर्तव्यम् ॥ ३३१ ॥

सम्प्रति तत्रैव नन्दनवने सिद्धायतनादिवक्तव्यतामाह—

सिद्धाययणा चउरो, पासाया वाविउ य कूडा य ।
जह चेव भद्दसाले, नवरं नामाणिसिं इणमो ॥ ३३२ ॥

व्याख्या—यथैव भद्रशालवने चतसृषु पूर्वादिषु दिक्षु प्रत्येकमेकैकसिद्धायतनभावेन चत्वारि सिद्धायतनानि, चत्वारश्च विदिक्षु प्रासादाः, एकैकस्य च प्रासादस्य चतसृषु दिक्षु प्रत्येकमेकैका वापी, प्रासादसिद्धायतनानां चापान्तराले कूटाः । यच्च प्रासादानां सिद्धायतनानां वापीनां कूटानां च परिमाणं, यथा चोत्तरपूर्वापरोत्तरदिग्भाविनौ प्रासादावीशानदेवलोकाधिपतेर्दक्षिणपूर्वापरदक्षिणदिग्भाविनौ प्रा-

सादौ शक्रस्य, तदेतत्सर्वमन्यूनातिरिक्तमत्रापि नन्दनवने समवसेयं, नवरमेतासामत्रत्यानां वापीनां कूटानां च नामान्यमूनि वक्ष्यमाणस्वरूपाणि वेदितव्यानि ॥ ३३१ ॥

तान्येव विवक्षुः प्रथमतो वापीनां नामान्याह—

नंदुत्तरनंदसुनंद–वद्धमाणनंदिसेणामोहा य ।
गोथुहसुदंसणा वि य, भद्द विसाला य कुमुदा य ॥ ३३२ ॥
पुंडरिगिणि विजया वे–जयंति अपराजिया जयंती य ।

व्याख्या—नन्दनवने मेरोरुत्तरपूर्वस्यां दिशि पञ्चाशद्योजनान्यवगाह्यात्रान्तरे य ईशानदेवलोकाधिपतेः संबन्धी प्रासादः, तस्य पूर्वस्यां दिशि वापी नन्दोत्तरा नाम, दक्षिणतो नन्दा, पश्चिमायां सुनन्दा, उत्तरतो वर्धमाना । दक्षिणपूर्वस्यां यः शक्रस्य संबन्धी प्रासादस्तस्य पूर्वतो वापी नन्दिषेणा, दक्षिणतोऽमोघा, पश्चिमायां गोस्तूपा, उत्तरतः सुदर्शना । तथा यो दक्षिणापरस्यां दिशि शक्रस्य संबन्धी प्रासादस्तस्य पूर्वेण वापी भद्रा, दक्षिणतो विशाला, अपरतः कुमुदा, उत्तरतः पुण्डरीकिणी । ( तथा ) यस्त्वपरोत्तरस्यां दिशि प्रासाद ईशानदेवलोकाधिपतेः संबन्धी तस्य पूर्वतो वापी विजया, दक्षिणतो वैजयन्ती, पश्चिमायामपराजिता, उत्तरतो जयन्ती ॥

सम्प्रति कूटानां नामान्याह—

कूडा नंदण[1] मंदरे[2], निसहे[3] हेमवय[4] रयए[5] य ॥ ३३४ ॥
रुयगे[6] सागरचित्ते[7], वइरो[8] चिय अंतरेसु अट्ठसु वि ।
कूडा बलकूडो पुण, मंदरपुव्वुत्तरदिसाए ॥ ३३५ ॥

व्याख्या—पूर्वदिग्जाविनः सिद्धायतनस्योत्तरत उत्तरपूर्वदिग्जाविनः प्रासादावतंसकस्य दक्षिणतोऽपान्तराले नन्दनकूटं नाम कूटं, तत्र मेघङ्करा नाम देवी, तस्या राजधानी मेरोरुत्तरपूर्वस्यामपरस्मिन् जम्बूद्वीपे द्वादशयोजनसहस्रेभ्यः परतः । तथा पूर्वदिग्जाविनः सिद्धायतनस्य दक्षिणतो दक्षिणपूर्वदिग्जाविनः प्रासादावतंसकस्योत्तरतोऽपान्तराले मन्दरकूटं नाम कूटं, तत्र मेघवती नाम देवी, तस्या राजधानी मेरोः पूर्वतोऽपरस्मिन् जम्बूद्वीपे । तथा दक्षिणदिग्जाविनः सिद्धायतनस्य पूर्वतो दक्षिणपूर्वदिग्जाविनः प्रासादावतंसकस्यापरतोऽपान्तराले निषधकूटं नाम कूटं, तत्र सुमेघा नाम देवी, तस्या राजधानी मेरोर्दक्षिणतोऽपरस्मिन् जम्बूद्वीपे । तथा दक्षिणदिग्जाविनः सिद्धायतनस्य पश्चिमायां दक्षिणापरदिग्जाविनः प्रासादावतंसकस्य पूर्वतो हेमवतं नाम कूटं, तत्र मेघमालिनी नाम देवी, तस्या राजधानी मेरोर्दक्षिणतोऽपरस्मिन् जम्बूद्वीपे । तथा पश्चिमदिग्जाविनः सिद्धायतनस्य दक्षिणतो दक्षिणापरदिग्जाविनः प्रासादावतंसकस्योत्तरतो रजतं नाम कूटं, तत्र सुवत्सा नाम देवी, तस्या राजधानी मेरोः पश्चि-

मायां दिश्यपरस्मिन् जम्बूद्वीपे। तथा पश्चिमदिग्भाविनः सिद्धायतनस्योत्तरत उत्तरापरदिग्भाविनः प्रासादस्य दक्षिणतो रुचककूटं नाम कूटं, तत्र वत्समित्रा नाम देवी, तस्या राजधानी मेरोरपरतोऽपरस्मिन् जम्बूद्वीपे। तथोत्तरदिग्भाविनः सिद्धायतनस्यापरत उत्तरापरदिग्भाविनः प्रासादावतंसकस्य पूर्वतः सागरचित्रं नाम कूटं, तत्र वलाहका नाम देवी, तस्या राजधानी मेरोरुत्तरतोऽपरस्मिन् जम्बूद्वीपे। तथोत्तरदिग्भाविनः सिद्धायतनस्य पूर्वतः पूर्वोत्तरदिग्भाविनः प्रासादावतंसकस्यापरतो वज्रकूटं नाम कूटं, तत्र वज्रसेना ( वारिषेणा ) नाम देवी, तस्या राजधानी मेरोरुत्तरतोऽपरस्मिन् जम्बूद्वीपे। एताश्चाष्टावपि देव्य ऊर्ध्वलोकवास्तव्या दिक्कुमारिका उच्यन्ते। यत्तु बलकूटं नाम कूटं तन्मन्दरपर्वतस्योत्तरपूर्वस्यां दिशि, तच्च प्रमाणतः प्राग्व्यावर्णितहरिकूटसमानं, एतच्च प्रागेव भावितं, तत्र बलो नाम देवः, तस्य राजधानी मेरोरुत्तरपूर्वतोऽपरस्मिन् जम्बूद्वीपे ॥ ३३५ ॥

सम्प्रत्यष्टसु कूटेषु देव्य उक्तास्ता एव प्रतिपादयति—

एएसु उड्ढलोए, वत्थव्वाउ दिसाकुमारीउ
अट्ठेव परिवसंती, अट्ठसु कूडेसु इणमाउ ॥ ३३६ ॥

व्याख्या—एतेष्वनन्तरोदितेषु अष्टसु कूटेषु ऊर्ध्वलोकवास्तव्या अष्टौ दिक्कुमारिकाः परिवसन्ति ताश्चेमाः एतन्नामानः ॥ ३३६ ॥

तन्नामान्येवाह—

मेघंकर मेघवई, सुमेह तह मेहमालिणि सुवच्छा ।
तत्तो य वच्छमित्ता, वलाहगा वारिसेणा य ॥ ३३७ ॥

व्याख्या—एतानि च नामानि प्रागेव प्रत्येकं भावितानि ॥ ३३७ ॥

सम्प्रति सौमनसवनवक्तव्यतामाह—

बासट्ठि सहस्साइं, पंचेव सयाइं नंदणवणाउ ।
उड्ढं गंतूण वणं, सोमनसं नंदणसरित्थं ॥ ३३८ ॥

व्याख्या—नन्दनवनादूर्ध्वं योजनानां द्वाषष्टिसहस्राणि पञ्च शतानि गत्वाऽत्रान्तरे सौमनसं नाम वनं, तच्च नन्दनवनसदृशं, यथा नन्दनवनं चक्रवालतया मेरुं परिक्षिप्य स्थितं, एकैकस्मिंश्च पार्श्वे पञ्च-पञ्चयोजनशतविष्कम्भं, तथा सौमनसवनमपीत्यर्थः ॥ ३३८ ॥

सम्प्रति सौमनसवने मेरोर्बहिर्विष्कम्भपरिमाणमाह—

बावत्तराइं दोन्नि य, सयाइं चउरो य जोयणसहस्सा ।
बाहिं गिरिविक्खंभो, एक्कारसभाग अट्ठेव ॥ ३३९ ॥

व्याख्या—चत्वारि योजनसहस्राणि द्वे शते द्विसप्तत्यधिके अष्टौ चैकादश भागा योजनस्य ४२७२,८/११

एतावान् सौमनसवने वहिर्विष्कम्भः । तथाहि—नन्दनवनादूर्ध्वं सार्धेषु द्वाषष्टियोजनसहस्रेषु अतिक्रान्तेषु सौमनसवनं, एकस्मिंश्च योजनेऽतिक्रान्ते सर्वत्र वृत्तविष्कम्भस्यापचयो योजनस्यैक एकादशभागः, ततोऽत्रापि त्रैराशिककर्मावतरणं, तच्चेदं त्रैराशिककर्म—यदि योजनमेकमारुह्य सर्वत्र वृत्तविष्कम्भस्यापचयो योजनस्यैकादशभागो लभ्यते तर्हि सार्धद्वाषष्टियोजनसहस्रातिक्रमे कियानपचयो भवति? उच्यते—पञ्च सहस्राणि षट् शतानि एकाशीत्यधिकानि ( योजनानां ) नव चैकादशभागा योजनस्य ५६८१ $\frac{9}{11}$ । एतन्नन्दनवनवहिर्विष्कम्भादपनीयते, नन्दनवने च वहिर्विष्कम्भो नवनवतिशतानि चतुःपञ्चाशदधिकानि ( योजनानां ) षट् चैकादशभागा योजनस्य ९९५४ $\frac{6}{11}$, तत एभ्यः पञ्चसु सहस्रेषु षट्सु शतेषु एकाशीत्यधिकेषु ( योजनानां ) नवसु चैकादशभागेषु योजनस्यातिक्रान्तेषु शेषमुद्धरति चत्वारि सहस्राणि द्वे शते द्विसप्तत्यधिके योजनानामष्टौ चैकादशभागा योजनस्य ४२७२ $\frac{8}{11}$ ॥ ३३९ ॥

साम्प्रतमन्तर्गिरेर्विष्कम्भपरिमाणमाह—

बावत्तराइं दोन्नि य, सयाइं तिन्नि य जोयणसहस्सा ।
अंतो गिरिविक्खंभो, एक्कारसभाग अट्ठेव ॥ ३४० ॥

व्याख्या—अन्तर्मध्ये गिरेर्विष्कम्भस्त्रीणि योजनसहस्राणि द्वे शते द्विसप्तत्यधिके अष्टौ चैकादशभागा योजनस्य ३२७२ $\frac{8}{11}$ । तथाहि—सौमनसवनस्यैकपार्श्वे विष्कम्भपरिमाणं पञ्च योजनशतानि, तत

उभयपार्श्वविष्कम्भपरिमाणमीलने योजनसहस्रं भवति, तस्माद्गुकात् चत्वारि सहस्राणि द्वे शते द्विसप्तत्यधिके योजनानामष्टौ चैकादशभागा योजनस्येत्येवंरूपादपनीयते, ततो लब्धानि शेषाणि त्रीणि सहस्राणि द्वे शते द्विसप्तत्यधिके योजनानामष्टौ चैकादशभागा योजनस्य ॥ ३४० ॥

सम्प्रति बहिर्विष्कम्भपरिधिपरिमाणमाह—

पंच सए एक्कारे, तेरस य हवंति जोयणसहस्सा ।
छच्चेकारसभागा, बाहिं गिरिपरिरओ होइ ॥ ३४१ ॥

व्याख्या—त्रयोदश सहस्राणि पञ्च शतानि एकादशाधिकानि योजनानां षट् चैकादशभागा योजनस्य १३५११ $\frac{6}{11}$ एतावान् सौमनसवने बहिर्गिरिपरिरयो भवति । तथाहि—बहिर्विष्कम्भश्चत्वारि सहस्राणि द्वे शते द्विसप्तत्यधिके योजनानामष्टौ चैकादशभागा योजनस्य ४२७२ $\frac{8}{11}$ । तत्र योजनराशिरेकादशभागकरणार्थमेकादशभिर्गुण्यते, गुणयित्वा चाष्टौ एकादशभागास्तत्र प्रक्षिप्यन्ते, जातानि सप्तचत्वारिंशत्सहस्राणि ४७००० । ततोऽस्य राशेर्वर्गो विधीयते, जातो द्विकः द्विकः शून्यं नवकः षट्शून्यानि २२०९०००००० । ततो दशभिर्गुणना, जातानि सप्त शून्यानि २२०९००००००० । ततो वर्गमूलमानीयते, लब्धमेकं लक्षमष्टाचत्वारिंशत्सहस्राणि षट् शतानि सप्तविंशत्यधिकानि १४८६२७,

शेषं त्यक्तं, ततो योजनानयनार्थमस्य राशेरेकादशभिर्भागो ह्रियते, लब्धानि त्रयोदश सहस्राणि पञ्च शतानि एकादशाधिकानि योजनानां षट् चैकादशभागा योजनस्य ॥ ३४१ ॥

सम्प्रत्यन्तःपरिधिपरिमाणमाह—

जोयणसहस्सदसगं, तिन्नेव सयाणि अउणपन्नाणि ।
अंतो गिरी परिरओ, एक्कारसभाग तिन्नेव ॥ ३४२ ॥

व्याख्या—दश योजनसहस्राणि त्रीणि शतानि एकोनपञ्चाशदधिकानि त्रयश्चैकादशभागा योजनस्य १०३४९ ३/११ । तथाहि—सौमनसेऽन्तर्गिरिविष्कम्भस्त्रीणि सहस्राणि द्वे शते द्विसप्तत्यधिके योजनानामष्टौ चैकादशभागा योजनस्य ३२७२ ८/११ । तत्र योजनराशिरेकादशभागकरणार्थमेकादशभिर्गुण्यते, गुणयित्वा च तत्राष्टौ एकादशभागाः प्रक्षिप्यन्ते, ततो जाताः सर्वसङ्ख्यया एकादशभागाः षट्त्रिंशत्सहस्राणि ३६०००। ततोऽस्य राशेर्वर्गो विधीयते, जात एको द्विकः नवकः षट्कः शून्यानि षट् १२९६००००००। ततो दश-भिर्गुणना, जातानि सप्त शून्यानि १२९६०००००००। ततो वर्गमूलानयने लब्धमेकं लक्षं त्रयोदश सहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि ११३८४२। तत एतेषां योजनानयनार्थमेकादशभि-र्भागो ह्रियते, लब्धानि योजनानां दश सहस्राणि त्रीणि शतानि एकोनपञ्चाशदधिकानि त्रयश्चैकादश-भागा योजनस्य १०३४९ ३/११ ॥ ३४२ ॥

सम्प्रति सौमनसवने विशेषवक्तव्यतामाह—

नंदणवणसरिसगमं, सोमणसं नवरि नत्थि कूडत्थ ।

व्याख्या—नन्दनवनसदृशगमं सौमनसं, किमुक्तं भवति ? यथा नन्दनवने चतसृषु दिक्षु प्रत्येकं मेरोः पञ्चाशत्पञ्चाशद्योजनान्यवगाह्यैकैकं सिद्धायतनं, विदिक्षु चैकैकः प्रासादः, एकैकस्य च प्रासादस्य चतसृषु दिक्षु प्रत्येकमेकैका वापी, यच्च सिद्धायतनप्रासादवापीपरिमाणं, यथा चोत्तरपूर्वापरोत्तरदिग्भाविनौ प्रासादावीशानदेवलोकाधिपतेर्दक्षिणपूर्वापरदक्षिणदिग्भाविनौ तु प्रासादौ शक्रस्य, तदेतत्सर्वमन्यूनातिरिक्तमत्रापि वक्तव्यं, नवरमत्र सौमनसवने कूटा न सन्ति । पुष्करिण्योऽपि भिन्ननामानः, ततस्तासां नामानि प्रतिपादयति—

पुक्खरिणीउ सुमणा, सोमणसा सोमणंसा य ॥ ३४३ ॥
वावी मणोरमाऽवि य, उत्तरकुरु तह य होइ देवकुरू ।
तत्तो य वारिसेणा, सरस्सई तह विसाला य ॥ ३४४ ॥
वावी य माघभद्दा,ऽभयसेणा रोहिणी य बोधव्वा ।
भद्दुत्तरा य भद्दा, सुभद्द भद्दावई चेव ॥ ३४५ ॥

व्याख्या—सौमनसवने मेरोरुत्तरपूर्वस्यां दिशि य ईशानदेवलोकाधिपतेः संबन्धी प्रासादस्तस्य पूर्वतो वापी सुमनाः, दक्षिणतः सौमनसा, पश्चिमायां सौमनांसा, उत्तरतो मनोरमा । दक्षिणपूर्वस्यां यः शक्रस्य संबन्धी प्रासादस्तस्य पूर्वतो वापी उत्तरकुरुनामा, दक्षिणतो देवकुरुः, अपरतो वारिषेणा, उत्तरतः सरस्वती । तथा यो दक्षिणापरस्यां दिशि शक्रस्य संबन्धी प्रासादस्तस्य पूर्वतो वापी विशाला, दक्षिणतो माघभद्रा, पश्चिमायामभयसेना, उत्तरतो रोहिणी । यस्त्वपरोत्तरस्यां दिशि प्रासाद ईशानदेवलोकाधिपतेः संबन्धी तस्य पूर्वतो वापी भद्रोत्तरा, दक्षिणतो भद्रा, अपरतः सुभद्रा, उत्तरतो भद्रावती ॥ ३४३–३४४–३४५ ॥

सम्प्रति पाण्डुकवनवक्तव्यतामाह—

सोमणसाउ तीसं, छच्च सहस्से विलग्गिऊण गिरिं ।
विमलजलकुंडगहणं, हवइ वणं पंडगं सिहरे ॥ ३४६ ॥

व्याख्या—सौमनसवनादूर्ध्वं षट्त्रिंशत्सहस्राणि गिरिं मेरुगिरिं विलग्योत्प्लुत्यात्रान्तरे शिखररूपे उपरितले पण्डकं नाम वनं भवति, तच्च कथंभूतमित्याह—'विमलजलकुंडगहणं' विमलजलसंपूर्णानि यानि कुण्डानि तैर्गहनं, किमुक्तं भवति ? स्थाने स्थाने विमलजलसंपूर्णानि तत्र कुण्डानि सन्ति ॥ ३४६ ॥

सम्प्रति तत्रैव पृथुत्वपरिमाणमाह—

**चत्तारि जोयणसया, चउणउया चक्कवालउ रुंदा ।**

व्याख्या—चत्वारि योजनशतानि चतुर्नवत्यधिकानि ४९४ चक्रवालतो रुन्दं विस्तीर्णं पण्डकवनं, किमुक्तं भवति ? चूलिकाया बहिरेकैकस्मिन् पार्श्वे एतावत्प्रमाणं पण्डकवनं, तथाहि—सौमनसात् षट्त्रिंशद्योजनसहस्रेषूर्ध्वमतिक्रान्तेषु पण्डकवनं, मेरौ च मेखलाद्याविवक्षया सर्वत्र प्रतियोजनगतैकादशभागपरिहानिः ततोऽत्रापि त्रैराशिककर्मावतारः, तच्चैवं त्रैराशिककर्म—यदि योजनमेकमारुह्योपरि क्षेत्रवृत्तताया अपचय एक एकादशभागो योजनस्य, ततः षट्त्रिंशद्योजनसहस्रारोहणे कोऽपचयः प्राप्यते ? लब्धानि द्वात्रिंशच्छतानि द्विसप्तत्यधिकानि योजनानां ३२७२ अष्टौ चैकादशभागा योजनस्य ८/११ । एतत्सौमनसवनसत्काद्बहिर्विष्कम्भाच्चत्वारि सहस्राणि द्वे शते द्विसप्तत्यधिके योजनानामष्टौ चैकादशभागा योजनस्य ४२७२ ८/११ इत्येवंपरिमाणाच्छोध्यते, शोधिते च सति तस्मिन् जातं शेषं योजनसहस्रम्, एतावानुपरितले शिरोभागे मन्दरस्य विष्कम्भः । तत्र च बहुमध्यभागे चूला, सा च मूले द्वादशयोजनप्रमाणविष्कम्भा, तस्याः समंततः परिक्षेपि पण्डकवनं, ततः सहस्रात् द्वादशयोजनापगमे शेषाण्यष्टाशीत्यधिकानि नव शतानि तिष्ठन्ति, तेषामर्धे भवन्ति चत्वारि शतानि चतुर्नवत्यधिकानि ॥ ४९४ ॥

सम्प्रति परिधिपरिमाणमाह—

इगतीस जोयणसया, बासट्ठी परिरउ तस्स ॥ ३४७ ॥

व्याख्या—तस्य पण्डकवनस्य एकत्रिंशद्योजनशतानि द्वाषष्ट्यधिकानि परिरयः ३१६२ । एतच्च परिरयपरिमाणं प्रागुक्तकरणवशात् स्वयमेवानेतव्यम् ॥ ३४७ ॥

सम्प्रति चूलावक्तव्यतामाह—

दुगुणं जोयणवीसं, समूसिया विमलवेरुलियरूवा ।
मेरुगिरिस्सुवरितले, जिणभवणविभूसिया चूला ॥ ३४८ ॥

व्याख्या—मेरुगिरेरुपरितले विमलवैडूर्यमयी विमलवैडूर्यरत्नमयी चूला, सा च द्विगुणां योजनविंशतिमुच्छ्रिता चत्वारिंशद्योजनानि समुच्छ्रितेत्यर्थः । द्विगुणां योजनविंशतिमित्यत्र "कालाध्वनोर्व्याप्तौ" ( सि० हे० २-२-४२ ) इति द्वितीया । पुनः कथंभूतेत्यत आह-जिनभवनविभूषिता, तथाहि—तस्याश्चूलिकाया उपरि बहुमध्यदेशभागे क्रोशायाममर्धक्रोशविस्तीर्णं देशोनक्रोशमुच्चमनेकमणिमयस्तम्भशतसंनिविष्टमेकं जिनभवनमस्ति । तस्य च जिनभवनस्य पूर्वोत्तरदक्षिणरूपासु तिसृषु दिक्षु प्रत्येकमेकैकं द्वारं द्वारप्रमाणं जिनप्रतिमास्वरूपं च वैताढ्यगतसिद्धायतनकूटवद्वेदितव्यम् ॥ ३४८ ॥

अधुना चूलाया विष्कम्भपरिरयावाह—

मूले मज्झे उवरिं, बारस अट्ठ चउरो य विक्खंभो ।
सत्तत्तीसा पणवीस, बारसा अहिय परिही से ॥ ३४९ ॥

व्याख्या—'से' तस्याश्चूलिकाया मूले द्वादश योजनानि विष्कम्भः, मध्येऽष्टौ, उपरि चत्वारि । तथा मूले सातिरेकाणि सप्तत्रिंशद्योजनानि परिरयः, मध्ये सातिरेकाणि पञ्चविंशतियोजनानि, उपरि सातिरेकाणि द्वादशयोजनानि ॥ ३४९ ॥

सम्प्रति चूलायामधोमुखगमने विष्कम्भपरिज्ञानाय करणमाह—

जहिच्छसि विक्खंभं, चूलियसिहराहि उवइत्ताणं ।
तं पंचहिं पविभत्तं, चउहिं जुयं जाण विक्खंभं ॥ ३५० ॥

व्याख्या—चूलिकायाः शिखरात्सर्वोपरितनाद्भागादवपत्य यत्र योजनादावतिक्रान्ते विष्कम्भं ज्ञातुमिच्छसि तत् अतिक्रान्तं योजनादिकं पञ्चभिः प्रविभज्यते, प्रविभक्ते च सति यल्लभ्यते तच्चतुर्भिः सहितं तत्र विष्कम्भं जानीहि । तत्र किलोपरितलाद्विंशतियोजनान्यवतीर्णः, ततो विंशतिर्ध्रियते, तस्याः पञ्चभिर्भागे हृते लब्धाश्चत्वारः, ते चतुर्भिः सहिता अष्टौ, एतावानुपरितलाद्विंशतियोजनातिक्रमे विष्कम्भः। एवमन्यत्रापि भावनीयम् ॥ ३५० ॥

यदा तूर्ध्वमुखगत्या विष्कम्भो ज्ञातुमिष्यते तदेयं करणगाथा द्रष्टव्या—

जत्थिच्छसि विक्खंभं, चूलियमूलाउ उप्पइत्ताणं ।
तं पणविभत्तमूलिल्ला, सोहियं जाण विक्खंभं ॥ ३५१ ॥

व्याख्या—अस्या अयमर्थः—चूलिकाया मूलादूर्ध्वमुत्प्लुत्य यत्र योजनादौ विष्कम्भं ज्ञातुमिच्छसि तत् अतिक्रान्तं योजनादिकं पञ्चभिर्विभज्यते, विभक्ते च सति यल्लभ्यते तन्मूलभवाद्विस्तराच्छोध्यते, शोधिते च सति यदवतिष्ठते तावत्प्रमाणं तत्र विष्कम्भं जानीहि । तत्र मूलात् किल विंशतियोजनान्यूर्ध्वमुत्प्लुत्य गतः, ततो विंशतिर्ध्रियते, तस्याः पञ्चभिर्भागे हृते लब्धानि चत्वारि योजनानि, तानि मूलविष्कम्भात् द्वादशयोजनप्रमाणादपनीयन्ते, स्थितानि शेषाण्यष्टौ, एतावान्मूलादूर्ध्वं विंशतियोजनातिक्रमे विष्कम्भः । एवमन्यत्रापि भावनीयम् ॥ ३५१ ॥

सम्प्रति पण्डकवने सिद्धायतनादिवक्तव्यतामतिदेशेनाह—

सिद्धाययणा वावी, पासाया चूलियाइ अट्ठदिसिं ।
जह सोमणसे नवरं, इमाणि पोक्खरिणिनामाइं ॥ ३५२ ॥

व्याख्या—यथा सौमनसवने चतसृषु दिक्षु प्रत्येकं मन्दरात्पञ्चाशतं योजनान्यवगाह्यात्रान्तरे एकैकं सिद्धायतनं, चतसृषु च विदिक्षु प्रत्येकमेकैकः प्रासादावतंसकः, एकैकस्य च प्रासादावतंसकस्य चतसृषु

दिक्षु प्रत्येकमेकैका वापी, तथा पण्डकवनेऽपि चूलिकाया अष्टासु दिक्षु मध्ये चतसृषु पूर्वादिषु दिक्षु प्रत्येकं चूलिकायाः पञ्चाशत्पञ्चाशत्सङ्ख्यानि योजनान्यवगाह्यात्रान्तरे एकैकं सिद्धायतनं, चतसृषु च विदिक्षु प्रत्येकमेकैकः प्रासादावतंसकः, एकैकस्य प्रासादावतंसकस्य चतसृषु पूर्वादिदिक्षु प्रत्येकमेकैका वापी द्रष्टव्या । यच्च सौमनसे सिद्धायतनप्रासादवापीनां परिमाणमुच्चत्वादिगतं, यथा चोत्तरपूर्वापरोत्तरदिग्भाविनौ प्रासादावतंसकावीशानदेवलोकाधिपतेर्दक्षिणपूर्वापरदक्षिणदिग्भाविनौ तु प्रासादावतंसकौ शक्रस्य, तदेतत्सर्वमन्यूनातिरिक्तमत्रापि वेदितव्यम् । नवरं पुष्करिणीनामिमानि वक्ष्यमाण-स्वरूपाणि नामानि ॥ ३५२ ॥

तान्येवाह—

पुंडा पुंडप्पभवा, सुरत्त तह रत्तगावई चेव ।<br>
खीररसा इक्खुरसा, अमयरसा वारुणी चेव ॥ ३५३ ॥<br>
संखुत्तरा य संखा, संखावत्ता बलाहगा तह य ।<br>
पुप्फोत्तर पुप्फवई, सुपुप्फ तह पुप्फमालिणिया ॥ ३५४ ॥

व्याख्या—पण्डकवने चूलिकाया उत्तरपूर्वस्यां दिशि य ईशानदेवलोकाधिपतेः संबन्धी प्रासादावतंसकस्तस्य पूर्वतो वापी पुण्ड्रा पुण्ड्राभिधाना, दक्षिणतः पुण्ड्रप्रभवा, पश्चिमायां सुरक्ता, उत्तरतो रक्तावती।

चूलिकाया दक्षिणपूर्वस्यां दिशि यः प्रासादावतंसकः शक्रस्य संबन्धी तस्य पूर्वतो वापी क्षीररसा, दक्षिणत इक्षुरसा, पश्चिमायाममृतरसा, उत्तरतो वारुणी । चूलिकाया दक्षिणापरस्यां दिशि यः प्रासादावतंसकः शक्रस्य संबन्धी तस्य पूर्वतो वापी शङ्खोत्तरा, दक्षिणतः शङ्खा, पश्चिमायां शङ्खावर्ता, उत्तरतो वलाहका । यस्तु चूलिकाया अपरोत्तरस्यां दिशि प्रासादावतंसक ईशानदेवलोकाधिपतेः संबन्धी तस्य पूर्वतो वापी पुष्पोत्तरा, दक्षिणतः पुष्पवती, पश्चिमायां सुपुष्पा, उत्तरतः पुष्पमालिनी ॥ ३५३–३५४ ॥

सम्प्रति पण्डुकम्बलाशिलादिवक्तव्यतामाह—

पंडगवणम्मि चउरो, सिलाउ चउसु वि दिसासु चूलाए ।
चउजोयणूसियाउ, सव्वज्जुणकंचणमयाउ ॥ ३५५ ॥
पंचसयायामाउ, मज्झे दीहत्तणद्धरुंदाउ ।
चंदद्धसंठियाउ, कुमुउयरहारगोराउ ॥ ३५६ ॥

व्याख्या—पण्डकवने चूलिकायाश्चतसृषु पूर्वादिषु दिक्षु प्रत्येकमेकैकशिलाभावेन चतस्रोऽभिषेकशिलाः, ताश्च प्रत्येकं चतुर्योजनोच्छ्रिताः चतुर्योजनप्रमाणबाहल्याः, सर्वार्जुनकाञ्चनमय्यः, सर्वश्वेतसुवर्णमय्यः, पञ्चशतायामाः पञ्चयोजनशतप्रमाणायामाः, मध्ये दीर्घत्वार्धरुन्दा मध्यभागेऽर्धतृतीययोजनशतप्रमाणविष्कम्भाः, चन्द्रार्धसंस्थिता अर्धचन्द्रसंस्थानसंस्थिताः, कुमुदोदरहारगौराः कुमुदगर्भमुक्ताफलहारव-

जौर्यः। तत्र पूर्वापरदिग्भाविन्यौ शिले दक्षिणोत्तरायते पूर्वापरविस्तृते, दक्षिणोत्तरदिग्भाविन्यौ तु पूर्वापरायते दक्षिणोत्तरविस्तृते ॥ ३५५-३५६ ॥

सम्प्रति शिलानां नामान्याह—

एगत्थ पंडुकंबल-सिल त्ति अइपंडुकंबला बीया ।
रत्ताइरत्तकंबल-सिलाण जुयलं च रम्मयलं ॥ ३५७ ॥

व्याख्या—अत्रैतासु चतसृषु शिलासु मध्ये एका चूलिकायाः पूर्वदिग्भाविशिला पाण्डुकम्बला नाम, द्वितीया दक्षिणदिग्भाविनी अतिपाण्डुकम्बला, रक्तातिरक्तकम्बलशिलयोर्युगलमपरं रम्यतलं, किमुक्तं भवति ? चूलिकायाः पश्चिमायां दिशि रक्तकम्बला नाम शिला, उत्तरतोऽतिरक्तकम्बला। एताश्च समस्ता अपि शिला रम्यतलाः, अत एव तासु बहवो देवा महर्द्धिका वानमन्तरा वैमानिका अन्ये वा समागत्य समागत्य यथासुखमभिरमन्ते ॥ ३५७ ॥

तासां च शिलानां मध्यदेशभागे तीर्थकरयोग्यान्यभिषेकसिंहासनानि सन्ति, ततस्तद्वक्तव्यतामाह—

पुव्वावरासु दो दो, सिलासु सिंहासणाइ रम्माइं ।
जम्माइ उत्तराए, सिलाइ इक्किक्कयं भणियं ॥ ३५८ ॥

व्याख्या—पूर्वापरयोः शिलयोश्चूलिकायाः पूर्वदिग्भाविन्यामपरदिग्भाविन्यां च शिलायां प्रत्येकं

द्वे द्वे सिंहासने, याम्यायां दक्षिणदिग्भाविन्यामुत्तरस्यामुत्तरदिग्भाविन्यां च शिलायां प्रत्येकमेकैकं तीर्थकराभिषेकसिंहासनं भणितं तीर्थकरगणधरैः । तानि च सिंहासनानि सर्वरत्नमयानि, सर्वाण्यपि च प्रत्येकं पञ्चधनुःशतायामविष्कम्भानि अर्धतृतीयधनुःशतबाहल्यानि ॥ ३५८ ॥

सीयासीओयाणं, उभओकूलुप्पवा जिणवरिंदा ।
पंडुसिलरत्तकंबल–सिलासु सिंहासणवरेसु ॥ ३५९ ॥
अइपंडुकंबलाए, अइरत्ताए य बालभावम्मि ।
भरहेरवयजिणिंदा, अभिसिच्चंते सुरिंदेहिं ॥ ३६० ॥

व्याख्या—शीताशीतोदयोरुभयकूलोद्भवा जिनवरेन्द्रा बालभावे यथासङ्ख्यं पाण्डुकम्बलशिलारक्तकम्बलशिलयोः सिंहासनेषु सुरेन्द्रैरभिषिच्यन्ते । अतिपाण्डुकम्बलशिलायामतिरक्तकम्बलशिलायां च यथासङ्ख्यं भरतैरावतजिनेन्द्राः । इयमत्र भावना—चूलिकायाः पूर्वदिग्भाविन्यां पाण्डुकम्बलशिलायां द्वे तीर्थकराभिषेकसिंहासने, तद्यथा—एकमुत्तरत एकं दक्षिणतः । तत्र ये शीताया महानद्या उत्तरतः कच्छादिषु विजयेषु तीर्थकरा उपजायन्ते ते औत्तराहे सिंहासने सुरेन्द्रैरभिषिच्यन्ते, ये पुनः शीताया महानद्या दक्षिणतो मङ्गलावतीप्रमुखेषु विजयेषूत्पद्यन्ते ते दाक्षिणात्ये सिंहासनेऽभिषिच्यन्ते । तथा चूलिकायाः पश्चिमदिग्भाविन्यां रक्तकम्बलशिलायां द्वे सिंहासने, तद्यथा—एकमुत्तरत एकं दक्षिणतः ।

तत्र ये शीतोदाया महानद्या दक्षिणतः पक्ष्मादिषु विजयेषु तीर्थकरा उत्पद्यन्ते ते दाक्षिणात्ये सिंहासनेऽभिषिच्यन्ते, ये तु शीतोदाया महानद्या उत्तरतो गन्धिलावतीप्रमुखेषु विजयेषु जायन्ते ते औत्तराहे सिंहासनेऽभिषिच्यन्ते। तथा चूलिकादक्षिणदिग्भाविन्यां हि अतिपाण्डुकम्बलाभिधानायां शिलायां ये भरतक्षेत्रसमुद्भवास्तीर्थकरास्तेऽभिषिच्यन्ते। उत्तरदिग्भाविन्यां त्वतिरक्तकम्बलशिलायामैरावतक्षेत्रसमुद्भवा इति ॥ ३५९-३६० ॥

सम्प्रति विदेहवक्तव्यतामाह—

पुवविदेहं मेरुस्स, पुव्वउं सीयानइं परिछिन्नं।
अवरेण वरविदेहं, सीउयाएण परिछिन्नं ॥ ३६१ ॥

व्याख्या—इह पूर्वविदेहमित्यादौ नपुंसकता प्राकृतत्वात्, यदाह पाणिनिः—"प्राकृतलक्षणे लिङ्गं व्यभिचार्यपि"। ततोऽयमर्थः—द्विविधा विदेहाः, तद्यथा—पूर्वविदेहा अपरविदेहाश्च। तत्र ये मेरोः पूर्वतो विदेहास्ते पूर्वविदेहाः, ते च शीतया महानद्या परिछिन्ना द्विधा विभक्ताः, तद्यथा—एको भाग उत्तरत एको दक्षिणतः। ये तु मेरोरपरस्यां दिशि तेऽपरविदेहाः, तेऽपि शीतोदया महानद्या परिछिन्नाः, तद्यथा—एको भागो दक्षिणत एक उत्तरतः ॥ ३६१ ॥

सम्प्रति सामान्यतो विजयादीन् प्रतिपादयति—

सीयासीओयाणं, वासहराणं च मज्झयारम्मि ।
विजयावक्खारगिरी, अंतरनइवणमुहा चउरो ॥ ३६२ ॥

व्याख्या—शीताशीतोदयोर्वर्षधरयोश्च निषधनीलवतोश्च मध्यकारे कारशब्दोऽत्र स्वार्थवाची प्रयुक्तो मध्ये इत्यर्थः, विजया द्वात्रिंशत्सङ्ख्याः, वक्षस्कारगिरयः षोडश, अन्तरनद्यो द्वादश, वनमुखानि समुद्रप्रवेशे शीताशीतोदयोरुभयकूले प्रत्यासन्नानि चत्वारि ॥ ३६२ ॥

सम्प्रत्येतेषां विजयादीनां दैर्घ्यानयनाय करणमाह—

वइदेहा विक्खंभा, नइमाणं पंच जोयणसयाइं ।
सोहित्ता तस्सद्धं, आयामो तेसिमो होइ ॥ ३६३ ॥

व्याख्या—इह यद्यपि शीतायाः शीतोदाया वा समुद्रप्रवेश एव पञ्चयोजनशतप्रमाणो विष्कम्भः, अन्यत्र तु हीनो हीनतरः, तथापि कच्छादिविजयसमीपे उभयकूलवर्तिनौ रमणप्रदेशावधिकृत्य पञ्चयोजनशतप्रमाणो विष्कम्भः प्राप्यते, तत एतस्य करणस्यावकाशः। वैदेहाद्विदेहसत्कात् विष्कम्भात् शीतायाः शीतोदाया वा नद्या मानं पञ्च योजनशतानि शोधयित्वा यच्छेषमवतिष्ठते तस्यार्धं तेषां विजयादीनामायामो भवति, स चायं वक्ष्यमाणस्वरूपः ॥ ३६३ ॥

तमेवाह—

पंच सए बाणउए, सोलससहस्स दो कलाउ य ।
विजयावक्खाराणं, अंतरनइवणमुहाणं च ॥ ३६४ ॥

व्याख्या—षोडश सहस्राणि पञ्च शतानि द्विनवत्यधिकानि योजनानां द्वे च कले योजनस्यैकोनविंशतिभागरूपे १६५९२ २/१९ एतावान् विजयानां वक्षस्कारगिरीणामन्तरनदीनां वनमुखानां चायामः, तथाहि—महाविदेहविष्कम्भस्त्रयस्त्रिंशत्सहस्राणि षट् शतानि चतुरशीत्यधिकानि योजनानां चत्वारश्चैकोनविंशतिभागा योजनस्य ३३६८४ ४/१९ । एतेभ्यो नदीगतानि पञ्च योजनशतान्यपनीयन्ते, तेषु चापगतेषु जातानि शेषाणि त्रयस्त्रिंशत्सहस्राणि शतमेकं चतुरशीत्यधिकं योजनानां चत्वारश्चैकोनविंशतिभागा योजनस्य ३३१८४ ४/१९ । तेषामर्धं क्रियते, लब्धानि षोडश सहस्राणि पञ्च शतानि द्विनवत्यधिकानि योजनानां द्वे च कले १६५९२ २/१९ ॥ ३६४ ॥

सम्प्रति विजयानां विष्कम्भानयनाय करणमाह—

चउणउए पंच सए, चउसट्ठि सहस्स दीववित्थारो ।
सोहिय सोलसभइए, विजयाणं होइ विक्खंभो ॥ ३६५ ॥

व्याख्या—इह महाविदेहेषु देवकुरूत्तरकुरुमेरुभद्रशालवनवक्षस्कारपर्वतान्तरनदीवनमुखव्यतिरेकेणान्यत्र सर्वत्रापि विजयाः, ते च पूर्वापरविस्तृतास्तुल्यविस्तारप्रमाणाः, तत एतस्याधिकृतस्य करणस्यावकाशः, केवलं शीताशीतोदयोरुभयकूलप्रत्यासत्तौ वनमुखानामुत्कृष्टं विस्तारप्रमाणं, तत्रैव च परिपूर्णो विदेहविष्कम्भः प्राप्यते इति शीताशीतोदोभयकूलप्रत्यासत्ताविदं करणमवसेयम् । तत्रैकस्मिन् दक्षिणभागे उत्तरभागे चाष्टौ वक्षस्कारगिरयः एकैकस्य च पृथुत्वं पञ्च योजनशतानि, ततः सर्वेषां पृथुत्वमीलने जातानि चत्वारि योजनसहस्राणि । अन्तरनद्यः षट्, एकैकस्याश्चान्तरालनद्या विष्कम्भः पञ्चविंशं योजनशतं, ततः सर्वान्तरनदीपृथुत्वमीलने जातानि सप्त शतानि पञ्चाशदधिकानि ७५० । द्वे च वनमुखे, एकैकस्य च वनमुखस्य पृथुत्वमेकोनत्रिंशच्छतानि द्वाविंशत्यधिकानि २९२२, उभयपृथुत्वमीलने जातानि अष्टापञ्चाशच्छतानि चतुश्चत्वारिंशदधिकानि ५८४४ । मेरुपृथुत्वं दश सहस्राणि १०००० । पूर्वापरभद्रशालवनयोरायामश्चतुश्चत्वारिंशत्सहस्राणि ४४००० । सर्वमीलने जातानि चतुःषष्टिसहस्राणि पञ्च शतानि चतुर्नवत्यधिकानि ६४५९४ । एतत् द्वीपविस्ताराज्जम्बूद्वीपविष्कम्भात् लक्षप्रमाणाच्छोध्यते, शोधिते च सति जातं शेषं पञ्चत्रिंशत्सहस्राणि चत्वारि शतानि षडुत्तराणि ३५४०६ । एकस्मिंश्च दक्षिणे उत्तरे वा भागे विजयाः षोडश, ततः षोडशभिर्भागे हृते लब्धानि द्वाविंशतिशतानि किञ्चिदूनत्रयोदशकानि २२१३, एतावानेकैकस्य विजयस्य विष्कम्भः ॥ ३६५ ॥

सम्प्रति वक्षस्कारगिरिविष्कम्भप्रतिपादनाय करणमाह—

छन्नवइ सहस्साइं, जंबूद्दीवा विसोहइत्ताणं ।
सेसे अट्ठहिं भइए, लद्धो वक्खारविक्खंभो ॥ ३६६ ॥

व्याख्या—महाविदेहेषु विजयान्तरनदीवनमुखमेर्वादिव्यतिरेकेणान्यत्र सर्वत्रापि वक्षस्कारगिरयः, ते पूर्वापरविस्तृताः सर्वेऽपि सर्वत्र तुल्यविस्तारप्रमाणाः, तत एतस्य करणस्यावकाशः, तत्र विजयषोडशक-पृथुत्वं पञ्चत्रिंशत्सहस्राणि चत्वारि शतानि षडुत्तराणि ३५४०६, अन्तर्नदीषट्कपृथुत्वं सप्त शतानि पञ्चा-शदधिकानि ७५०, मेरुविष्कम्भपूर्वापरभद्रशालवनायामपरिमाणं चतुःपञ्चाशत्सहस्राणि ५४०००, वनमुखद्वयपृथुत्वमष्टापञ्चाशच्छतानि चतुश्चत्वारिंशदधिकानि ५८४४, सर्वमीलने जातानि षण्णवतिसह-स्राणि ९६०००, एतानि जम्बूद्वीपविष्कम्भपरिमाणाच्छोध्यन्ते, शोधितेषु च तेषु जातानि शेषाणि चत्वारि सहस्राणि, एकस्मिंश्च दक्षिणे उत्तरे वा भागेऽष्टौ वक्षस्कारगिरयः, ततोऽष्टभिर्भागो ह्रियते, हृते च भागे लब्धो वक्षस्कारगिरीणां प्रत्येकं विष्कम्भो विष्कम्भपरिमाणं पञ्च योजनशतानि ५०० ॥ ३६६ ॥

साम्प्रतमन्तरनदीनां विष्कम्भपरिज्ञानाय करणमाह—

नवनउइ सहस्साइं, अड्ढाइज्जे सए य सोहित्ता ।
सेसं छक्कविहत्तं, लद्धो सलिलाण विक्खंभो ॥ ३६७ ॥

व्याख्या—अस्यापि करणस्यावकाशः पूर्ववद्भावनीयः, तत्र मेरुविष्कम्भपूर्वापरभद्रशालवनायामपरिमाणं चतुःपञ्चाशत्सहस्राणि ५४०००, विजयषोडशकपृथुत्वं पञ्चत्रिंशत्सहस्राणि चतुःशतानि षडुत्तराणि ३५४०६, वक्षस्कारपर्वताष्टकपृथुत्वं चत्वारि सहस्राणि ४०००, वनमुखद्वयपृथुत्वमष्टपञ्चाशच्छतानि चतुश्चत्वारिंशदधिकानि ५८४४, सर्वमीलने जातानि नवनवतिसहस्राणि द्वे शते पञ्चाशदधिके ९९२५०, एतज्जम्बूद्वीपविष्कम्भपरिमाणाद्योजनलक्षरूपाच्छोध्यते, शोधयित्वा यच्छेषमवतिष्ठते सप्त शतानि पञ्चाशदधिकानि ७५० तत् षड्भिर्विभज्यते, एकस्मिन् दक्षिणे उत्तरे वा भागेऽन्तरनद्यः षट् सन्तीति, ततः षड्भिर्विभक्ते लब्धः सलिलानामन्तरनदीनां प्रत्येकं विष्कम्भः पञ्चविंशं योजनशतम् ॥ ३६७ ॥

सम्प्रति शीताशीतोदयोः प्रत्यासत्तौ वनमुखविष्कम्भपरिमाणप्रतिपादनार्थमाह—

चउणवइ सहस्साइं, छप्पन्न सयं च सोहु दीवाउ ।
दोहिं विभत्ते सेसं, सीयासीउयवणमाणं ॥ ३६८ ॥

व्याख्या—अस्यापि करणस्यावकाशः प्रागिव परिभावनीयः, तत्र विजयषोडशकपृथुत्वं पञ्चत्रिंशत्सहस्राणि चत्वारि शतानि षडुत्तराणि ३५४०६, वक्षस्कारपर्वताष्टकपृथुत्वं चत्वारि सहस्राणि ४०००, अन्तरनदीषट्कविष्कम्भः सप्त शतानि पञ्चाशदधिकानि ७५०, पूर्वापरभद्रशालवनायाममेरुपृथुत्वपरिमाणं चतुःपञ्चाशत्सहस्राणि ५४०००, सर्वमीलने जातानि चतुर्नवतिः सहस्राणि शतमेकं षट्पञ्चाशद-

धिकं ९४१५६, एतत् द्वीपाज्जम्बूद्वीपविष्कम्भपरिमाणाल्लक्षसहस्ररूपाच्छोध्यते, शोधयित्वा च यच्छेषमवतिष्ठतेऽष्टापञ्चाशच्छतानि चतुश्चत्वारिंशदधिकानि ५८४४, तस्य द्वाभ्यां भागो ह्रियते, शीताशीतोदयोरेकस्मिन् दक्षिणे उत्तरे वा भागे द्वे एव वनमुखे इति कृत्वा, हृते च भागे लब्धान्येकोनत्रिंशच्छतानि द्वाविंशत्यधिकानि २९२२, एतावच्छीताशीतोदयोः पार्श्वे वनमुखानां प्रत्येकं पृथुत्वपरिमाणमिति ॥ ३६८ ॥

सम्प्रति मेरुपृथुत्वपूर्वापरभद्रशालवनायामप्रतिपादनार्थमाह—

बायालीस सहस्से, जंबूद्दीवा विसोहइत्ता णं ।
सेसं एगविहत्तं, मंदरवणमाणयं जाण ॥ ३६९ ॥

व्याख्या—अस्यापि करणस्य प्रवृत्तिः पूर्ववद्भावनीया, तत्र विजयषोडशकपृथुत्वं पञ्चत्रिंशत्सहस्राणि चत्वारि शतानि षडुत्तराणि ३५४०६, वक्षस्कारगिर्यष्टकपृथुत्वं चत्वारि सहस्राणि ४०००, वनमुखद्वयपृथुत्वमष्टापञ्चाशच्छतानि चतुश्चत्वारिंशदधिकानि ५८४४, अन्तरनदीषट्कविष्कम्भः सप्त शतानि पञ्चाशदधिकानि ७५०, सर्वमीलने जातानि षट्चत्वारिंशत्सहस्राणि ४६०००, एतज्जम्बूद्वीपविष्कम्भपरिमाणाल्लक्षरूपाच्छोध्यते, शोधयित्वा च यच्छेषमवतिष्ठते चतुःपञ्चाशत्सहस्राणि ५४००० तदेकेन विभज्यते-एकेन च विभक्तं तदेव भवतीति लब्धानि चतुःपञ्चाशत्सहस्राणि, एतन्मन्दरपृथुत्वपूर्वापरभद्रशालवनायामपरिमाणं जानीहि ॥ ३६९ ॥

सम्प्रति करणवशलब्धानि विजयादिविष्कम्भपरिमाणान्युपदर्शयति—

विजयाणं विक्खंभो, बावीस सयाइं तेरसहियाइं ।
पंच सए वक्खारा, पणवीससयं च सलिलाउ ॥ ३७० ॥

व्याख्या—विजयानां सर्वेषामपि प्रत्येकं विष्कम्भो विष्कम्भपरिमाणं द्वाविंशतिशतानि त्रयोदशसहितानि किञ्चिदूनत्रयोदशाधिकानि । वक्षस्काराणां वक्षस्कारगिरीणां पञ्च शतानि, पञ्चविंशं शतमन्तरनदीनाम् । 'पंच सए वक्खारा' इत्यत्राभिन्ननिर्देशः अभेदात् प्रथमान्तनिर्देशः, परिमाणपरिमाणवतोरभेदोपचारात् ॥ ३७० ॥

सम्प्रति वक्षस्कारगिरिवक्तव्यतामाह—

जत्तो वासहरगिरी, तत्तो जोयणसयं समोगाढा ।
चत्तारि जोयणसए, उव्विद्धा सव्वरयणमया ॥ ३७१ ॥
जत्तो पुण सलिलाउ, तत्तो पंचसयगाउउंगाढा ।
पंचेव जोयणसए, उव्विद्धा आसखंधनिभा ॥ ३७२ ॥

व्याख्या—सर्वेऽपि वक्षस्कारगिरयः सर्वरत्नमयाः सर्वरत्नबहुलाः, तथा यतो यस्यां दिशि वर्षधरगिरिर्वर्षधरपर्वतो निषधो नीलवान् वा तस्यां दिशि तत्समीपे इत्यर्थः, योजनशतमवगाढा योजनशतं

भूमौ प्रविष्टाः, चत्वारि योजनशतानि उद्विद्धा उच्चाः, ततो मात्रया परिवर्धमाना यतो यस्यां दिशि सलिले शीताशीतोदे महानद्यौ ततः शीतायाः शीतोदाया वा समीपे इत्यर्थः, पञ्च गव्यूतशतान्यवगाढाः पञ्चविंशं योजनशतं भूमौ प्रविष्टाः, पञ्च योजनशतान्युद्विद्धा उच्चाः, अत एवाश्वस्कन्धनिभा अश्वस्कधसंस्थानसंस्थिताः ॥ ३७१–३७२ ॥

सम्प्रति तेषां नामान्याह—

चित्ते य बंभकूडे, नलिणीकूडे य एगसेले य ।
तिउडे वेसमणे वा, अंजण मायंजणे चेव ॥ ३७३ ॥
अंकावइ पम्हावइ, आसीविस तह सुहावहे चंदे ।
सूरे नागे देवे, सोलस वक्खारगिरिनामा ॥ ३७४ ॥

व्याख्या—इहोत्तरकुरुपूर्वदिग्वर्तिकच्छविजयप्रत्यासन्नं वक्षस्कारगिरिमधिकृत्य प्रादक्षिण्येनामूनि नामानि द्रष्टव्यानि, तद्यथा—प्रथमो वक्षस्कारगिरिश्चित्रः, द्वितीयः पद्म(ब्रह्म)कूटः, तृतीयो नलिनीकूटः, चतुर्थ एकशैलः, पञ्चमस्त्रिकूटः, षष्ठो वैश्रवणः, सप्तमोऽञ्जनः, अष्टमो मातञ्जनः, नवमोऽङ्कापाती, दशमः पक्ष्मापाती, एकादश आशीविषः, द्वादशः सुखावहः, त्रयोदशश्चन्द्रः, चतुर्दशः सूरः, पञ्चदशो नागः, षोडशो देवः । तत्र प्रथमे वक्षस्कारगिरौ चित्रो नाम देवः पल्योपमस्थितिको विजयदेव इव महर्द्धिक

आधिपत्यं परिपालयति, तेन स चित्रनामा। उक्तं च—"से केणट्ठेणं भंते एवं वुच्चइ चित्ते वक्खारपव्वते? गोयमा! चित्ते वक्खारपव्वते चित्ते नामं देवे महिड्ढिए जाव परिवसति, से एएणट्ठेणं गोयमा एवं वुच्चइ चित्ते वक्खारपव्वते" इति। एवं शेषाण्यपि नामानि भावनीयानि, नवरं शीताशीतोदयोर्ये दक्षिणदिग्भाविनां वक्षस्कारगिरीणामधिपतयस्तेषां देवानां राजधान्यो मेरोर्दक्षिणतोऽपरस्मिन् जम्बूद्वीपे द्वादश योजनसहस्राण्यवगाह्य परतो यथास्थानमवसेयाः। शीताशीतोदयोरुत्तरदिग्भाविनां वक्षस्कारगिरीणां ये स्वामिनस्तेषां राजधान्यो मेरोरुत्तरतोऽपरस्मिन् जम्बूद्वीपे ॥ ३७३–३७४ ॥

साम्प्रतमन्तरनदीनां नामान्याह—

गाहावई दहवई, वेगवई तत्त मत्त उम्मत्ता।
खीरोय सीयसोया, तह अंतोवाहिणी चेव ॥ ३७५ ॥
उम्मीमालिणि गंभीर–मालिणी फेनमालिणी चेव।
एया कुरुप्पवहा, उव्वेहो जोयणा दसउ ॥ ३७६ ॥

व्याख्या—इमान्यन्तरनदीनामानि सुकच्छविजयपूर्वदिग्भाविनीमन्तरनदीमादिं कृत्वा प्रादक्षिण्येन वेदितव्यानि, तद्यथा—प्रथमा गाहावती, द्वितीया ह्रदावती, तृतीया वेगवती, चतुर्थी तप्ता, पञ्चमी मत्ता, षष्ठी उन्मत्ता, सप्तमी क्षीरोदा, अष्टमी शीतस्रोताः, नवमी अन्तर्वाहिनी, दशमी ऊर्मिमालिनी,

एकादशी गम्भीरमालिनी, द्वादशी फेनमालिनी । एताश्च द्वादशाप्यन्तरनद्यः कुण्डप्रवहा निषधनीलवतोः प्रत्यासन्नं यत् स्वं स्वं कुण्डं तस्मात्प्रवह उत्पत्तिर्यासां ताः तथा । कुण्डपरिमाणं च सर्वासामन्तरनदीनां विंशत्यधिकं योजनशतमायामविष्कम्भाभ्यां १२०, त्रीणि योजनशतानि अशीत्यधिकानि किञ्चिदूनानि ३८० परिक्षेपतः, दश योजनान्युद्वेधेन । तथा चाह—"उव्वेहो जोयणा दसउ" उद्वेध उण्डत्वं दश योजनानि । एकैकस्य च कुण्डस्य बहुमध्यदेशभागे एकैको द्वीपः, स च नदीनामोपलक्षितो वेदितव्यः, तद्यथा—गाहावतीकुण्डे गाहावतीद्वीपो नाम द्वीपः, ह्रदावतीकुण्डे ह्रदावतीद्वीपः, एवं सर्वेऽपि भावनीयाः, सर्वेषामपि च द्वीपानां परिमाणं तुल्यं, तच्च षोडश योजनान्यायामविष्कम्भाभ्यां १६, सातिरेकाणि पञ्चाशद्योजनानि ५० परिक्षेपतः, सर्वेऽपि च द्वीपा जलपर्यन्तादूर्ध्वं द्वौ क्रोशावुच्छ्रिताः, सर्वेऽपि च प्रत्येकमेकैकया पद्मवेदिकया एकैकेन ( च ) वनखण्डेन समन्ततः परिक्षिप्ताः । एकैकस्य च द्वीपस्य बहुमध्यदेशभागे एकैकं स्वस्वनद्यधिपतिदेवीयोग्यं भवनं, तद्यथा—गाहावतीद्वीपस्योपरि गाहावती ( देवी ) योग्यं भवनं, ह्रदावतीद्वीपस्योपरि ह्रदावतीदेवीयोग्यमित्यादि । तानि च भवनानि प्रत्येकं क्रोशायामानि अर्धक्रोशविष्कम्भानि, देशोनक्रोशोच्चानि, सर्वाण्यपि च चित्रमणिमयस्तम्भशतसन्निविष्टानि, एकैकस्य च भवनस्य मध्ये स्वस्वाधिपतिदेवीयोग्यं शयनीयं, तद्यथा—गाहावतीद्वीपोपरिभवनमध्ये गाहावतीदेवीयोग्यं ( शयनीयं ), ह्रदावतीद्वीपोपरिभवनमध्ये ह्रदावतीदेवीयोग्यमित्यादि । एताश्च गाहावतीप्रमुखा नद्यः सर्वा अपि सर्वत्र कुण्डाद्विनिर्गमे शीताशीतोदयोः प्रवेशे च तुल्यप्रमाणविष्कम्भो-

द्वेधाः, तत्र पञ्चविंशं योजनशतं विष्कम्भपरिमाणं प्रागेव प्रतिपादितं, विष्कम्भस्य च पञ्चाशत्तमो भाग उद्वेधः, तेन सर्वत्राप्युद्वेधोऽर्धतृतीयानि योजनानि ॥ २७५–२७६ ॥

सम्प्रति विजयवक्तव्यतामाह—

विजयाणं बत्तीसं, आसन्नं मालवंतसेलस्स ।
काऊण पयाहीणा, इमाणि नामाणि अणुकमसो[1] ॥ २७७ ॥

व्याख्या—विजेतव्याश्चक्रवर्तिनामिति विजयाः, तथाहि—एकैकः कच्छादिविजयः सर्वात्मना चक्रवर्तिनां विजेतव्यो भवति, तेन विजया इत्युच्यन्ते, अनादिप्रवाहनिपतितेयं संज्ञा, तेनेदमन्वर्थमात्रदर्शनं क्रियते, न तु साक्षात्प्रवृत्तिनिमित्तोपदर्शनमिति । इत्थंभूता विजया द्वात्रिंशत्सङ्ख्याः, तेषां नामानि माल्यवतो गजदन्तसंस्थानसंस्थितस्य वक्षस्कारगिरेः प्रत्यासन्नं विजयमादिं कृत्वा प्रदक्षिणममूनि वक्ष्यमाणस्वरूपाणि अनुक्रमशः परिपाट्या द्रष्टव्यानि ॥ २७७ ॥

तान्येवाह—

कच्छ सुकच्छ महाक–च्छए य कच्छावई चउत्थोऽत्थ ।
आवत्त मंगलावत्त, पुक्खले पुक्खलावइ य ॥ २७८ ॥

१ णुक्कमसो इति पाठातरं ।

व्याख्या—अमून्यष्टौ नामानि गजदन्तसंस्थानसंस्थितस्य माल्यवतो वक्षस्कारगिरेः प्रत्यासन्नं विजयमादिं कृत्वा क्रमेण पूर्वाभिमुखं व्यवस्थितानामष्टानां विजयानामवसेयानि तद्यथा—प्रथमो विजयः कच्छः, द्वितीयः सुकच्छः, तृतीयो महाकच्छः, चतुर्थः अत्र एतेषु माल्यवतः पूर्वदिग्भाविषु विजयेषु मध्ये कच्छावती, पञ्चम आवर्तः, षष्ठो मङ्गलावर्तः, सप्तमः पुष्कलः, अष्टमः पुष्कलावती ॥ २७८ ॥

वच्छ सुवच्छ महाव-च्छए य वच्छावई चउत्थोऽच्छ ।

रम्मे य रम्मएऽवि य, रमणिज्जे मंगलावइ य ॥ २७९ ॥

व्याख्या—अमूनि शीताया महानद्या दक्षिणदिग्भाविनो वनमुखादपरतोऽष्टानां विजयानां क्रमेण नामानि द्रष्टव्यानि, तद्यथा—प्रथमो वत्सः, द्वितीयः सुवत्सः, तृतीयो महावत्सः, चतुर्थोऽत्र ( एतेषु ) शीताया महानद्या दक्षिणदिग्भाविष्वष्टसु विजयेषु मध्ये वत्सावती, पञ्चमो रम्यः, षष्ठो रम्यकः, सप्तमो रमणीयः, अष्टमो मङ्गलावती ॥ २७९ ॥

पम्ह सुपम्ह महाप-म्हए य पम्हावई चउत्थोऽत्थ ।

संखे नलिणे कुमुए, नलिणावइ अट्ठमे भणिए ॥ २८० ॥

व्याख्या—एतानि विद्युत्प्रभादपरतः शीतोदाया दक्षिणतो व्यवस्थितानामष्टानां विजयानां क्रमेण नामानि द्रष्टव्यानि, तद्यथा—विद्युत्प्रभादनन्तरं प्रथमः पद्मः, द्वितीयः सुपद्मः, तृतीयो महापद्मः,

चतुर्थोऽत्र एतेषु शीतोदाया दक्षिणदिग्भाविष्वष्टसु विजयेषु मध्ये पद्मावती, पञ्चमः शङ्खः, षष्ठो नलिनः, सप्तमः कुमुदः, अष्टमो नलिनावती ॥ ३८० ॥

वप्प सुवप्प महाव-प्पए य वप्पावई चउत्थोऽत्थ ।
वग्गु सुवग्गू गंधिल, गंधावई अट्ठमे नाणिए ॥ ३८१ ॥

व्याख्या—अमूनि शीतोदाया महानद्या उत्तरदिग्भाविनो वनमुखात् पूर्वतोऽष्टानां विजयानां क्रमेण नामानि द्रष्टव्यानि, तद्यथा—प्रथमो वप्रः, द्वितीयः सुवप्रः, तृतीयो महावप्रः, चतुर्थोऽत्र एतेषु शीतोदाया उत्तरदिग्भाविष्वष्टसु विजयेषु मध्ये वप्रावती, पञ्चमो वल्गुः, षष्ठः सुवल्गुः, सप्तमो गन्धिलः, अष्टमो गन्धिलावती ॥ ३८१ ॥

तदेवमुक्ता विजया वक्षस्कारगिरयोऽन्तरनद्यश्च । सम्प्रत्येते विजयादयो येन क्रमेण सन्निविष्टा वर्तन्ते तथा मन्दमतीनामवबोधाय प्रदर्श्यन्ते—तत्र गजदन्तसंस्थितस्य माल्यवतो वक्षस्कारगिरेः प्रत्यासन्नः पूर्वदिशि कच्छनामा विजयस्तस्य पूर्वतः चित्रनामा वक्षस्कारः, तस्य पूर्वतः सुकच्छविजयः, तस्य पूर्वेण गाहावती नदी, तस्याः पूर्वतो महाकच्छः, तस्य पूर्वदिशि पद्मकूटो वक्षस्कारगिरिः, तस्य पूर्वतः कच्छावतीविजयः, तस्य पूर्वेण ह्रदावती नदी, तस्याः पूर्वत आवर्तविजयः, तस्य पूर्वतो नलिनीकूटो वक्षस्कारः, तस्य पूर्वदिशि मङ्गलावतीविजयः, तस्य पूर्वेण वेगवतीनामान्तरनदी, तस्याः पूर्वतः पुष्कलविजयः,

तस्यापि पूर्वत एकशैलो वक्षस्कारगिरिः, तस्य पूर्वेण पुष्कलावतीविजयः, तस्य पूर्वतो वनमुखं, तस्यैव सन्मुखं शीताया दक्षिणतो द्वितीयं वनमुखं, तस्यानन्तरमपरतो वत्सनामा विजयः, तस्यापरेण त्रिकूटो वक्षस्कारगिरिः, तस्यापरदिशि सुवत्सो विजयः, तस्यापरतस्तप्तानामान्तरनदी, तस्या अनन्तरं पश्चिमदिशि महावत्सो विजयः, तस्यापरतो वैश्रवणकूटो वक्षस्कारगिरिः, तस्यापरतो वत्सावतीविजयः, तस्यापरेण मत्तानामान्तरनदी, तस्या अपरतो रम्यविजयः, तस्यापरेणाञ्जननामा वक्षस्कारगिरिः, तस्य पश्चिमदिशि रम्यकविजयः, तस्यापरत उन्मत्तान्तरनदी, तस्या अपरतो रमणीयविजयः, तस्यापरदिशि मातञ्जनो वक्षस्कारपर्वतः, तस्यापरतो मङ्गलावतीविजयः, तस्यानन्तरमपरदिशि गजदन्तसंस्थानसंस्थितः सौमनसो नाम वक्षस्कारगिरिः, तस्यापरतो देवकुरवः, तासामपरेण विद्युत्प्रभनामा गजदन्तसंस्थानसंस्थितो वक्षस्कारगिरिः, तस्यानन्तरमपरदिशि पद्मविजयः, तस्यापरतोऽङ्कापाती वक्षस्कारगिरिः, तस्यापरेण सुपद्मविजयः, तस्यापरतः क्षीरोदा नामान्तरनदी, तस्या अपरतो महापद्मविजयः, तस्यापरदिशि पद्मावती वक्षस्कारगिरिः, तस्यापरतः पद्मावतीविजयः, तस्यापरतः शीतस्रोता नामान्तरनदी, तस्याः पश्चिमदिशि शङ्खविजयः, तस्यापरत आशीविषो वक्षस्कारगिरिः, तस्यापरेण नलिनविजयः, तस्यापरतोऽन्तर्वाहिनी नामान्तरनदी, तस्या अपरेण कुमुदविजयः, तस्यापरतः सुखावहनामा वक्षस्कारपर्वतः, तस्यापरदिशि नलिनावतीविजयः, ततोऽपरेण वनमुखं शीतोदाया दक्षिणदिग्भावि, तस्य संमुखं शीतोदाया उत्तरतो

१ पद्मापातीति अपरनाम दृश्यते ।

द्वितीयं वनमुखं, तस्य पूर्वतोऽनन्तरं वप्रनामा विजयः, तस्य पूर्वतश्चन्द्रो वक्षस्कारगिरिः, तस्य पूर्वेण सुवप्रविजयः, तस्य पूर्वदिशि ऊर्मिमालिनी नामान्तरनदी, तस्याः पूर्वतो महावप्रविजयः, तस्य पूर्वेण सूरो नाम वक्षस्कारगिरिः, तस्य पूर्वतो वप्रावतीविजयः, तस्य पूर्वदिशि गम्भीरमालिनी नामान्तरनदी, तस्याः पूर्वतो वल्गुविजयः, तस्य पूर्वेण नागो वक्षस्कारगिरिः, तस्य पूर्वदिशि सुवल्गुविजयः, तस्य पूर्वतः फेनमालिनी नामान्तरनदी, तस्याः पूर्वेण गन्धिलो विजयः, तस्य पूर्वतो देवो नाम वक्षस्कारगिरिः, तस्य पूर्वतो गन्धिलावती विजयः, तस्यानन्तरं पूर्वतो गजदन्तसंस्थानसंस्थितो गन्धमादनो वक्षस्कारगिरिः, तस्य पूर्वेण उत्तरकुरवः, तासामपि पूर्वतो गजदन्ताकारो माल्यवान् वक्षस्कारगिरिरिति ॥

सम्प्रति विजयेषु याः शाश्वतनगर्यस्तासां नामानि प्रतिपादयति—

( नवजोयणपिहुलाउ, बारसदीहा पवरनयरीउ ।
अडविजयाण मझे, इमेहिँ नामेहिँ नायव्वा[1] ॥ )
खेमा खेमपुरी वि य, अरिठ रिठावई य नायव्वा ।
खग्गी मंजूसा वि य, उसहिपुरी पुंडरीगिणि य ॥ ३७२ ॥

---

१ गाथेयमेकस्मिन्नादर्शे टीकारहितैव दृश्यते.

सुसीमा कुंडला चेव, अवरावई पहंकरा ।
अंकावइ पम्हावइ, सुहा रयणसंचया ॥ ३७३ ॥
आसपुरी सीहपुरी, महापुरी चेव होइ विजयपुरी ।
अवराजिया य अवरा, असोगा तह वीयसोगा य ॥ ३७४ ॥
विजया य वेजयंती, जयंति अपराजिया य बोधव्वा ।
चक्कपुरी खग्गपुरी, हवइ अवज्झा अउज्झा य ॥ ३७५ ॥

व्याख्या—एता नगर्यः पूर्वोद्दिष्टकच्छादिक्रमेण यथाक्रमं कच्छादिषु ( विजयेषु ) वेदितव्याः, तद्यथा—कच्छविजये क्षेमा १, सुकच्छविजये क्षेमपुरी २, महाकच्छविजयेऽरिष्टा ३, कच्छावतीविजयेऽरिष्टावती ४, आवर्तविजये खड्गी ५, मङ्गलावर्ते मञ्जूषा ६, पुष्कलविजये औषधिपुरी ७, पुष्कलावतीविजये पुण्डरीकिणी ८, वत्सविजये सुसीमा ९, सुवत्सविजये कुण्डला १०, महावत्सविजयेऽपरा(वती) ११, वत्सावतीविजये प्रभङ्करा १२, रम्यविजये अङ्कावती १३, रम्यकविजये पद्मावती १४, रमणीयविजये शुभा १५, मङ्गलावतीविजये रत्नसञ्चया १६, पद्मविजयेऽश्वपुरी १७, सुपद्मविजये सिंहपुरी १८, महापद्मविजये महापुरी १९, पद्मावतीविजये विजयपुरी २०, शङ्खविजयेऽपराजिता २१, नलिनविजयेऽपरा २२, कुमु-

दविजयेऽशोका २३, नलिनावतीविजये वीतशोका २४, वप्रविजये विजया २५, सुवप्रविजये वैजयन्ती २६, महावप्रविजये जयन्ती २७, वप्रावतीविजयेऽपराजिता २८, वल्गुविजये चक्रपुरी २९, सुवल्गुविजये खड्गपुरी ३०, गन्धिलविजये अवध्या ३१, गन्धिलावतीविजयेऽयोध्या ३२। नवरमेताः पुर्यः शीताशीतोदयोरुत्तरदिग्भाविनां विजयानां दक्षिणार्धमध्यमखण्डेषु वेदितव्याः। शीताशीतोदयोर्दक्षिणदिग्भाविनां तूत्तरार्धमध्यमखण्डेष्विति ॥ ३८२–३८५ ॥

इहैकैको विजयो गङ्गासिन्धुभ्यां यदिवा रक्तारक्तवतीभ्यां वैताढ्यपर्वतेन च षोढा प्रविभक्तः, तत्र षड्भागा यथा भवन्ति तथा प्रदर्श्यन्ते—तत्र पूर्वापरायतेन दक्षिणोत्तरविस्तीर्णेन वैताढ्येन कच्छविजयो द्विधा कृतः, तद्यथा—एकं दक्षिणकच्छार्धमेकमुत्तरकच्छार्धम्, एकैकमप्यर्धं दक्षिणोत्तरायतं पूर्वापरविस्तृतम्। तत्रैकैकस्य कच्छार्धस्यायामोऽष्टौ सहस्राणि द्वे शते एकसप्तत्यधिके योजनानामेकश्चैकोनविंशतिभागो योजनस्य ८२७१ $\frac{1}{19}$। तथाहि—कच्छविजयस्य सामस्त्येनायामः षोडश सहस्राणि पञ्च शतानि द्विनवत्यधिकानि योजनानां द्वौ चैकोनविंशतिभागौ योजनस्य १६५९२ $\frac{2}{19}$, एतस्माद्वैताढ्यविष्कम्भः पञ्चाशद्योजनरूपः शोध्यते, शोधयित्वा च शेषस्यार्धं क्रियते, ततो भवति यथोक्तमेकैकस्य कच्छार्धस्यायामपरिमाणम्। तथैकैकस्य कच्छार्धस्य विष्कम्भपरिमाणं द्वाविंशतिशतानि किञ्चिदूनत्रयोदशाधिकानि २२१३। तत्रोत्तरकच्छार्धे माल्यवतो गजदन्तसंस्थानसंस्थितस्य वक्षस्कारगिरेः पूर्वतो वृषभकूटपर्वतस्यापरतो नीलवतो वर्षधरस्य दाक्षिणात्ये नितम्बे सिन्धुकुण्डं नाम कुण्डं, तच्च षष्टियोजनान्यायामविष्कम्भाभ्यां, नव-

त्यधिकं योजनशतं किञ्चिदूनं १९० परिक्षेपतः, दशयोजनान्युद्वेधेन १०, शीतजलपरिपूर्णम् । तस्य च सिन्धुकुण्डस्य बहुमध्यदेशभागे सिन्धुद्वीपो नाम द्वीपः, स चाष्टौ योजनान्यायामविष्कम्भाभ्यां, सातिरेकाणि पञ्चविंशतियोजनानि २५ परिक्षेपतः, द्वौ क्रोशौ जलपर्यन्तादूर्ध्वमुच्छ्रितः, एकया पद्मवरवेदिकया एकेन च वनखण्डेन समन्ततः परिक्षिप्तः । तस्य च सिन्धुद्वीपस्य बहुमध्यदेशभागे सिन्धुदेवीयोग्यं महदेकं भवनं, तच्च क्रोशायामं, अर्धक्रोशविष्कम्भं, देशोनक्रोशमुच्चम्, अनेकमणिमयस्तम्भशतसन्निविष्टं, तस्य च बहुमध्यदेशभागे महत्येका मणिमयी पीठिका, तस्या उपरि सिन्धुदेवीयोग्यं शयनीयम् । तस्माच्च सिन्धुकुण्डाद्दक्षिणतोरणेन सिन्धुनदी प्रव्यूढा, सा चोत्तरकक्षार्धमध्येन दक्षिणाभिमुखं गच्छन्ती अपान्तराले चानेकाभिर्नदीभिरापूर्यमाणाऽऽपूर्यमाणा वैताढ्यसमीपे सप्तभिर्नदीसहस्रैरापूरिता भवति । ततो वैताढ्यमधो विभज्य तमिस्रगुहायाः पश्चिमदिग्भागेन दक्षिणाभिमुखं विनिर्यती अपान्तराले च पुनरप्यनेकाभिर्नदीभिरापूर्यमाणाऽऽपूर्यमाणा शीतां महानदीं प्रविशति । प्रवेशे च सर्वसङ्ख्ययाऽऽत्मना सह चतुर्दशभिर्नदीसहस्रैः समन्विता भवति । तस्याश्च सिन्धुनद्याः कुण्डाद्विनिर्गमे सक्रोशानि षड् योजनानि विष्कम्भः, अर्धक्रोशमुद्वेधः, शीतानदीप्रवेशे ( च ) सार्धानि द्वाषष्टियोजनानि विष्कम्भः, पञ्च गव्यूतानि उद्वेधः । तस्य च सिन्धुकुण्डस्य पूर्वतो वृषभकूटः, तस्यापि पूर्वतो गङ्गाकुण्डं, तदपि च सिन्धुकुण्डसमानमविशेषेण वेदितव्यम् । तस्माच्च गङ्गाकुण्डाद्दक्षिणतोरणेन गङ्गा नदी विनिर्गच्छति, सा च सिन्धुनदीवदविशेषेण वक्तव्या, नवरमेषा खण्डप्रपातगुहायाः पूर्वतो वैताढ्यं विभिद्य च निर्याति, शेषं तथैव ।

तदेवं गङ्गासिन्धुभ्यामुत्तरकच्छार्धमपि त्रिधा विभक्तं दक्षिणकच्छार्धमपीति षट्खण्डता कच्छविजयस्य । एवं शेषाणामपि विजयानां षट्खण्डता भावनीया, नवरं केषुचिद्विजयेषु गङ्गासिन्ध्वभिधाना नद्यः केषुचिद्रक्तारक्तवत्यभिधानाः । तत एतद्विभागप्रदर्शनार्थमाह—

सीयाए उत्तरेसु, सीओयाए उ जम्मविजएसु ।
गंगासिंधुनईओ, इयरेसु य रत्तरत्तवई ॥ ३०६ ॥

व्याख्या—शीताया महानद्या उदीच्येषु कच्छादिषु विजयेषु शीतोदाया याम्येषु च दाक्षिणात्येषु च पद्मादिषु विजयेषु गङ्गासिन्ध्वभिधाना नद्यः, इतरेषु तु शीताया दाक्षिणात्येषु मङ्गलावतीप्रभृतिषु विजयेषु शीतोदाया (श्च) उदीच्येषु गन्धिलावतीप्रमुखेषु (विजयेषु) रक्तारक्तवत्यभिधाना नद्यः ॥ ३०६ ॥

इह विजयवक्षस्कारगिरयोऽन्तरनद्यश्च सर्वत्रापि तुल्यविस्ताराः, यानि तु वनमुखानि तानि निषधसमीपे नीलवत्समीपे च स्तोकविष्कम्भानि शीताशीतोदोभयकूलपार्श्वे तु पृथुविष्कम्भानि जगत्यनुरोधात्, तथाहि—पूर्वस्यामपरस्यां च दिशि निषधान्नीलवतो वाऽऽरभ्य जगती वक्रगत्या शीताशीतोदे प्राप्ता, जगतीपर्यन्तसंस्पर्शानि च वनमुखानि, ततस्तदनुरोधाद्वर्षधरसमीपे तेषां स्तोको विष्कम्भः, शीताशीतोदासमीपे तु भूयान्, अतस्तद्वक्तव्यतां विवक्षुराह—

सोयासीउंयाणं, उभउ कूलेसु वणमुहा चउरो ।

उत्तरदाहिणदीहा, पाईणपईणविच्छिन्ना ॥ ३७७ ॥

व्याख्या—शीताशीतोदयोः प्रत्येकमुभयोः कूलयोर्वनमुखानि सन्ति, तानि सर्वसङ्ख्यया चत्वारि, तद्यथा—एकं शीतानीलवतोर्मध्ये, द्वितीयं शीतानिषधयोः, तृतीयं शीतोदानिषधयोः, चतुर्थं शीतोदानीलवतोः । एतानि चत्वार्यपि दक्षिणोत्तरदीर्घाणि प्राचीनप्रतीचीनविस्तीर्णानि पूर्वापरपृथुलानि ॥ ३७७ ॥

तत्र निषधसमीपे नीलवत्समीपे च पृथुत्वपरिमाणप्रतिपादनार्थमाह—

अउणावीसइभागं, रुंदा वासहरपव्वयंतेणं ।

अउणत्तीस सया पुण, बावीसहिया नईजुत्तो ॥ ३७८ ॥

व्याख्या—वर्षधरपर्वतान्तेन निषधस्य नीलवतो वा वर्षधरस्य समीपे रुन्दानि विस्तीर्णानि वनमुखानि एकमेकोनविंशतिभागम् । तथाहि—निषधस्य जीवा चतुर्नवतिसहस्राणि शतमेकं षट्पञ्चाशदधिकं योजनानां द्वे चैकोनविंशतिभागरूपे कले योजनस्य ९४१५६ क० २ । विजयषोडशकपृथुत्वं पञ्चत्रिंशत्सहस्राणि चत्वारि शतानि षडुत्तराणि ३५४०६ । वक्षस्कारपर्वताष्टकविष्कम्भश्चत्वारि सहस्राणि ४००० । षण्णामन्तरनदीनां पृथुत्वं सप्त शतानि पञ्चाशदधिकानि ७५० । भद्रशालसौमनसपृथुत्वं योजनसहस्रं

१००० । देवकुरुजीवा त्रिपञ्चाशत्सहस्राणि ५३००० । एतेषां सर्वेषामप्येकत्र मीलने जातानि चतुर्नवतिसहस्राणि शतमेकं षट्पञ्चाशदधिकं ९४१५६, एतत्प्रागुक्तान्निषधजीवापरिमाणाच्छोध्यते, शोधिते च सति तस्मिन् शेषमुद्धरति द्वौ चैकोनविंशतिभागौ, ततस्तयोरर्धे लब्ध एक एकोनविंशतिभागः १/१९, एतावान्निषधसमीपे पूर्वपश्चिमदिग्भाविनोर्वनमुखयोः प्रत्येकं विष्कम्भः । नीलवत्समीपेऽपि पूर्वपश्चिमदिग्भाविनोर्वनमुखयोरेतावान् विष्कम्भो भावनीयः, यतो यस्यां पुनर्दिशि नदी शीता शीतोदा वा, तस्यां दिशि एकोनत्रिंशच्छतानि द्वाविंशत्यधिकानि २९२२ प्रत्येकं विस्तीर्णानि ॥ ३८८ ॥

सम्प्रति वक्ष्यमाणकरणोपयोगित्वात्पूर्वमुक्तमपि आयामप्रमाणं पुनरप्याह—

पंच सए बाणउए, सोलस य हवंति जोयणसहस्सा ।
दो य कला अवराओ, आयामेणं मुणेयव्वा ॥ ३८९ ॥

व्याख्या—चत्वार्यपि च वनमुखानि प्रत्येकमायामेन ज्ञातव्यानि षोडश सहस्राणि पञ्च शतानि द्विनवत्यधिकानि योजनानां द्वे च कले एकोनविंशतिभागरूपे योजनस्य १६५९२ क० २ ॥ ३८९ ॥

सम्प्रति वनमुखेषु ईप्सितप्रदेशे विष्कम्भानयनाय करणमाह—

जइच्छसि विक्खंभं, सीयाए वणमुहस्स नाउं जे ।
अउणत्तीससएहिं, बावीसहिएहिं तं गुणिए ॥ ३९० ॥

तं चेव पुणो रासिं, अउणावीसाइं संगुणेऊणं ।
सुन्निंदियदुगपंचय—इक्कगतिगभागहारो से ॥ ३९१ ॥
भइएण रासिणा ते–ण एत्थ जं होइ भागलद्धं तु ।
सो सीयाए वणमुहे, तहिं तहिं होइ विक्खंभो ॥ ३९२ ॥

व्याख्या—शीताया उपलक्षणमेतत् ( तेन ) शीतोदाया वा समीपवर्तिनो वनमुखस्य यत्र योजनादौ विष्कम्भं ज्ञातुमिच्छसि 'जे' इति पादपूरणे, आह च वररुचिः स्वप्राकृतलक्षणे—"इजेराः पादपूरणे" इति, तत् अतिक्रान्तं योजनादिकमेकोनत्रिंशच्छतैर्द्वाविंशत्यधिकैः २९२२ गुणयेत्, गुणिते च सति यो योजनराशिर्भवति तमेकोनविंशतिभागकरणार्थमेकोनविंशत्या गुणयेत्, गुणयित्वा च शून्येन्द्रियद्विकपञ्चैककत्रिकैः, इन्द्रियाणि पञ्च, ततोऽयमर्थः—शून्यपञ्चकद्विकपञ्चैककत्रिकैरङ्कस्थापना ३१५२५०, 'से' तस्य कलाराशेर्भागहारो भागहरणं, ततस्तेन शून्येन्द्रियादिरूपेण राशिना कलाराशौ भक्ते सति यल्लभ्यते, स शीताया उपलक्षणमेतत् शीतोदाया वा समीपवर्तिनि वनमुखे तत्रेप्सिते प्रदेशे विष्कम्भः । अथ शून्येन्द्रियादिरूपस्य भागहारराशेः का भावना ? उच्यते—य आयामगतो राशिः षोडश सहस्राणि पञ्च शतानि द्विनवत्यधिकानि योजनानां द्वे च कले १६५९२ क० २, तत्र योजनराशिः कलाकरणार्थमेकोनविंशत्या गुण्यते, गुणयित्वा चोपरितने द्वे कले तत्र क्षिप्येते, ततः शून्येन्द्रियादिरूपोऽ-

धिकृतो भागहारराशिर्भवति । तत्र निषधान्नीलवतो वा षोडश सहस्राणि पञ्च शतानि द्विनवत्यधिकानि योजनानां द्वे च कले इत्येतावन्तत्वा विष्कम्भो ज्ञातुमिष्टः, तत एष राशिर्ध्रियते १६५९२ क० २ धृत्वा चैकोनत्रिंशच्छतैर्द्वाविंशत्यधिकैः २९२२ गुण्यते, गुणिते च सति जातो योजनराशिश्चतुष्कः अष्टकः चतुष्कः अष्टकः एककः अष्टकः द्विकः चतुष्कः ४८४८१८२४, कलाराशिरष्टापञ्चाशच्छतानि चतुश्चत्वारिंशदधिकानि ५८४४ । ततो योजनराशिः कलाकरणार्थमेकोनविंशत्या गुण्यते, गुणिते च सति जातः कलाराशिरेवंरूपः—नवकः द्विकः एककः एककः पञ्चकः चतुष्कः षट्कः पञ्चकः षट्कः ९२११५४६५६, कलाश्च प्रागुक्ताश्चतुश्चत्वारिंशदधिकाष्टापञ्चाशच्छतसङ्ख्याका एतस्मिन् कलाराशौ प्रक्षिप्यन्ते, ततो जात एवंरूपः कलाराशिः नवकः द्विकः एककः एककः षट्कः शून्यं पञ्चकः शून्ये द्वे ९२११६०५०० । ततः शून्येन्द्रियादिरूपेण प्रागुक्तेन राशिना ३१५२५० भागो ह्रियते, हृते च भागे लब्धानि योजनानामेकोनत्रिंशच्छतानि द्वाविंशत्यधिकानि २९२२, एतावान् शीताशीतोदासमीपे वनमुखानां विष्कम्भः । एवमन्यत्रापि भावनीयम् ॥ ३९०—३९२ ॥

सम्प्रति विदेहवक्तव्यतामाह—

अविरहियं जिणवरच—क्कवट्टिबलदेववासुदेवेहिं ।
एयं महाविदेहं, बत्तीसाविजयपविभत्तं ॥ ३९३ ॥

व्याख्या—एतदनन्तरव्यावर्णितस्वरूपं महाविदेहं महाविदेहक्षेत्रं। नपुंसकतानिर्देशो महाविदेहशब्दस्य प्राकृतत्वात् एतच्च प्रागेवोक्तम्। द्वात्रिंशद्विजयप्रविभक्तं जिनवरचक्रवर्तिबलदेववासुदेवैश्चाविरहितं द्वात्रिंशद्विजयेषु मध्ये केऽपि क्वाप्यवश्यं तीर्थकरादयः प्राप्यन्त इति भावः। तत्र जघन्यपदे तीर्थकृतश्चक्रवर्तिनो बलदेवा वासुदेवा वा प्रत्येकं चत्वारः, उत्कृष्टपदे तीर्थकृतो द्वात्रिंशत्, चक्रवर्तिनो बलदेवा वासुदेवाश्च प्रत्येकमष्टाविंशतिः। समस्ते तु जम्बूद्वीपे जघन्यपदे तीर्थकृतश्चक्रवर्तिनो बलदेवा वासुदेवा वा प्रत्येकं चत्वारश्चत्वारः, उत्कृष्टपदे तीर्थकृतश्चतुस्त्रिंशत्, चक्रवर्तिनो बलदेवा वासुदेवा वा प्रत्येकं त्रिंशत्त्रिंशत्। उक्तं च—"जंबूद्दीवे णं भंते दीवे जहन्नपए उक्कोसपए वा केवइया तित्थयरा सव्वग्गेणं पन्नत्ता? गोयमा! जहन्नपदे चत्तारि उक्कोसपए चोत्तीसं तित्थयरा सव्वग्गेणं पन्नत्ता। जंबूद्दीवे णं भंते दीवे केवइया जहन्नपए उक्कोसपए वा चक्कवट्टी सव्वग्गेणं पन्नत्ता? गोयमा! जहन्नपए चत्तारि उक्कोसपए तीसं चक्कवट्टी सव्वग्गेणं पन्नत्ता। बलदेवाऽवि तत्तिया चेव जत्तिया चक्कवट्टी। वासुदेवाऽवि तत्तिया चेव" इति ॥ ३७३ ॥

सम्प्रति विदेहमनुष्यवक्तव्यतामाह—

मणुयाण पुव्वकोडी, आऊ पंचूसियाधणुसयाइं।
दुसमसुसमाणुभावं, अणुहवंति नरा निययकालं ॥ ३७४ ॥

व्याख्या—तस्मिन् विदेहे विजयेषु मनुष्याणामायुरुत्कर्षतः पूर्वकोटिः । उच्छ्रिता उच्चा मनुष्या उत्कर्षतः पञ्च धनुःशतानि । तथा नियतकालं सर्वदैव नरा मनुष्या अनुभवन्ति दुःषमसुषमानुभावं, तथाक्षेत्रस्वाभाव्यात् ॥ ३७४ ॥

तदेवं कृता विदेहवक्तव्यता, तदभिधानाच्च समर्थिता जम्बूद्वीपक्षेत्रवक्तव्यता । सम्प्रति जम्बूद्वीप एव चन्द्रादिसङ्ख्यामाह—

दो चंदा दो सूरा, नक्खत्ता खलु हवंति छप्पन्ना ।
छावत्तरं गहसयं, जंबूद्दीवे वियारी णं ॥ ३७५ ॥
एगं च सयसहस्सं, तित्तीसं खलु भवे सहस्सा य ।
नव य सया पन्नासा, तारागणकोडिकोडीणं ॥ ३७६ ॥

व्याख्या—जम्बूद्वीपे विचारिणौ परिभ्रमणशीलौ, णमिति वाक्यालंकारे, द्वौ चन्द्रौ द्वौ सूर्यौ । नक्षत्राणि खलु भवन्ति षट्पञ्चाशत् ५६ । षट्सप्ततं षट्सप्तत्यधिकं ग्रहशतं १७६ । तथा तारागणकोटिकोटीनामेकं शतसहस्रं त्रयस्त्रिंशत्सहस्राणि नव शतानि पञ्चाशानि पञ्चाशदधिकानि १३३९५०००००००-०००००००० ( शून्यानि १५ ) । तत्र प्रथमतो बहुवक्तव्यत्वात्सूर्यचारप्ररूपणा क्रियते—इह सूर्यचारप्ररूप-

णायां पञ्चानुयोगद्वाराणि, तद्यथा—मण्डलक्षेत्रप्ररूपणा १, मण्डलसङ्ख्याप्ररूपणा २, अबाधाप्ररूपणा ३, मण्डलान्तरप्ररूपणा ४, मण्डलचारप्ररूपणा ५ ॥

तत्र प्रथमतो मण्डलक्षेत्रप्ररूपणा क्रियते—मण्डलक्षेत्रं नाम सूर्यमण्डलैः सर्वाभ्यन्तरादिभिः सर्वबाह्यपर्यवसानैर्यत् व्याप्तमाकाशं तच्च चक्रवालविष्कम्भतः पञ्च योजनशतानि दशोत्तराणि अष्टचत्वारिंशच्चैकषष्टिभागा योजनस्य ५१० ४८/६१ । तथाहि—सर्वसङ्ख्यया चतुरशीत्यधिकं मण्डलशतं, एकैकस्य च मण्डलस्य विष्कम्भोऽष्टाचत्वारिंशदेकषष्टिभागा योजनस्य, ततश्चतुरशीत्यधिकं शतमष्टाचत्वारिंशता गुण्यते, जातानि अष्टाशीतिशतानि द्वात्रिंशदधिकानि ८८३२ । एतेषां योजनानयनार्थमेकषष्ट्या भागो ह्रियते, हृते च भागे लब्धं चतुश्चत्वारिंशं योजनशतं १४४, शेषमवशिष्यतेऽष्टाचत्वारिंशत् ४८ । चतुरशीत्यधिकशतसङ्ख्यानां च मण्डलानामपान्तरालानि त्र्यशीत्यधिकशतसङ्ख्यानि, सर्वत्रापि ह्यपान्तरालानि रूपोनानि भवन्ति । तथा च प्रतीतमेतत् चतसृणामङ्गुलीनामपान्तरालानि त्रीणीति । एकैकं च मण्डलापान्तरालं द्वियोजनप्रमाणम्, तथा चोक्तं—"सूरमंडलस्स णं भंते सूरमंडलस्स केवइए अबाहाए अंतरे पन्नत्ते ? गोयमा ! दो जोयणाइं अबाहाए अंतरे पन्नत्ते" । ततस्त्र्यशीत्यधिकं शतं द्विकेन गुण्यते, जातानि त्रीणि शतानि षट्षष्ट्यधिकानि ३६६, पूर्वोक्तं च चतुश्चत्वारिंशं शतमत्र प्रक्षिप्यते, ततो जातानि पञ्च शतानि दशोत्तराणि योजनानामष्टाचत्वारिंशच्चैकषष्टिभागा योजनस्य, एतावान्मण्डलक्षेत्रस्य विष्कम्भः । कृता मण्डलक्षेत्रप्ररूपणा ॥ १ ॥

सम्प्रति मण्डलसङ्ख्याप्ररूपणा क्रियते—तत्र सर्वसङ्ख्यया मण्डलानि चतुरशीत्यधिकशतसङ्ख्यानि, उक्तं च—"कइणं भंते सूरमंडला पन्नत्ता? गोयमा! चउरासीए मंडलसए पन्नत्ते"। तत्र पञ्चषष्टिमण्डलानि जम्बूद्वीपे, शेषं त्वेकोनविंशत्यधिकं मण्डलशतं लवणसमुद्रे। उक्तं च—"जंबूद्दीवे णं भंते दीवे केवइयं ओगाहित्ता केवइया सूरमंडला पन्नत्ता? गोयमा! जंबूद्दीवे णं असीयं जोयणसयं ओगाहित्ता एत्थ णं पन्नट्ठी सूरमंडला पन्नत्ता। लवणे णं भंते समुद्दे केवइयं ओगाहित्ता केवइया सूरमंडला पन्नत्ता? गोयमा! लवणे णं समुद्दे तिन्नि तीसे जोयणसए ओगाहित्ता एत्थ णं एगुणवीसे मंडलसए पन्नत्ते। एवमेव सपुव्वावरेणं जंबूद्दीवे लवणे समुद्दे एगे चुलसीए मंडलसए भवतीति मक्खायं"। कृता मण्डलसङ्ख्याप्ररूपणा ॥२॥

सम्प्रत्यबाधाप्ररूपणा कर्तव्या—तत्र च त्रीण्यनुयोगद्वाराणि, तद्यथा—मेरुमधिकृत्य सामान्यतो मण्डलक्षेत्रस्याबाधाप्ररूपणा १, मेरुमेवाधिकृत्य प्रतिमण्डलमबाधाप्ररूपणा २, मण्डले मण्डले द्वयोः सूर्ययोः परस्परमबाधाप्ररूपणा ३ (च)। तत्र प्रथमतो मेरुमधिकृत्य सामान्यतो मण्डलक्षेत्रस्याबाधाप्ररूपणा क्रियते—सामान्यतो मण्डलक्षेत्रस्य मेरोश्च सर्वत्रापान्तरालं चतुश्चत्वारिंशत्सहस्राणि अष्टौ शतानि विंशत्यधिकानि योजनानाम्। तथाहि—सर्वाभ्यन्तरमण्डलं सर्वतो जम्बूद्वीपेऽशीत्यधिकं योजनशतमवगाह्य व्यवस्थितं, तत एकतोऽपि अशीत्यधिकं योजनशतं जम्बूद्वीपविष्कम्भपरिमाणात् योजनलक्षरूपादपनीयते अपरतोऽपि, ततः स्थितानि शेषाणि योजनानां नवनवतिसहस्राणि षट् च शतानि चत्वारिंशदधिकानि ९९६४०। मेरुविष्कम्भश्च दशयोजनसहस्रप्रमाणः, यद्यपि च नाम मण्डलसमश्रेणि-

मेरोर्विष्कम्भो दशयोजनसहस्रप्रमाणात्मको न लभ्यते, किंतूनः, तथापि धरणितले दशयोजनसहस्रप्रमाणात्मकः प्राप्यते इति तत्रापि स तावान् व्यवहारतो विवक्ष्यते, ततो मेरुगतानि दश योजनसहस्राणि पूर्वराशेरपनीयन्ते, जातः पूर्वराशिर्नवाशीतिसहस्राणि षट् शतानि चत्वारिंशदधिकानि ८९६४०। एतेषामर्धे लब्धानि चतुश्चत्वारिंशत्सहस्राणि अष्टौ शतानि विंशत्यधिकानि ४४८२०, एतावान् मेरोर्मण्डलक्षेत्रस्य च सर्वाभ्यन्तरम्। तथा चोक्तम्—"जंबूद्दीवे णं भंते दीवे मंदरस्स पव्वयस्स केवइयं अवाहाए सव्वब्भंतरे सूरमंडले पन्नत्ते? गोयमा! चत्तालीसं जोयणसहस्साइं अट्ठ सए वीसे जोयणस्स अवाहाए सव्वब्भंतरे सूरमंडले पन्नत्ते"। तदेवं कृता मेरुमवधीकृत्य सामान्यतो मण्डलक्षेत्रस्याबाधाप्ररूपणा (१)। सम्प्रति मेरुमेवाधिकृत्य प्रतिमण्डलमबाधाप्ररूपणा क्रियते—तत्र यदेव सामान्यतो मण्डलक्षेत्रस्याबाधापरिमाणं, तदेव प्रथममण्डलस्यापि। सर्वाभ्यन्तरस्य तस्यैवाभ्यन्तरतो मण्डलक्षेत्रस्य सीमाकारित्वात्, सर्वाभ्यन्तरानन्तरस्य तु द्वितीयस्य मण्डलस्याबाधा चतुश्चत्वारिंशत्सहस्राणि अष्टौ शतानि द्वाविंशत्यधिकानि योजनानामष्टाचत्वारिंशच्चैकषष्टिभागा योजनस्य ४४८२२ $\frac{48}{61}$। सर्वाभ्यन्तरतृतीयस्य मण्डलस्याबाधा चतुश्चत्वारिंशद्योजनसहस्राण्यष्टौ शतानि पञ्चविंशत्यधिकानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्य ४४८२५ $\frac{35}{61}$। एवं प्रतिमण्डलं द्वे द्वे योजने अष्टाचत्वारिंशच्चैकषष्टिभागा योजनस्य परिवर्धमानास्तावद्वक्तव्या यावत्सर्वबाह्यं मण्डलम्। तस्य च सर्वबाह्यस्य मण्डलस्याबाधा पञ्चचत्वारिंशद्योजनसहस्राणि त्रीणि शतानि त्रिंशदधिकानि ४५३३०। उक्तं च—"जंबूद्दीवे णं भंते दीवे मंदरस्स पव्वयस्स केवइयं अवाहाए सव्व-

अब्भंतराणंतरे सूरमंडले पन्नत्ते ? गोयमा ! चोयालीसं जोयणसहस्साइं अट्ठ य बावीसे जोयणसए अडयालीसं च एगट्ठिभागा जोयणस्स अबाहाए अब्भंतराणंतरे सूरमंडले पन्नत्ते । जंबूद्दीवे णं भंते दीवे मंदरस्स पव्वयस्स केवइयाए अबाहाए अब्भिंतरतच्चे सूरमंडले पन्नत्ते ? गोयमा ! चोयालीसं जोयणसहस्साइं अट्ठ य पणवीसे जोयणसए पणतीसं च एगट्ठिभागे जोयणस्स अबाहाए अब्भंतरतच्चे सूरमण्डले पन्नत्ते । एवं खलु एएणं उवाएणं निक्खममाणे सूरिए तयाणंतराउ मंडलाउ तयाणंतरं मंडलं संकममाणे दो दो जोयणाइं अडयालीसं च एगट्ठिभागे जोयणस्स एगमेगमंडले अबाहाए वुड्ढिं अभिवड्ढेमाणे अभिवड्ढेमाणे सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरंति । जंबूद्दीवे णं भंते दीवे मंदरस्स पव्वयस्स केवइयाए अबाहाए सव्वबाहिरे सूरमंडले पन्नत्ते ? गोयमा ! पणयालीसं जोयणसहस्साइं तिन्नि य तीसे जोयणसए अबाहाए सव्वबाहिरे सूरमंडले पन्नत्ते" इति। कृता मेरुमधिकृत्य प्रतिमण्डलमबाधाप्ररूपणा (२)। सम्प्रति मण्डले मण्डले द्वयोः सूर्ययोः परस्परमबाधाप्ररूपणा क्रियते—यत्र यदा सर्वाभ्यन्तरे मण्डले सूर्यौ संक्रम्य परिभ्रमतस्तदा सूर्यस्य सूर्यस्य परस्परमन्तरं नवनवतियोजनसहस्राणि षट् शतानि चत्वारिंशदधिकानि ९९६४० । यदा तु सर्वाभ्यन्तरानन्तरे द्वितीये मण्डले उपसंक्रम्य सूर्यौ चारं चरतस्तदा तयोः परस्परमन्तरं नवनवतियोजनसहस्राणि षट् शतानि पञ्चचत्वारिंशदधिकानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्य ९९६४५ ३५/६१, तथाहि—एकोऽपि सूर्यो द्वितीयमण्डले संक्रामन् द्वे योजने अष्टचत्वारिंशतं चैकषष्टिभागान् विमुच्य संक्रामति, एवं द्वितीयोऽपि, ततः पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा द्वितीये मण्डले

सूर्ययोः परस्परमन्तरचिन्तायामधिकत्वेन प्राप्यन्ते । एवमग्रेतनेष्वपि मण्डलेषु भावना भावनीया । यदा तु सर्वाभ्यन्तरान्मण्डलात्तृतीयमण्डले सूर्यौ चारं चरतः तदा तयोः परस्परमन्तरं नवनवतियोजनसहस्राणि षट् शतानि एकपञ्चाशदधिकानि नव चैकषष्टिभागा योजनस्य ९९६५१ $\frac{9}{61}$ । एवं सर्वाभ्यन्तरान्मण्डलाद्बाह्येषु मण्डलेषु संक्रमतोः सूर्ययोः परस्परमन्तरचिन्तायां मण्डले मण्डले पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्य वृद्धिं नेतव्या यावत्सर्वबाह्यं मण्डलं । यदा तु सर्वबाह्ये मण्डले सूर्यौ चारं चरतस्तदा तयोः परस्परमन्तरमेकं योजनशतसहस्रं षट् शतानि षष्ट्यधिकानि १००६६० । यदा तु सर्वबाह्यान्मण्डलादारभ्याभ्यन्तरं प्रविशन्तौ द्वितीयमण्डले सूर्यौ चारं चरतस्तदा तयोः परस्परमन्तरमेकं योजनशतसहस्रं षट् शतानि चतुःपञ्चाशदधिकानि षड्विंशतिश्चैकषष्टिभागा योजनस्य १००६५४ $\frac{26}{61}$ । यदा तु सर्वबाह्यात्तृतीये मण्डले उपसंक्रम्य सूर्यौ चारं चरतस्तदा तयोः परस्परमन्तरमेकं योजनशतसहस्रं षट् शतानि अष्टाचत्वारिंशदधिकानि द्विपञ्चाशच्चैकषष्टिभागा योजनस्य १००६४८ $\frac{52}{61}$ । एवं सर्वबाह्यान्मण्डलादभ्यन्तरं प्रविशतोः सूर्ययोः परस्परमन्तरचिन्तायां मण्डले मण्डले पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्य हानिं नेतव्यास्तावद्यावत्सर्वाभ्यन्तरमण्डलं, तत्र चान्तरं प्रागेव प्रतिपादितम् । कृता मण्डले मण्डले सूर्ययोः परस्परमबाधाप्ररूपणा (२) । तत्करणाच्च कृता परिपूर्णाऽबाधाप्ररूपणा ॥ ३ ॥

सम्प्रति मण्डलान्तरप्ररूपणा क्रियते—तत्र मण्डलस्यान्तरं द्वे योजने सर्वाणि च मण्डलानामन्तराणि त्र्यशीत्यधिकशतसङ्ख्यानि १८३ । कृता मण्डलानामन्तरप्ररूपणा ॥ ४ ॥

सम्प्रति मण्डलचारप्ररूपणा क्रियते—तत्र सप्तानुयोगद्वाराणि, तद्यथा—वर्षं प्रति मण्डलचारसङ्ख्याप्ररूपणा १, वर्षमध्ये प्रत्यहोरात्रं दिवसरात्रिप्रमाणप्ररूपणा २, प्रतिमण्डलं क्षेत्रविभागेन दिवसरात्रिप्ररूपणा ३, मण्डलपरिरयप्ररूपणा ४, मण्डले मण्डले प्रतिमुहूर्तं गतिप्रमाणप्ररूपणा ५, प्रतिमण्डलं दृष्टिपथप्राप्तताप्ररूपणा ६, अर्धमण्डलस्थितिप्ररूपणा ७, (च)। तत्र प्रथमतो वर्षं प्रति मण्डलचारसङ्ख्याप्ररूपणा क्रियते—इह यदा सर्वाभ्यन्तरानन्तरद्वितीयमण्डले सूर्य उपसंक्रम्य चारं चरति तदा स सूर्यसंवत्सरस्य प्रथमो दिवसः, उक्तं च—"से निक्खममाणे सूरिए नवसंवच्छरं आयमाणे पढमम्मि अहोरत्तम्मि अब्भिंतरानंतरे मंडले उवसंकमित्ता चारं चरइ"। अत्र 'निक्खममाणे' इति सर्वाभ्यन्तरान्निष्क्रामन्, शेषं सुगमम्। तत एकैकस्मिन्नहोरात्रे एकैकमनन्तरादनन्तरं बाह्यं मण्डलं संक्रामन् यदा सर्वबाह्ये मण्डलेऽभ्यन्तरानन्तरं द्वितीयं मण्डलमधिकृत्य त्र्यशीत्यधिकशततमे चरति तदा तस्मिन्नहोरात्रे सूर्यसंवत्सरस्य प्रथमे षण्मासाः परिपूर्णा भवन्ति। ततो द्वितीयेऽहोरात्रे सर्वबाह्यान्मण्डलान्मण्डलानन्तरेऽर्वाक्तने द्वितीये मण्डले संक्रामति स द्वितीयानां षण्मासानां प्रथमो दिवसः, तत एकैकस्मिन्नहोरात्रे एकैकमनन्तरादनन्तरं मण्डलं प्रविशन् यदा सर्वाभ्यन्तरे मण्डले सर्वबाह्यानन्तरमभ्यन्तरद्वितीयं मण्डलमधिकृत्य त्र्यशीत्यधिकशततमे संक्रामति तदा तस्मिन्नहोरात्रे परिपूर्णः सूर्यसंवत्सरो भवति। तदेवंरूपे एकस्मिन् सूर्यसंवत्सरे षट्षष्ट्यधिकरात्रिंदिवत्रिशतपरिमाणे सर्वाभ्यन्तरसर्वबाह्यरूपे द्वे मण्डले एकचारं चरति, शेषं तु त्र्यशीत्यधिकं मण्डलशतं १८२ द्विकृत्वः, तद्यथा—निष्क्रामन् प्रविशंश्च। उक्तं च—"जया णं

सूरिए सव्वब्भंतराओ मंडलाओ सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ, सव्वबाहिराओ य मंडलाओ सव्वब्भंतरं मंडलं उवसंकमित्ता चारं चरइ। एस णं अद्धा केवइएणं राइंदियग्गेणं आहियत्तिवएज्जा ता तिन्नि छावट्ठे राइंदियसए राइंदियग्गेणं आहियत्तिवएज्जा ता एयाए णं अद्धाए सूरिए कइ मंडलाइं चरति ता चुलसीयं मंडलसयं चरइ बासी य मंडलसयं दुक्खुत्तो चरइ, तं जहा–निक्खममाणे चेव पविसमाणे चेव। दुवे य खलु मंडलाइं सइं चरति, तं जहा—सव्वब्भंतरं चेव मंडलं सव्वबाहिरं चेव मंडलं"। कृता वर्षमध्ये मण्डलचारसङ्ख्याप्ररूपणा ( १ )। सम्प्रति वर्षमध्य एव प्रत्यहोरात्रं दिवसरात्रिप्रमाणप्ररूपणा क्रियते—तत्र यदा सर्वाभ्यन्तरे मण्डले सूर्यश्चारं चरति, तदा सर्वोत्कर्षप्राप्तोऽष्टादशमुहूर्त्तप्रमाणो दिवसो भवति, सर्वजघन्या तु द्वादशमुहूर्त्तप्रमाणा रात्रिः। ततस्तस्मात्सर्वाभ्यन्तरान्मण्डलान्निष्क्रामन् सूर्यो नवं संवत्सरमाददानो यदा नवसंवत्सरसत्के प्रथमेऽहोरात्रे सर्वाभ्यन्तरानन्तरं द्वितीयं मण्डलमुपसंक्रम्य चारं चरति तदा द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यां हीनोऽष्टादशमुहूर्त्तप्रमाणो दिवसो भवति, द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिका द्वादशमुहूर्त्तप्रमाणा रात्रिः। यदा तु सर्वाभ्यन्तरान्मण्डलात्तृतीये मण्डले नवसंवत्सरसत्कद्वितीयेऽहोरात्रे उपसंक्रम्य सूर्यश्चारं चरति तदा चतुर्भिर्मुहूर्त्तैकषष्टिभागैर्हीनोऽष्टादशमुहूर्त्तप्रमाणो दिवसो भवति, चतुर्भिर्मुहूर्त्तैकषष्टिभागैरधिका द्वादशमुहूर्त्तप्रमाणा रात्रिः। एवमेकैकस्मात्तस्मात्तस्मादनन्तरान्मण्डलादेकैकं तत्तदनन्तरं मण्डलं संक्रामन्नेकैकस्मिन्मण्डले द्वौ द्वौ मुहूर्त्तैकषष्टिभागौ दिवसक्षेत्रस्य हानिं नयन् द्वौ द्वौ मुहूर्त्तैकषष्टिभागौ रात्रिक्षेत्रस्याभिवर्धयन् यदा सर्वबाह्यं मण्डलं नवसंवत्सरसत्के त्र्यशीत्यधिकशत-

हव्

३॥

तमेऽहोरात्रे उपसंक्रम्य चारं चरति तदा त्रीणि शतानि षट्षष्ट्यधिकानि मुहूर्त्तैकषष्टिभागानां दिवसक्षेत्रस्य हापयिता रात्रिक्षेत्रस्य चाभिवर्धयिता भवति, तदा च सर्वजघन्यो द्वादशमुहूर्त्तप्रमाणो दिवसो भवति, सर्वोत्कर्षप्राप्ता चाष्टादशमुहूर्त्तप्रमाणा रात्रिः, एषोऽहोरात्रः प्रथमानां षण्मासानां पर्यवसानः। ततो यदा द्वितीयानां षण्मासानां प्रथमेऽहोरात्रे सर्वबाह्यान्मण्डलादनन्तरेऽर्वाक्तने द्वितीये मण्डले उपसंक्रम्य सूर्यश्चारं चरति तदा द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिको द्वादशमुहूर्त्तो दिवसो भवति, द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यां हीनाऽष्टादशमुहूर्त्तप्रमाणा रात्रिः। ततो यदा बाह्यादर्वाक्तने तृतीये मण्डले द्वितीयानां षण्मासानां द्वितीयेऽहोरात्रे उपसंक्रम्य सूर्यश्चारं चरति तदा चतुर्भिर्मुहूर्त्तैकषष्टिभागैरधिको द्वादशमुहूर्त्तप्रमाणो दिवसो भवति, चतुर्भिर्मुहूर्त्तैकषष्टिभागैर्हीनाऽष्टादशमुहूर्त्तप्रमाणा रात्रिः। एवमेकैकस्मात्तस्मात्तदनन्तरान्मण्डलादेकैकमनन्तरमभ्यन्तरं मण्डलं संक्रामन् एकैकस्मिन्मण्डले द्वौ द्वौ मुहूर्त्तैकषष्टिभागौ दिवसक्षेत्रस्य वर्धयन् द्वौ द्वौ मुहूर्त्तैकषष्टिभागौ रात्रिक्षेत्रस्य हापयन् यदा सर्वाभ्यन्तरं मण्डलं सूर्यसंवत्सरपर्यवसानभूते षट्षष्ट्यधिके त्रिशततमेऽहोरात्रे उपसंक्रम्य चारं चरति तदा त्रीणि शतानि षट्षष्ट्यधिकानि मुहूर्त्तैकषष्टिभागानां रात्रिक्षेत्रस्य हापयिता दिवसक्षेत्रस्य ( च ) अभिवर्धयिता भवति, तदा च सर्वोत्कर्षप्राप्तोऽष्टादशमुहूर्त्तप्रमाणो दिवसो भवति, सर्वजघन्या च द्वादशमुहूर्त्तप्रमाणा रात्रिः, एष सूर्यसंवत्सरपर्यन्तः। अस्मिंश्च सूर्यसंवत्सरे एकवारमष्टादशमुहूर्त्तो दिवसो भवत्येकवारमष्टादशमुहूर्त्ता रात्रिः, तथैकवारं सर्वजघन्यो द्वादशमुहूर्त्तो दिवसो भवत्येकवारं सर्वजघन्या द्वादशमुहूर्त्ता

रात्रिः । तत्र प्रथमेषु षण्मासेषु अस्त्यष्टादशमुहूर्त्ता रात्रिः न त्वष्टादशमुहूर्त्तो दिवसः, अस्ति द्वादशमुहूर्त्तो दिवसः न तु द्वादशमुहूर्त्ता रात्रिः । द्वितीयेषु षण्मासेष्वस्त्यष्टादशमुहूर्त्तो दिवसः न त्वष्टादशमुहूर्त्ता रात्रिः, अस्ति द्वादशमुहूर्त्ता रात्रिः न तु द्वादशमुहूर्त्तो दिवसः । उक्तं च—"इह खलु तस्सेवं आइच्चसंवच्छरस्स सइं अट्ठारसमुहुत्ते दिवसे भवइ, सइं अट्ठारसमुहुत्ता राई भवइ, सइं दुवालसमुहुत्तो दिवसो भवइ, सइं दुवालसमुहुत्ता राई भवति । ता पढमे छम्मासे अत्थि अट्ठारसमुहुत्ता राई, नत्थि अट्ठारसमुहुत्ते दिवसे, अत्थि दुवालसमुहुत्ते दिवसे, नत्थि दुवालसमुहुत्ता राई । दुच्चे छम्मासे अत्थि अट्ठारसमुहुत्ते दिवसे, नत्थि अट्ठारसमुहुत्ता राई, अत्थि दुवालसमुहुत्ता राई, नत्थि दुवालसमुहुत्ते दिवसे" इति । कृता वर्षमध्ये प्रत्यहोरात्रं दिवसरात्रिप्रमाणप्ररूपणा ( २ ) । सम्प्रति क्षेत्रविभागेन दिवसरात्रिप्ररूपणा क्रियते—यदा जम्बूद्वीपे मेरोर्दक्षिणार्धे दिवसो भवति तदा उत्तरार्धेऽपि दिवसः, पूर्वभागे पश्चिमभागे च पुना रात्रिः । यदा च मेरोः पूर्वभागे पश्चिमभागे च दिवसस्तदा दक्षिणार्धे उत्तरार्धे च रात्रिः । यदा च जम्बूद्वीपमेरोर्दक्षिणार्धेऽष्टादशमुहूर्त्तप्रमाणो दिवसो भवति तदोत्तरार्धेऽप्यष्टादशमुहूर्त्तप्रमाणो दिवसः, तदा च मेरोः पूर्वभागे पश्चिमभागे च द्वादशमुहूर्त्तप्रमाणा रात्रिर्भवति । यदा च जम्बूद्वीपे मेरोः पूर्वभागेऽष्टादशमुहूर्त्तप्रमाणो दिवसो भवति तदा पश्चिमभागेऽप्यष्टादशमुहूर्त्तप्रमाणो दिवसः, तदा च मेरोर्दक्षिणार्धे उत्तरार्धे च सर्वजघन्या द्वादशमुहूर्त्ता रात्रिः । एतत्सर्वाभ्यन्तरे मण्डले

१ सकृदेकवारमित्यर्थः.

सूर्यचारमधिकृत्योक्तं । एवं प्रतिमण्डलं क्षेत्रविभागेन दिवसरात्रिविभागो दिवसरात्रिपरिमाणं च प्रागुक्तानुसरणतः परिभावनीयम् । कृता क्षेत्रविभागेन दिवसरात्रिप्ररूपणा ( २ ) । सम्प्रति प्रतिमण्डलं परिरयप्ररूपणा क्रियते—तत्र सर्वाभ्यन्तरं मण्डलं नवनवतियोजनसहस्राणि षट् शतानि चत्वारिंशदधिकानि ९९६४० आयामविष्कम्भाभ्यां, सर्वाभ्यन्तरं हि मण्डलमेकतोऽप्यशीत्यधिकं योजनशतं जम्बूद्वीपेऽवगाह्य स्थितमपरतोऽपि, ततोऽशीत्यधिकं शतं द्वाभ्यां गुण्यते, जातानि त्रीणि शतानि षष्ठ्यधिकानि ३६०, एतानि जम्बूद्वीपविष्कम्भाल्लक्षयोजनपरिमाणादपनीयन्ते, ततः शेषाणि नवनवतिसहस्राणि षट् शतानि चत्वारिंशदधिकानि भवन्ति ९९६४०, एतावत्सर्वाभ्यन्तरं मण्डलस्यायामविष्कम्भपरिमाणं, परिरयस्तु त्रीणि योजनशतसहस्राणि पञ्चदश सहस्राणि एकोननवत्यधिकानि ३१५०८९ किञ्चित्समधिकानि, एष च परिरयो "विक्खंभवग्गदहगुणे"त्यादिना प्रागुक्तेन करणेन समानेतव्यः । यदिवा यदेकतो जम्बूद्वीपविष्कम्भादशीत्यधिकं योजनशतमपरतोऽपि, तेषां त्रयाणां शतानां षष्ठ्यधिकानां परिरय एकादश शतानि अष्टात्रिंशदधिकानि ११३८, एतानि जम्बूद्वीपपरिरयाच्छोध्यन्ते, ततो यथोक्तं सर्वाभ्यन्तरमण्डलस्य परिरयपरिमाणं भवति । सर्वाभ्यन्तरानन्तरं च द्वितीयं मण्डलमायामविष्कम्भाभ्यां नवनवतियोजनसहस्राणि षट् शतानि पञ्चचत्वारिंशदधिकानि पञ्चत्रिंशच्चैकषष्टिभागा योजनस्य ९९६४५ $\frac{35}{61}$ । तथाहि—एकतोऽपि सर्वाभ्यन्तरानन्तरं मण्डलं सर्वाभ्यन्तरमण्डलगतानष्टाचत्वारिंशत्सङ्ख्यानेकषष्टिभागान् द्वे च योजने अपान्तराले विमुच्य स्थितमपरतोऽपि, ततः पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा

योजनस्य पूर्वमण्डलविष्कम्भादस्य मण्डलस्य विष्कम्भे परिवर्धन्ते। अस्य च सर्वाभ्यन्तरमण्डलद्विती-
यस्य मण्डलस्य परिरयस्त्रीणि शतसहस्राणि पञ्चदश सहस्राणि एकं च शतं सप्तोत्तरं योजनानाम्।
३१५१०७। तथाहि—पूर्वमण्डलादस्य मण्डलस्य विष्कम्भे पञ्च योजनानि पञ्चत्रिंशच्चैकषष्टिभागा योज-
नस्य परिवर्धन्ते, पञ्चानां योजनानां पञ्चत्रिंशतश्चैकषष्टिभागाधिकानां परिरयः सप्तदश योजनानि अष्टा-
त्रिंशच्चैकषष्टिभागाः समधिका योजनस्य, परं व्यवहारतो विवक्ष्यन्ते परिपूर्णान्यष्टादश योजनानि, तानि
पूर्वमण्डलपरिरये यदाऽधिकानि प्रक्षिप्यन्ते तदा यथोक्तं द्वितीयमण्डलपरिमाणं भवति। तथा सर्वाभ्यन्त-
रान्मण्डलात्तृतीयस्य मण्डलस्यायामविष्कम्भौ नवनवतिसहस्राणि षट् शतानि एकपञ्चाशदधिकानि योज-
नानां नव चैकषष्टिभागा योजनस्य ९९६५१ ९/६१, परिरयस्त्रीणि शतसहस्राणि पञ्चदश सहस्राणि एकं
च पञ्चविंशत्यधिकं शतं योजनानां किञ्चिदूनं ३१५१२५। एवं मण्डले मण्डले आयामविष्कम्भयोः पञ्च
योजनानि पञ्चत्रिंशदेकषष्टिभागाधिकानि, परिरयेऽष्टादशाष्टादश योजनानि परिवर्धयता तावद्वक्तव्यं याव-
त्सर्वबाह्यं मण्डलम्। तस्मिंश्च सर्वबाह्ये मण्डले एकं योजनशतसहस्रं षट् शतानि षष्ट्यधिकानि १००६६०
आयामविष्कम्भाभ्यां, त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि
किञ्चिदूनानि परिरयः ३१८३१५। कृता मण्डलपरिरयप्ररूपणा (४)। सम्प्रति मण्डले मण्डले प्रतिमुहूर्त्तं
गतिप्रमाणप्ररूपणा क्रियते—तत्र यदा सर्वाभ्यन्तरं मण्डलमुपक्रम्य सूर्यश्चारं चरति, तदा स एकैकस्मि-
न्मुहूर्त्ते पञ्च पञ्च योजनसहस्राणि द्वे शते एकपञ्चाशदधिके एकोनत्रिंशतं च षष्टिभागान् योजनस्य

गच्छति, कथमेतदवसीयते इति चेदुच्यते—इह सर्वमपि मण्डलमेकेनाहोरात्रेण द्वाभ्यां सूर्याभ्यां परिसमाप्यते, प्रतिसूर्यं चाहोरात्रगणने द्वावहोरात्रौ भवतः, द्वयोश्चाहोरात्रयोः षष्टिमुहूर्ताः, तत्र सर्वाभ्यन्तरमण्डलपरिरयश्चीणि लक्षाणि पञ्चदश सहस्राणि एकोननवत्यधिकानि योजनानां ३१५०८९, एतेषां षष्ट्या भागो ह्रियते, हृते च भागे लब्धानि पञ्च योजनसहस्राणि द्वे शते एकपञ्चाशदधिके योजनानाम् एकोनत्रिंशच्च षष्टिभागा योजनस्य ५२५१ २९/६० । एवं सर्वत्रापि मण्डलगतं परिरयं परिभाव्य भावना भावनीया । यदा तु सर्वाभ्यन्तरानन्तरे मण्डले सूर्य उपसंक्रम्य चारं चरति तदा एकैकस्मिन्मुहूर्ते पञ्च पञ्च सहस्राणि द्वे शते एकपञ्चाशदधिके योजनानां सप्तचत्वारिंशतं च षष्टिभागान् योजनस्य गच्छति ५२५१ ४७/६०, भावना प्रागुक्तानुसारेण स्वयं भावनीया । यदि वा पूर्वमण्डलपरिरयादस्य परिरयेऽष्टादश योजनानि किंचिदूनानि वर्धन्ते, एतच्च प्रागेव भावितम्, अष्टादशानां च षष्ट्या भागो ह्रियते, तत्राष्टादशलक्षणो राशिः षष्टेर्भागं न प्रयच्छति, ततः षष्टिभागकरणार्थमष्टादश षष्ट्या गुण्यन्ते, जातानि दश शतानि अशीत्यधिकानि १०८०, तेषां षष्ट्या भागे हृते लब्धा अष्टादश षष्टिभागाः १८/६०, एतावन्तोऽत्राधिका भागा लभ्यन्ते, ते चोद्देशतः, निश्चयेन तु किञ्चिदूनास्ते पूर्वमण्डलविषयप्रतिमुहूर्त्तं गतिपरिमाणे क्षिप्यन्ते, ततो यथोक्तपरिमाणं भवति । यदा तु सर्वाभ्यन्तरान्मण्डलात्तृतीयं मण्डलमुपसंक्रम्य सूर्यश्चारं चरति तदैकैकस्मिन्मुहूर्त्ते पञ्च योजनसहस्राणि द्विपञ्चाशदधिके द्वे योजनशते पञ्च च षष्टिभागान् योजनस्य गच्छति ५२५२ ५/६०, अत्रापि पूर्वोक्तप्रकारेणाष्टादश षष्टिभागा अधिकाः प्राप्यन्ते, तेन यथोक्तपरिमाणं

भवति । एवं सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रामतः सूर्यस्य मण्डले मण्डले गतौ पूर्वपूर्वानन्तरमण्डलविषयगतिपरिमाणापेक्षयाऽष्टादशाष्टादश षष्टिभागाः प्रवर्धमानास्तावद्वक्तव्या यावत्सर्वबाह्यं मण्डलं । तस्मिंश्च सर्वबाह्ये मण्डले यदा सूर्यश्चारं चरति तदैकैकस्मिन्मुहूर्त्ते पञ्च पञ्च योजनसहस्राणि त्रीणि शतानि पञ्चोत्तराणि पञ्चदश च षष्टिभागान् योजनस्य गच्छति ५३०५ १५/६०, भावना एतन्मण्डलगतं परिभाव्य प्रागुक्तानुसारेण स्वयं कर्तव्या । यदा तु सर्वबाह्यान्मण्डलादनन्तरेऽर्वाक्तने द्वितीये मण्डले उपसंक्रम्य सूर्यश्चारं चरति तदैकैकस्मिन्मुहूर्त्ते पञ्च पञ्च योजनसहस्राणि त्रीणि शतानि चतुरुत्तराणि सप्तपञ्चाशतं च षष्टिभागान् योजनस्य गच्छति ५३०४ ५७/६०, अत्र हि सर्वबाह्यमण्डलविषयगतिपरिमाणापेक्षयाऽष्टादश षष्टिभागा हीनाः प्राप्यन्ते, सर्वबाह्यमण्डलपरिरयादेतन्मण्डलपरिरयस्याष्टादशभिर्योजनैर्हीनत्वात्, ततो यथोक्तमत्र प्रतिमुहूर्त्तं गतिपरिमाणं भवति । यदा तु सर्वबाह्यान्मण्डलादर्वाक्तनं तृतीयं मण्डलमुपसंक्रम्य सूर्यश्चारं चरति तदैकैकस्मिन्मुहूर्त्ते पञ्च पञ्च योजनसहस्राणि त्रीणि शतानि चतुरुत्तराणि एकोनचत्वारिंशतं च षष्टिभागान् गच्छति ५३०४ ३९/६०, भावना प्रागिवानुसर्तव्या । एवमभ्यन्तरं प्रविशतः सूर्यस्य मण्डले मण्डले प्रतिमुहूर्त्तं गतिपरिमाणे पूर्वपूर्वानन्तरमण्डलविषयप्रतिमुहूर्त्तगतिपरिमाणापेक्षयाऽष्टादशाष्टादश षष्टिभागा हीनास्तावद्वक्तव्या यावत्सर्वाभ्यन्तरं मण्डलम् । तस्मिंश्च सर्वाभ्यन्तरे मण्डले प्रतिमुहूर्त्तं गतिपरिमाणं प्रागेवोक्तम् । कृता मण्डले मण्डले प्रतिमुहूर्त्तं गतिप्रमाणप्ररूपणा ५ । सम्प्रति दृष्टिपथप्राप्तिप्ररूपणा क्रियते—तत्र यदा सर्वाभ्यन्तरे मण्डले उपसंक्रम्य सूर्यश्चारं चरति तदा इह गतानां मनुष्याणां

सप्तचत्वारिंशत्सहस्रैर्द्वाभ्यां शताभ्यां त्रिषष्ट्यधिकाभ्यां योजनानामेकविंशत्या च षष्टिभागैर्योजनस्य ४७२६३ २१/६० सूर्यो दृष्टिपथमुपयाति तदा च सर्वोत्कृष्टोऽष्टादशमुहूर्त्तप्रमाणो दिवसो भवति, सर्वजघन्या द्वादशमुहूर्त्ता रात्रिः । यदा तु सर्वाभ्यन्तरान्मण्डलादनन्तरे द्वितीये मण्डले उपसंक्रम्य सूर्यश्चारं चरति तदा सप्तचत्वारिंशत्सहस्रैरेकोनाशीत्यधिकेन शतेन योजनानां सप्तपञ्चाशता च षष्टिभागैर्योजनस्य एकं च षष्टिभागमेकषष्टिधा छित्त्वा तस्य सत्कैरेकोनविंशतिभागैः ४७१७९ ५७/६० १९/६१ इहगतानां मनुष्याणां दृष्टिपथमवतरति, तदा च दिवसो द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यां हीनोऽष्टादशमुहूर्त्तप्रमाणो भवति, तथा द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिका द्वादशमुहूर्त्तप्रमाणा रात्रिः । यदा तु सर्वाभ्यन्तरान्मण्डलात्तृतीयं मण्डलमुपसंक्रम्य सूर्यश्चारं चरति तदा सप्तचत्वारिंशत्सहस्रैः षण्णवत्या च योजनानां त्रयस्त्रिंशता च षष्टिभागैर्योजनस्य एकं च षष्टिभागमेकषष्टिधा छित्त्वा तस्य सत्काभ्यां द्वाभ्यां भागाभ्यां ४७०९६ ३३/६० २/६१ इहस्थानां मनुष्याणामालोकपथमवगच्छति, तदा च चतुर्भिर्मुहूर्त्तैकषष्टिभागैर्हीनोऽष्टादशमुहूर्त्तप्रमाणो दिवसो भवति, चतुर्भिर्मुहूर्त्तैकषष्टिभागैरधिका द्वादशमुहूर्त्तप्रमाणा रात्रिः । एवं सर्वाभ्यन्तरान्मण्डलान्निष्क्रामतः सूर्यस्य प्रतिमण्डलमागमोक्तेन प्रकारेण केषुचित्सातिरेकैस्त्र्यशीत्या योजनैः क्वचिच्चतुरशीत्या, केषुचित्सातिरेकैश्चतुरशीत्या, क्वचित्पञ्चाशीत्या, केषुचित्सातिरेकैः पञ्चाशीत्या योजनैर्हान्या दृष्टिपथप्राप्तता तावद्वक्तव्या यावत्सर्वबाह्यं मण्डलम् । तस्मिंश्च सर्वबाह्ये मण्डले यदा सूर्यश्चारं चरति तदा इहगतानां मनुष्याणामेकत्रिंशत्सहस्रैरष्टभिः शतैरेकत्रिंशदधिकैर्योजनानां त्रिंशता च षष्टिभागैर्योजनस्य ३१८३१ ३०/६०

दृष्टिपथमवतरति, तदा च सर्वजघन्यो द्वादशमुहूर्त्तो दिवसो भवति, सर्वोत्कृष्टा चाष्टादशमुहूर्त्तप्रमाणा रात्रिः । यदा तु सर्वबाह्यान्मण्डलादर्वाक्तनं द्वितीयं मण्डलमुपसंक्रम्य सूर्यश्चारं चरति तदा एकत्रिंशत्सहस्रैर्नवभिः शतैः षोडशाधिकैर्योजनानामेकोनचत्वारिंशता षष्टिभागैर्योजनस्य एकं च षष्टिभागमेकषष्टिधा छित्त्वा तस्य सत्कैः षष्टिभागैः ३१९१६ ३९/६० ६०/६१ इहगतानां मनुष्याणां चक्षुःस्पर्शमुपगच्छति, तदानीं च दिवसो द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिको द्वादशमुहूर्त्तप्रमाणो भवति, द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यां हीनाऽष्टादशमुहूर्त्तप्रमाणा रात्रिः । यदा तु सर्वबाह्यान्मण्डलादर्वाक्तनं तृतीयं मण्डलमुपसंक्रम्य सूर्यश्चारं चरति तदा द्वात्रिंशत्सहस्रैरेकाधिकैर्योजनानामेकोनपञ्चाशता च षष्टिभागैर्योजनस्य एकं च षष्टिभागमेकषष्टिधा भित्त्वा तस्य सत्कैस्त्रयोविंशतिभागैः ३२००१ ४९/६० २३/६१ इहत्यानां मनुष्याणां चक्षुःस्पर्शमुपगच्छति, तदानीं च चतुर्भिर्मुहूर्त्तैकषष्टिभागैरभ्यधिको द्वादशमुहूर्त्तप्रमाणो दिवसो भवति, चतुर्भिर्मुहूर्त्तैकषष्टिभागैर्हीनाऽष्टादशमुहूर्त्तप्रमाणा रात्रिः । एवं सर्वबाह्यान्मण्डलादभ्यन्तरं प्रविशतः सूर्यस्य प्रतिमण्डलमागमोक्तेन प्रकारेण केषुचित्सातिरेकैः पञ्चाशीत्या पञ्चाशीत्या योजनैः, क्वचित्पञ्चाशीत्या, केषुचित्सातिरेकैश्चतुरशीत्या चतुरशीत्या, क्वचिच्चतुरशीत्या, केषुचित्सातिरेकैस्त्र्यशीत्या त्र्यशीत्या योजनैर्वृद्ध्या दृष्टिपथप्राप्तता तावद्वक्तव्या यावत्सर्वाभ्यन्तरं मण्डलम्, तस्मिंश्च सर्वाभ्यन्तरे मण्डले यथा मनुष्याणां सूर्यो दृष्टिपथप्राप्तो भवति तथा प्रागेवोपदर्शितम् । काऽत्र सर्वत्रापि गणितभावनेति चेदुच्यते—इह सर्वस्मिन्नपि मण्डले वर्तमानं सूर्यमिहत्या मनुष्या दिवसस्यार्धेन यावत्क्षेत्रं प्राप्यते तावति क्षेत्रे व्यवस्थितं पश्यन्ति, तत्र

सर्वाभ्यन्तरे मण्डले दिवसोऽष्टादशमुहूर्त्तप्रमाणः, अष्टादशानां च मुहूर्त्तानामर्धे नव मुहूर्त्ताः, तस्मिंश्च सर्वाभ्यन्तरे मण्डले प्रतिमुहूर्त्तं गतिपरिमाणमिदम्—पञ्च योजनसहस्राणि द्वे शते एकपञ्चाशदधिके एकोनत्रिंशच्च षष्टिभागा योजनस्य ५२५१ $\frac{२९}{६०}$ एतावन्नवभिर्गुण्यते, ततश्चागतं तस्मिन् सर्वाभ्यन्तरे मण्डले दृष्टिपथप्राप्ततापरिमाणं सप्तचत्वारिंशत्सहस्राणि द्वे शते त्रिषष्ट्यधिके योजनानामेकविंशतिश्च षष्टिभागा योजनस्य ४७२६३ $\frac{२१}{६०}$ । सर्वाभ्यन्तरानन्तरे तु द्वितीये मण्डले दिवसोऽष्टादशमुहूर्त्तप्रमाणो द्वाभ्यामेकषष्टिभागाभ्यां हीनः, एतेषामर्धे नव मुहूर्त्ता एकेनैकषष्टिभागेन हीनाः, ततः सामस्त्येनैकषष्टि-भागकरणार्थं नवापि मुहूर्त्ता एकषष्ट्या गुण्यन्ते, गुणयित्वा च तेभ्य एकभागोऽपनीयते, ततः शेषा जाता एकषष्टिभागाः पञ्च शतान्यष्टाचत्वारिंशदधिकानि ५४८ । सर्वाभ्यन्तरानन्तरे तु द्वितीये मण्डले परिरयपरिमाणं त्रीणि शतसहस्राणि पञ्चदश सहस्राणि शतमेकं सप्तोत्तरम् ३१५१०७, एतत् पञ्चभिः शतैरष्टाचत्वारिंशदधिकैर्गुण्यते, जाताः सप्तदश कोटयः षड्विंशतिलक्षा अष्टसप्ततिसहस्राणि षट् शतानि षट्त्रिंशदधिकानि १७२६७८६३६, ततो योजनानयनार्थमेकषष्टेः षष्ट्या गुणिताया यावान् राशिर्भवति तेन भागो ह्रियते, एकषष्ट्यां च षष्ट्या गुणितायां षट्त्रिंशच्छतानि षष्ट्यधिकानि भवन्ति ३६६०, तैर्भागे हृते आगतं सप्तचत्वारिंशत्सहस्राणि शतमेकमेकोनाशीत्यधिकं योजनानां ४७१७९, शेषमुद्धरति चतु-स्त्रिंशच्छतानि षण्णवत्यधिकानि ३४९६, ( ततः ) छेदराशेः षष्ट्याऽपवर्तना क्रियते, जाता एकषष्टिः, तया शेषराशेर्भागो ह्रियते, लब्धाः सप्तपञ्चाशत् षष्टिभागाः ५७ एकोनविंशतिश्चैकस्य षष्टिभागस्य सत्का

एकषष्टिभागाः $\frac{19}{61}$ । सर्वाभ्यन्तराचृतीये मण्डले दिवसोऽष्टादशमुहूर्त्तप्रमाणश्चतुर्भिरेकषष्टिभागैर्हीनः एतेषां चार्धे नव मुहूर्त्ता द्वाभ्यामेकषष्टिभागाभ्यां हीनाः, ततः सामस्त्येनैकषष्टिभागकरणार्थं नवापि मुहूर्त्ता एकषष्ट्या गुण्यन्ते, गुणयित्वा च तेभ्यो द्वावेकषष्टिभागावपनीयेते, ततः शेषा जाता एकषष्टिभागाः पञ्च शतानि सप्तचत्वारिंशदधिकानि ५४७ । सर्वाभ्यन्तरात्तु तृतीये मण्डले परिरयपरिमाणं त्रीणि शतसहस्राणि पञ्चदश सहस्राणि शतमेकं पञ्चविंशत्यधिकम् ३१५१२५, एतत् पञ्चभिः शतैः सप्तचत्वारिंशदधिकैर्गुण्यते, जाताः सप्तदश कोटयः त्रयोविंशतिशतसहस्राणि त्रिसप्ततिसहस्राणि त्रीणि शतानि पञ्चसप्तत्यधिकानि १७२३७३३७५, एतेषामेकषष्ट्या षष्ट्या गुणितया ३६६० भागो ह्रियते, हृते च भागे आगतानि सप्तचत्वारिंशत्सहस्राणि षण्णवत्यधिकानि ४७०९६, शेषमुद्धरति विंशतिशतानि पञ्चदशोत्तराणि २०१५ । ( ततः ) छेदराशेः षष्ट्याऽपवर्तनया जाता एकषष्टिः, तया शेषराशेर्भागे हृते लब्धास्त्रयस्त्रिंशत् ३३, शेषौ च द्वावेकषष्टिभागस्य सत्कौ एकषष्टिभागौ $\frac{2}{61}$ । एवं सर्वाभ्यन्तरान्मण्डलाच्चतुर्थादिषु मण्डलेषु दृष्टिपथप्राप्तताविषयनियतपरिमाणं परिभावनीयम् । सर्वबाह्ये तु मण्डले दिवसो द्वादशमुहूर्त्तप्रमाणः, तेषां चार्धे मुहूर्त्ताः षट् । सर्वबाह्ये मण्डले प्रतिमुहूर्त्तं गतिपरिमाणमिदम्—पञ्च योजनसहस्राणि त्रीणि शतानि पञ्चोत्तराणि पञ्चदश च षष्टिभागा योजनस्य ५३०५$\frac{15}{60}$, एतत् षड्भिर्गुण्यते, आगतं तस्मिन् सर्वबाह्ये मण्डले दृष्टिपथप्राप्ततापरिमाणम्—एकत्रिंशत्सहस्राणि अष्टौ शतानि एकत्रिंशदधिकानि त्रिंशच्च षष्टिभागा योजनस्य ३१८३१$\frac{30}{60}$ । सर्वबाह्यान्मण्डलादर्वाक्तने द्वितीये

व
८॥

मण्डले दिवसो द्वादशमुहूर्त्तप्रमाणो द्वाभ्यामेकषष्टिभागाभ्यामधिकः, तेषां चार्धे षट् मुहूर्त्ता एकेनैकषष्टिभागेनाधिकाः, ततः सामस्त्येनैकषष्टिभागकरणार्थं षडपि मुहूर्त्ता एकषष्ट्या गुण्यन्ते, गुणयित्वा चैक एकषष्टिभागः प्रक्षिप्यते, जातानि त्रीणि शतानि सप्तषष्ट्यधिकानि ३६७। सर्वबाह्यादर्वाक्तने तु द्वितीये मण्डले परिरयपरिमाणं तिस्रो लक्षा अष्टादश सहस्राणि द्वे शते सप्तनवत्यधिके ३१८२९७, एतत्त्रिभिः शतैः सप्तषष्ट्यधिकैर्गुण्यते, जाता एकादश कोटयोऽष्टषष्टिर्लक्षाश्चतुर्दश सहस्राणि नव शतानि नवनवत्यधिकानि ११६८१४९९९, एतस्यैकषष्ट्या षष्ट्या गुणितया ३६६० भागो ह्रियते, लब्धानि एकत्रिंशत्सहस्राणि नव शतानि षोडशाधिकानि योजनानां ३१९१६, शेषमुद्धरति चतुर्विंशतिशतानि एकोनचत्वारिंशदधिकानि २४३९। छेदराशेः षष्ट्याऽपवर्तनायां जाता एकषष्टिः, तया शेषराशेर्भागे हृते लब्धा एकोनचत्वारिंशत् षष्टिभागाः $\frac{३९}{६०}$, षष्टिश्चैकस्य षष्टिभागस्य सत्का एकषष्टिभागाः $\frac{६०}{६१}$, एतावत्सर्वबाह्यादर्वाक्तने द्वितीये मण्डले दृष्टिपथप्राप्ततापरिमाणम्। सर्वबाह्यात्तु (बाह्यादर्वाक्तने तु) तृतीये मण्डले दिवसो द्वादशमुहूर्त्तप्रमाणश्चतुर्भिरेकषष्टिभागैरधिकः, तेषामर्धे षट् मुहूर्त्ता द्वाभ्यामेकषष्टिभागाभ्यामधिकाः। तत्र सामस्त्येनैकष्टिभागकरणार्थं षडपि मुहूर्त्ता एकषष्ट्या गुण्यन्ते, गुणयित्वा च द्वावेकषष्टिभागौ तत्र प्रक्षिप्येते, जातानि त्रीणि शतानि अष्टषष्ट्यधिकानि ३६८। सर्वबाह्यादर्वाक्तने तु तृतीये मण्डले परिरयपरिमाणं तिस्रो लक्षा अष्टादश सहस्राणि द्वे शते एकोनाशीत्यधिके ३१८२७९, एतत्त्रिभिः शतैरष्टषष्ट्यधिकैर्गुण्यते, जाता एकादश कोटय एकसप्ततिर्लक्षाः षड्विंशतिः सहस्राणि षट् शतानि द्विसप्तत्यधि-

कानि ११७१२६६७२, एतस्य एकषष्ट्या षष्टिगुणितया ३६६० भागो ह्रियते, लब्धानि द्वात्रिंशत्सहस्राणि एकोत्तराणि ३२००१, शेषमुद्धरति त्रीणि सहस्राणि द्वादशोत्तराणि ३०१२, छेदराशेः षष्ट्याऽपवर्तनायां जाता एकषष्टिः, तया शेषराशेर्भागे हृते लब्धा एकोनपञ्चाशत् षष्टिभागाः $\frac{४९}{६०}$ त्रयोविंशतिश्चैकस्य षष्टिभागस्य सत्का एकषष्टिभागाः $\frac{२३}{६१}$ एतावत्सर्वबाह्यादर्वाक्तने तृतीये मण्डले दृष्टिपथप्राप्ततापरिमाणम् । एवं सर्वबाह्यादर्वाक्तनेषु चतुर्थादिषु मण्डलेषु भावनीयमिति । कृता दृष्टिपथप्राप्तताप्ररूपणा ८ । सम्प्रत्यर्धमण्डलस्थितिप्ररूपणा क्रियते—इह द्वौ सूर्यौ एकं मण्डलमेकेनाहोरात्रेण परिसमापयतः, एकैकश्च सूर्यो जम्बूद्वीपे उत्कर्षतोऽधः क्षेत्रं प्रकाशयति अष्टादश योजनशतानि, एतच्चाधोलौकिकान् ग्रामानधिकृत्य वेदितव्यम्, तिर्यक् प्रकाशयति सप्तचत्वारिंशद्योजनसहस्राणि द्वे योजनशते त्रिषष्ट्यधिके एकविंशतिं च षष्टिभागान् योजनस्य, ऊर्ध्वं प्रकाशयति योजनशतम् । उक्तं च—"जंबूद्दीवे णं भंते दीवे सूरिया केवइयं खित्तं उड्ढं तवयंति ? केवइयं अहे तवयंति ? केवइयं तिरियं तवयंति ? गोयमा ! एगं जोयणसयं उड्ढं तवयंति, अट्ठारस जोयणसयाइं अहे तवयंति सीयालीसं जोयणसहस्साइं दोन्नि य तेवट्ठे जोयणसए एगवीसं च सट्ठिभागे जोयणस्स तिरियं तवयंति"। तत्र यदैकः सूर्यः सर्वाभ्यन्तरमण्डलं प्रविशति तदा प्रथमतो मेरोर्दक्षिणपूर्वस्यां दिशि प्रविशति, तदैवापरः सूर्यः समकालं तदेव सर्वाभ्यन्तरं मण्डलं प्रविशन्मेरोरपरोत्तरस्यां दिशि प्रविशति, इत्थं च प्रविशद्भ्यां ताभ्यां सूर्याभ्यां प्रथमे क्षणे यद्व्याप्तं क्षेत्रं तदपेक्षया बुद्ध्या परिपूर्णं सर्वाभ्यन्तरं मण्डलं परिकल्प्यते, इत्थं बुद्धिपरिकल्पितत्वमेव चाधिकृत्य

प्राक्तनं सर्वाभ्यन्तरमण्डलस्य परिरयपरिमाणं प्रतिमुहूर्तं तत्र सूर्यगतिपरिमाणं चावसेयं, न तात्त्विकं, तात्त्विकसर्वाभ्यन्तरमण्डलाभावात्, तथाहि—प्रथमक्षणादूर्ध्वं तौ द्वावपि सूर्यौ शनैः शनैः सर्वाभ्यन्तरान्मण्डलादपसरन्तौ तदनन्तरबहिर्भूतद्वितीयमण्डलाभिमुखं धावन्तौ चारं चरतः, ततः प्रथमे क्षणे यद्व्याप्तं क्षेत्रं सूर्याभ्यां तदपेक्षया बुद्ध्या परिकल्पितं सर्वाभ्यन्तरं मण्डलं न तात्त्विकमिति । तत्रैकः सूर्यो मेरोर्दक्षिणपूर्वस्यां दिशि सर्वाभ्यन्तरे मण्डले उपसंक्रम्य मेरोर्दक्षिणभागं प्रकाशयति, द्वितीयस्त्वपरोत्तरस्यां दिशि सर्वाभ्यन्तरे मण्डले संक्रान्तो मेरोरुत्तरभागम् । तदा च मेरोर्दक्षिणभागे उत्तरभागे च सर्वोत्कृष्टोऽष्टादशमुहूर्तप्रमाणो दिवसो भवति, सर्वजघन्या तु द्वादशमुहूर्तप्रमाणा रात्रिः । ततस्तौ सर्वाभ्यन्तरान्मण्डलान्निष्क्रामन्तौ नवं संवत्सरमाददानौ नवसंवत्सरसत्के प्रथमेऽहोरात्रे सर्वाभ्यन्तरानन्तरं द्वितीयं मण्डलमुपसंक्रम्य चारं चरतः, तत्र दाक्षिणात्यः सूर्यः सर्वाभ्यन्तरमण्डलसत्काद्दक्षिणार्धमण्डलान्निष्क्रम्य मेरोरपरोत्तरस्यां दिशि सर्वाभ्यन्तरानन्तरस्य द्वितीयमण्डलस्योत्तरमर्धं मण्डलमुपसंक्रम्य चारं चरति, उत्तराहस्तु सूर्यः सर्वाभ्यन्तरमण्डलसत्कादुत्तरार्धमण्डलान्निष्क्रम्य मेरोर्दक्षिणपूर्वस्यां दिशि सर्वाभ्यन्तरानन्तरस्य द्वितीयस्य मण्डलस्य दक्षिणमर्धमण्डलमुपसंक्रम्य चारं चरति । इत्थं चोपसंक्रान्ताभ्यां द्वाभ्यां सूर्याभ्यां प्रथमे क्षणे यद्व्याप्तं क्षेत्रं तदपेक्षया परिपूर्णं द्वितीयं मण्डलं बुद्ध्या परिकल्प्यते । एवं सर्वेष्वपि मण्डलेषु प्रथमे प्रथमे क्षणे व्याप्तं क्षेत्रमधिकृत्य बुद्ध्या परिकल्पितत्वं भावनीयम् । तत्र दक्षिणमर्धं मण्डलमुपसंक्रान्तो मेरोर्दक्षिणभागं प्रकाशयति, उत्तरमर्धमण्डलमुपसंक्रान्तो

मेरूत्तरभागम्, तदा च दक्षिणभागे उत्तरभागे च द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यां हीनोऽष्टादशमुहूर्त्तप्रमाणो दिवसो भवति, द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिका द्वादशमुहूर्त्तप्रमाणा रात्रिः। ततस्तस्मात्सर्वाभ्यन्तरानन्तराद्द्वितीयान्मण्डलान्निष्क्रान्तौ सूर्यौ नवसंवत्सरसत्के द्वितीयेऽहोरात्रे सर्वाभ्यन्तरान्मण्डलात्तृतीयं मण्डलमुपसंक्रामतः, तत्र यो दाक्षिणात्यः सूर्यो नवसंवत्सरसत्के प्रथमेऽहोरात्रे सर्वाभ्यन्तरान्मण्डलात् द्वितीयस्य मण्डलस्योत्तरार्धमण्डलमुपसंक्रम्य चारं चरितवान् स सर्वाभ्यन्तरान्मण्डलात्तृतीयस्य मण्डलस्य दाक्षिणात्यमर्धमण्डलं मेरोर्दक्षिणपूर्वस्यां दिशि उपसंक्रम्य चारं चरति। यस्त्वौत्तराहः सूर्यः स नवसंवत्सरसत्के द्वितीयेऽहोरात्रे सर्वाभ्यन्तरान्मण्डलात्तृतीयस्यार्धमण्डलस्यौत्तराहमर्धमण्डलं प्रथमतो मेरोरपरोत्तरस्यां दिशि उपसंक्रम्य चारं चरति, तदा च दक्षिणभागे उत्तरभागे च चतुर्भिर्मुहूर्त्तैकषष्टिभागैर्हीनोऽष्टादशमुहूर्त्तप्रमाणो दिवसो भवति, चतुर्भिर्मुहूर्त्तैकषष्टिभागैरधिका द्वादशमुहूर्त्तप्रमाणा रात्रिः। एवं खलु सर्वाभ्यन्तरान्मण्डलान्निष्क्रामन्तौ सूर्यावेकैकस्मिन्नहोरात्रे एकैकमर्धमण्डलमुपसंक्रम्य चारं चरन्तौ तावत्परिभावनीयौ यावत्सर्वबाह्यमण्डलम्, तस्मिंश्च सर्वबाह्ये मण्डले यो दाक्षिणात्यः सूर्यः य. पूर्वं सर्वाभ्यन्तरे मण्डले दक्षिणभागं प्रकाशितवान् स सर्वबाह्यमण्डलादर्वाक्तनद्वितीयमण्डलसत्काद्दाक्षिणात्यादर्धमण्डलान्निष्क्रम्य नवसंवत्सरसत्के प्रथमषण्मासपर्यवसानभूते त्र्यशीत्यधिकशततमेऽहोरात्रे सर्वबाह्यस्य मण्डलस्यौत्तराहमर्धमण्डलं प्रथमतो मेरोरपरोत्तरस्यां दिशि संक्रम्य चारं चरति। यस्त्वौत्तराहो यः पूर्वं सर्वाभ्यन्तरे मण्डले औत्तराहमर्धमण्डलं प्रकाशितवान् स सर्वबाह्यम-

ण्डलादर्वाक्तनद्वितीयमण्डलसत्कादौत्तराहार्धमण्डलान्निष्क्रम्य तस्मिन्नेव नवसंवत्सरसत्के प्रथमषण्मास-
पर्यवसानभूते त्र्यशीत्यधिकशततमेऽहोरात्रे सर्वबाह्यस्य मण्डलस्य दाक्षिणात्यमर्धं मण्डलं प्रथमतो मेरो-
र्दक्षिणपूर्वस्यां दिशि उपसंक्रम्य चारं चरति, तदा च दक्षिणभागे उत्तरभागे च सर्वजघन्यो द्वादशमु-
हूर्त्तप्रमाणो दिवसो भवति, सर्वोत्कृष्टाऽष्टादशमुहूर्त्तप्रमाणा रात्रिः। एतत्प्रथमषण्मासपर्यवसानम्।
ततस्तौ द्वावपि सूर्यौ सूर्यसंवत्सरस्य द्वितीयान् षण्मासान् आददानौ द्वितीयानां षण्मासानां प्रथमेऽहो-
रात्रे सर्वबाह्यानन्तरं द्वितीयं मण्डलमुपसंक्रम्य चारं चरतः। तत्र यः सर्वबाह्यदक्षिणमर्धमण्डलमुपसं-
क्रम्य चारं चरितवान् स तस्य सर्वबाह्यानन्तरस्य द्वितीयस्य मण्डलस्योत्तरमर्धमण्डलमुपसंक्रम्य चारं
चरति। यस्तु सर्वबाह्ये मण्डले औत्तराहमर्धमण्डलमुपसंक्रम्य चारं चरितवान् स तस्य सर्वबाह्यान्मण्डला-
दर्वाक्तनस्य द्वितीयस्य मण्डलस्य दाक्षिणात्यमर्धं मण्डलमुपसंक्रम्य चारं चरति। तदा च दक्षिणभागे उत्त-
रभागे च द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिको द्वादशमुहूर्त्तप्रमाणो दिवसो भवति, द्वाभ्यां च मुहूर्त्तैक-
षष्टिभागाभ्यां हीनाऽष्टादशमुहूर्त्तप्रमाणा रात्रिः। ततो द्वितीयानां षण्मासानां द्वितीयेऽहोरात्रे सर्वबा-
ह्यान्मण्डलादर्वाक्तने तृतीये मण्डले तौ सूर्यावुपसंक्रम्य चारं चरतः। तत्र यः सर्वबाह्यान्मण्डलादर्वाक्तने
द्वितीये मण्डले दाक्षिणात्येऽर्धमण्डले चारं चरितवान् स तस्य तृतीयस्य मण्डलस्यौत्तराहमर्धमण्डलं
प्रथमतो मेरोरपरोत्तरस्यां दिशि संक्रम्य चारं चरति। यस्तु सर्वबाह्यान्मण्डलात् द्वितीये औत्तराहेऽर्ध-
मण्डले चारं चरितवान् स तस्य तृतीयस्य मण्डलस्य दक्षिणमर्धमण्डलं प्रथमतो मेरोर्दक्षिणपूर्वस्यां दिशि

प्रविश्य चारं चरति। तदा च मेरोर्दक्षिणभागे उत्तरभागे च चतुर्भिर्मुहूर्त्तैकषष्टिभागैरधिको द्वादशमुहूर्त्तप्रमाणो दिवसो भवति, चतुर्भिश्च मुहूर्त्तैकषष्टिभागैर्हीनाऽष्टादशमुहूर्त्ता रात्रिः। एवं सर्वबाह्यान्मण्डलात्प्रविशन्तौ सूर्यावेकैकस्मिन्नहोरात्रे एकैकमर्धं मण्डलमुपसंक्रम्य चारं चरन्तौ तावद्वक्तव्यौ यावत्सर्वाभ्यन्तरं मण्डलम्। तस्मिंश्च सर्वाभ्यन्तरे मण्डले यः पूर्वं तस्मिन्नेव सर्वाभ्यन्तरे दक्षिणभागं प्रकाशितवानुक्तः, स तस्मिन् सूर्यसंवत्सरपर्यवसानभूते षट्षष्ट्यधिकत्रिशततमेऽहोरात्रे सर्वाभ्यन्तरमण्डलद्वितीयमण्डलसत्कादौत्तराहादर्धमण्डलात्सर्वाभ्यन्तरस्य मण्डलस्य दाक्षिणात्यमर्धं मण्डलं प्रथमतो मेरोर्दक्षिणपूर्वस्यां दिशि प्रविश्य चारं चरति। यस्तु पूर्वं तस्मिन्नेव सर्वाभ्यन्तरे मण्डले उत्तरभागं प्रकाशितवानुक्तः स तस्मिन् सूर्यसंवत्सरपर्यवसानभूते षट्षष्ट्यधिकत्रिशततमेऽहोरात्रे सर्वाभ्यन्तरमण्डलद्वितीयमण्डलसत्काद्दाक्षिणात्यादर्धमण्डलात्सर्वाभ्यन्तरमण्डलस्यौत्तराहमर्धमण्डलं प्रथमतो मेरोरपरोत्तरस्यां दिशि संक्रम्य चारं चरति। तदा च मेरोर्दक्षिणभागे उत्तरभागे च सर्वोत्कृष्टोऽष्टादशमुहूर्त्तप्रमाणो दिवसो भवति, सर्वजघन्या तु द्वादशमुहूर्त्तप्रमाणा रात्रिः। एषोऽहोरात्रः सूर्यसंवत्सरद्वितीयषण्मासपर्यवसानभूतः, एष सूर्यसंवत्सरपर्यन्तः। कृताऽर्धमण्डलस्थितिप्ररूपणा ७। तत्करणाच्च कृता मण्डलचारप्ररूपणा ॥ ९ ॥ तत्करणाच्च समाप्ता सूर्यवक्तव्यता ॥

सम्प्रति चन्द्रमण्डलवक्तव्यता भणनीया, तत्र पञ्चानुयोगद्वाराणि, तद्यथा—मण्डलक्षेत्रप्ररूपणा १, मण्डलसङ्ख्याप्ररूपणा २, अबाधाप्ररूपणा ३, मण्डलचारप्ररूपणा ४, मण्डलगतवृद्धिहानिप्रतिभासप्ररू-

पणा ५ ( च )। तत्र प्रथमं मण्डलक्षेत्रप्ररूपणा क्रियते—चन्द्रमण्डलैः सर्वाभ्यन्तरादिभिः सर्वबाह्यपर्यवसानैर्यत् व्याप्तमाकाशं तन्मण्डलक्षेत्रं, तत्र चक्रवालतया विष्कम्भः पञ्च योजनशतानि दशोत्तराणि अष्टचत्वारिंशदेकषष्टिभागा योजनस्य ५१० $\frac{४८}{६१}$। तथाहि—सर्वसङ्ख्यया चन्द्रस्य मण्डलानि पञ्चदश १५, एकैकस्य च मण्डलस्य विष्कम्भः षट्पञ्चाशदेकषष्टिभागा योनजस्य, ततः पञ्चदश षट्पञ्चाशता गुण्यन्ते, जातानि अष्टौ शतानि चत्वारिंशदधिकानि एकषष्टिभागानां ८४०, तत एतेषां योजनानयनार्थमेकषष्ट्या भागो ह्रियते, हृते च भागे लब्धानि त्रयोदश योजनानि १३, शेषा अवशिष्यन्ते सप्तचत्वारिंशत् ४७। पञ्चदशानां च मण्डलानामपान्तरालानि चतुर्दश, एकैकस्य चापान्तरालस्य प्रमाणं पञ्चत्रिंशद्योजनानि त्रिंशच्चैकषष्टिभागा योजनस्य, एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्काश्चत्वारो भागाः ३५ $\frac{३०}{६१}$ $\frac{४}{७}$। उक्तं च—"चंदमंडलस्स णं भंते चंदमंडलस्स केवइयं आबाहाए अंतरे पन्नत्ते ? गोयमा ! पणतीसं जोयणाइं तीसं च एगसट्ठिभागा जोयणस्स एगं च एगट्ठिभागं सत्तहा छित्ता चत्तारि चुण्णिया भागे आबाहाए अंतरे पन्नत्ते"। ततः पञ्चत्रिंशच्चतुर्दशभिर्गुण्यते, जातानि चत्वारि योजनशतानि नवत्यधिकानि ४९०। येऽपि च त्रिंशदेकषष्टिभागास्तेऽपि चतुर्दशभिर्गुण्यन्ते, जातान्येकषष्टिभागानां चत्वारि शतानि विंशत्यधिकानि ४२०, एतेषां योजनानयनार्थमेकषष्ट्या भागो ह्रियते, लब्धानि षड् योजनानि ६, शेषाश्चतुःपञ्चाशदेकषष्टिभागास्तिष्ठन्ति ५४। ये चैकस्यैकषष्टिभागस्य सत्काश्चत्वारः सप्तभागास्तेऽपि चतुर्दशभिर्गुण्यन्ते, जाताः षट्पञ्चाशत् ५६, तस्य सप्तभिर्भागे हृते लब्धा अष्टौ एकषष्टिभागाः, तेऽनन्तरमुक्तायां चतुः-

पञ्चाशति प्रक्षिप्यन्ते, जाता द्वाषष्टिः ६२, तत्रैकषष्टिभागैर्योजनमेकं लब्धं, तच्च योजनराशौ प्रक्षिप्यते, एकश्चैकषष्टिभाग उद्धरितः, स प्रागुक्तायां सप्तचत्वारिंशति प्रक्षिप्यते, तत आगतं मण्डलक्षेत्रस्य परिमाणं पञ्च योजनशतानि दशोत्तराणि अष्टचत्वारिंशच्चैकषष्टिभागा योजनस्य। कृता मण्डलक्षेत्रप्ररूपणा १॥

सम्प्रति मण्डलसङ्ख्याप्ररूपणा क्रियते—तत्र सर्वसङ्ख्यया चन्द्रस्य मण्डलानि पञ्चदश, उक्तं च—"कइ णं भंते चंदमंडला पन्नत्ता? गोयमा! पन्नरस चंदमंडला पन्नत्ता"। तत्र पञ्च मण्डलानि जम्बूद्वीपे, शेषाणि तु दश मण्डलानि लवणसमुद्रे। उक्तं च—"जंबूद्दीवे णं भंते दीवे केवइयं ओगाहित्ता केवइया चंदमंडला पन्नत्ता? गोयमा! जंबूद्दीवे असीयं जोयणसयं ओगाहित्ता एत्थ णं पंच मंडला पन्नत्ता। लवणे णं भंते समुद्दे केवइयं ओगाहित्ता केवइया चंदमंडला पन्नत्ता? गोयमा! लवणे णं समुद्दे तिन्नि तीसे जोयणसए ओगाहित्ता एत्थ णं दस चंदमंडला पन्नत्ता। एवमेव सपुव्वावरे णं जंबूद्दीवे लवणे य समुद्दे य पन्नरस चंदमंडला भवंतीति अक्खायं"। कृता मण्डलसङ्ख्याप्ररूपणा २॥

सम्प्रत्यबाधाप्ररूपणा क्रियते—तत्र च त्रीण्यनुयोगद्वाराणि, तद्यथा—मन्दरमधिकृत्य सामान्यतो मण्डलक्षेत्रस्याबाधाप्ररूपणा, १ मन्दरमेवाधिकृत्य प्रतिमण्डलमबाधाप्ररूपणा २, मण्डले मण्डले द्वयोश्चन्द्रमसोः परस्परमबाधाप्ररूपणा ३ (च)। तत्र प्रथमतो मन्दरमधिकृत्य सामान्यतो मण्डलक्षेत्रस्याबाधाप्ररूपणा क्रियते—सामान्यतो मण्डलक्षेत्रस्य मेरोश्च सर्वत्रापान्तरालं चतुश्चत्वारिंशत्सहस्राणि अष्टौ शतानि विंशत्यधिकानि योजनानाम्। तथाहि—सर्वाभ्यन्तरं चन्द्रमण्डलं सर्वतो जम्बूद्वीपेऽशीत्यधिकं

त
२ ॥

योजनशतमवगाह्य स्थितम्, तत् एकतोऽप्यशीत्यधिकं योजनशतं जम्बूद्वीपविष्कम्भाद्योजनलक्षरूपादपनीयते, अपरतोऽपि, ततः स्थितानि शेषाणि योजनानां नवनवतिसहस्राणि षट् शतानि चत्वारिंशदधिकानि ९९६४० । मन्दरविष्कम्भश्च दशयोजनसहस्रप्रमाणः, ततो दश योजनसहस्राणि पूर्वराशेरपनीयन्ते, जातः पश्चात्पूर्वराशिर्नवाशीतिसहस्राणि षट् शतानि चत्वारिंशदधिकानि ८९६४०, एतेषामर्धे लब्धानि चतुश्चत्वारिंशत्सहस्राणि अष्टौ शतानि विंशत्यधिकानि ४४८२०, एतावन्मेरोर्मण्डलक्षेत्रस्य च सर्वान्तरम् । तथा चोक्तम्—"जंबूद्दीवे णं भंते दीवे मंदरस्स केवइयाए अबाहाए सबब्भंतरे चंदमंडले पन्नत्ते ? गोयमा ! चत्तालीसं जोयणसहस्साइं अट्ठ य वीसे जोयणसए अबाहाए सबब्भंतरे चंदमंडले पन्नत्ते" इति । कृता सामान्यतो मण्डलक्षेत्रस्याबाधाप्ररूपणा ( १ ) । सम्प्रति मन्दरमेवाधिकृत्य प्रतिमण्डलमबाधाप्ररूपणा क्रियते—तत्र यदेव सामान्यतो मण्डलक्षेत्रस्याबाधापरिमाणं तदेव सर्वाभ्यन्तरस्यापि, प्रथममण्डलस्य तस्यैवाभ्यन्तरतो मण्डलक्षेत्रसीमाकारित्वात्, सर्वाभ्यन्तरानन्तरस्य तु द्वितीयस्य मण्डलस्याबाधा चतुश्चत्वारिंशत्सहस्राण्यष्टौ शतानि षट्पञ्चाशदधिकानि योजनानां पञ्चविंशतिरेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्काश्चत्वारो भागाः ४४८५६ $\frac{25}{61}$ $\frac{4}{7}$ । सर्वाभ्यन्तरान्मण्डलात्तृतीयस्य मण्डलस्याबाधा चतुश्चत्वारिंशत्सहस्राणि अष्टौ शतानि द्विनवत्यधिकानि योजनानामेकपञ्चाशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्क एको भागः ४४८९२ $\frac{51}{61}$ $\frac{1}{7}$ । एवं खलु सर्वाभ्यन्तरान्मण्डलान्निष्क्रामन् तदनन्तरान्मण्डलात्तदनन्तरं

मण्डलं संक्रामन् मण्डले मण्डले षट्त्रिंशद्योजनानि पञ्चविंशतिं चैकषष्टिभागान् योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्कान् चतुरो भागान् परिवर्धयमानस्तावद्वक्तव्यो यावत्सर्वबाह्यं मण्डलम्। तस्य सर्वबाह्यस्य मेरुमधिकृत्य अबाधा पञ्चचत्वारिंशद्योजनसहस्राणि त्रीणि शतानि त्रिंशदधिकानि अष्टभिरेकषष्टिभागैर्योजनस्य हीनानि ४५३२९ $\frac{५३}{६१}$। उक्तं हि—"जंबूद्दीवे णं भंते दीवे मंदरस्स पव्वयस्स केवइयाए अबाहाए सव्वब्भंतराणंतरे चंदमंडले पन्नत्ते ? गोयमा ! चोयालीसं जोयणसहस्साइं अट्ठ य छप्पन्ने जोयणसए, पणवीसं च एगसट्ठिभागा जोयणस्स, एगं च एगसट्ठिभागं सत्तहा छित्ता चत्तारि चुन्निया भागे अबाहाए अब्भिंतराणंतरे चंदमंडले पन्नत्ते। जंबूद्दीवे णं भंते दीवे मंदरस्स पव्वयस्स केवइयाए अबाहाए अब्भिंतरतच्चे मंडले पन्नत्ते ? गोयमा ! चोयालीसं जोयणसहस्साइं अट्ठ य बाणउए जोयणसए, एगावन्नं च एगसट्ठिभागे जोयणस्स, एगं च एगसट्ठिभागं सत्तहा छित्ता एगं चुन्नियाभागं अबाहाए अब्भिंतरे तच्चे मंडले पन्नत्ते। एवं खलु एएणं उवाएणं निक्खममाणे चंदे तयणंतराओ मंडलाओ तयणंतरं मंडलं संकममाणे छत्तीसं जोयणाइं पणवीसं च एगसट्ठिभागे जोयणस्स एगं च एगसट्ठिभागं सत्तहा छित्ता चत्तारि चुन्निया भागे एगमेगे अबाहाए अभिवड्ढमाणे अभिवड्ढमाणे जाव सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ। जंबूद्दीवे णं भंते दीवे मंदरस्स केवइयाए अबाहाए सव्वबाहिरे चंदमंडले पन्नत्ते ? गोयमा ! पणयालीसं जोयणसहस्साइं तिन्नि तीसे जोयणसए अबाहाए सव्वबाहिरे चंदमंडले पन्नत्ते" इति। अत्र 'तिन्नि तीसे जोयणसए' इत्यत्र अष्टभिरेकषष्टिभागैर्हीन इति द्रष्टव्यं, शेषं सुगमम्।

कृता मण्डलमधिकृत्य प्रतिमण्डलमबाधाप्ररूपणा ( २ )। सम्प्रति मण्डले मण्डले द्वयोश्चन्द्रमसोः परस्परमबाधाप्ररूपणा क्रियते—तत्र यदा सर्वाभ्यान्तरे मण्डले उपसंक्रम्य चन्द्रमसौ चारं चरतस्तदा चन्द्रस्य चन्द्रस्य परस्परमन्तरं नवनवतियोजनसहस्राणि षट् शतानि चत्वारिंशदधिकानि ९९६४०। यदा तु सर्वाभ्यन्तरानन्तरे द्वितीये मण्डले उपसंक्रम्य चन्द्रमसौ चारं चरतस्तदा तयोः परस्परमन्तरं नवनवतिसहस्राणि सप्त शतानि द्वादशोत्तराणि योजनानामेकपञ्चाशदेकषष्टिभागा योजनस्य, एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्क एको भागः ९९७१२ $\frac{51}{61}$ $\frac{1}{7}$। तथाहि—एकतोऽपि चन्द्रमा द्वितीये मण्डले संक्रामन् षट्त्रिंशद्योजनानि पञ्चविंशतिमेकषष्टिभागान् एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्कान् चतुरो भागान् विमुच्य संक्रामति, द्वितीयोऽप्यपरतः, ततो द्वासप्ततियोजनानि एकपञ्चाशदेकषष्टिभागा योजनस्य एकस्य च षष्टिभागस्य सप्तधा छिन्नस्य सत्क एको भाग इति द्वितीये मण्डले परस्परमन्तरचिन्तायामधिकत्वेन प्राप्यते इति यथोक्तमन्तरपरिमाणं भवति। एवमग्रेतनेष्वपि मण्डलेषु भावना भावनीया। यदा तु सर्वाभ्यन्तरान्मण्डलात्तृतीये मण्डले उपसंक्रम्य चन्द्रमसौ चारं चरतस्तदा तयोः परस्परमन्तरं नवनवतिसहस्राणि सप्त शतानि पञ्चाशीत्यधिकानि योजनानामेकचत्वारिंशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य द्वौ भागौ ९९७८५ $\frac{41}{61}$ $\frac{2}{7}$। एवं सर्वाभ्यन्तरान्मण्डलाद्बाह्येषु मण्डलेषु संक्रामन्तौ चन्द्रमसौ परस्परमन्तरचिन्तायां मण्डले मण्डले द्वासप्ततिं योजनानि एकपञ्चाशतं चैकषष्टिभागान् योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्क-

मेकं भागं परिवर्धयन्तौ तावद्वक्तव्यौ यावत्सर्वबाह्यं मण्डलम् । यदा तु सर्वबाह्ये मण्डले उपसंक्रम्य चन्द्रमसौ चारं चरतस्तदा तयोः परस्परमन्तरमेकं योजनशतसहस्रं षट् योजनशतानि षष्ठ्यधिकानि षोडशभिरेकषष्टिभागैर्न्यूनानि १००६५९ $\frac{४५}{६१}$ । यदा तु सर्वबाह्यान्मण्डलादभ्यन्तरं प्रविशन्तौ चन्द्रमसौ द्वितीयेऽर्वाक्तने मण्डले चारं चरतस्तदा तयोः परस्परमन्तरमेकं योजनशतसहस्रं पञ्च योजनशतानि षडशीत्यधिकानि चतुःपञ्चाशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य षट् भागाः १००५८६ $\frac{५४}{६१}$ $\frac{६}{७}$ । यदा तु सर्वबाह्यान्मण्डलात्तृतीयेऽर्वाक्तने मण्डले उपसंक्रम्य चारं चरतश्चन्द्रमसौ तदा तयोः परस्परमन्तरमेकं योजनशतसहस्रं पञ्च योजनशतानि चतुर्दशोत्तराणि त्रय एकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्काः पञ्च भागाः १००५१४ $\frac{}{६१}$ $\frac{५}{७}$ । एवं सर्वबाह्यान्मण्डलादभ्यन्तरं प्रविशन्तौ चन्द्रमसौ परस्परमन्तरे ( रचिन्तायां ) मण्डले मण्डले द्वासप्ततियोजनानि एकपञ्चाशतं चैकषष्टिभागान् योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्कमेकं भागं हापयन्तौ तावद्वक्तव्यौ यावत्सर्वाभ्यन्तरं मण्डलम्, तत्र चान्तरं प्रागेव प्रतिपादितम् । कृता मण्डले मण्डले चन्द्रमसोः परस्परमबाधाप्ररूपणा ( २ ) । तत्करणाच्च कृता परिपूर्णाऽबाधाप्ररूपणा ॥ ३ ॥

सम्प्रति मण्डलचारप्ररूपणा क्रियते—तत्र चत्वार्यनुयोगद्वाराणि, तद्यथा—मण्डलपरिरयप्ररूपणा १, मण्डले मण्डले प्रतिमुहूर्त्तं गतिप्रमाणप्ररूपणा २, कालसङ्ख्यानतोऽर्धमण्डलपरिपूर्णमण्डलपूरणप्ररूपणा ३, साधारणासाधारणमण्डलप्ररूपणा ४ ( च ) । तत्र प्रथमतो मण्डलपरिरयप्ररूपणा क्रियते—तत्र सर्वा-

भ्यन्तरं मण्डलमायामविष्कम्भाभ्यां नवनवतियोजनसहस्राणि षट् शतानि चत्वारिंशदधिकानि ९९६४० । सर्वाभ्यन्तरं हि मण्डलं चन्द्रमस एकतोऽपि जम्बूद्वीपेऽशीत्यधिकं योजनशतमवगाह्य स्थितम्, अपरतोऽपि, ततोऽशीत्यधिकं शतं द्वाभ्यां गुण्यते, जातानि त्रीणि शतानि षष्ठ्यधिकानि ३६०, एतानि जम्बूद्वीपविष्कम्भाद्योजनलक्षप्रमाणादपनीयन्ते, ततः शेषाणि नवनवतिसहस्राणि षट् शतानि चत्वारिंशदधिकानि तिष्ठन्ति ( ९९६४० ), एतावत्सर्वाभ्यन्तरस्य मण्डला ( लस्या ) यामविष्कम्भपरिमाणं, परिरयः त्रीणि योजनशतसहस्राणि पञ्चदश सहस्राणि नवाशीत्यधिकानि ३१५०८९, एतच्च परिरयपरिमाणं सूर्यसत्कसर्वाभ्यन्तरमण्डलपरिरयपरिमाणमिव द्विधाऽपि भावनीयम् । सर्वाभ्यन्तरानन्तरं च द्वितीयं चन्द्रमण्डलमायामविष्कम्भाभ्यां नवनवतियोजनसहस्राणि सप्त शतानि द्वादशोत्तराणि, एकपञ्चाशदेकषष्टिभागा योजनस्य, एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्क एको भागः ९९७१२ $\frac{५१}{६१}$ $\frac{१}{७}$ । तथाहि—एकतोऽपि सर्वाभ्यन्तरानन्तरं द्वितीयं मण्डलं सर्वाभ्यन्तरमण्डलगतान् षट्पञ्चाशत्सङ्ख्यानेकषष्टिभागान्, अपान्तराले च पञ्चत्रिंशतं योजनानि त्रिंशतमेकषष्टिभागान् योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्कान् चतुरो भागान् ( ३५ $\frac{३०}{६१}$ $\frac{४}{७}$ ) विमुच्य स्थितम्, अपरतोऽपि, ततो द्वासप्ततियोजनानि एकपञ्चाशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्क एको भागः ( ७२ $\frac{५१}{६१}$ $\frac{१}{७}$ ) पूर्वमण्डलविष्कम्भपरिमाणादस्य मण्डलस्य विष्कम्भे वर्धते, ततो यथोक्तमस्य मण्डलस्य विष्कम्भपरिमाणं भवति, परिरयस्त्रीणि योजनशतसहस्राणि पञ्चदश सहस्राणि त्रीणि शतानि एकोन-

विंशत्यधिकानि ३१५३१९। तथाहि—पूर्वस्मान्मण्डलादस्य मण्डलस्य विष्कम्भे द्वासप्ततिर्योजनानि एकपञ्चाशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य एको भाग इति वर्धते, द्वासप्ततियोजनादीनां च परिरयो द्वे योजनशते त्रिंशदधिके भवति, ततस्ते यदा पूर्वमण्डलपरिरये अधिके प्रक्षिप्येते तदा यथोक्तं द्वितीयमण्डलपरिरयपरिमाणं भवति। तथा सर्वाभ्यन्तरान्मण्डलात्तृतीयस्य मण्डलस्यायामविष्कम्भौ नवनवतियोजनसहस्राणि सप्त शतानि पञ्चाशीत्यधिकानि एकचत्वारिंशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्कौ द्वौ भागौ ९९७८५ $\frac{४१}{६१}$ $\frac{२}{७}$। परिरयस्त्रीणि शतसहस्राणि पञ्चदश सहस्राणि पञ्च शतानि एकोनपञ्चाशदधिकानि ३१५५४९। एवं मण्डले मण्डले आयामविष्कम्भयोर्द्वासप्ततियोजनानि एकपञ्चाशतमेकपञ्चाशतमेकषष्टिभागान् योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्कमेकैकं भागं, परिरये (च) द्वे द्वे योजनशते त्रिंशदधिके परिवर्धयता तावद्वक्तव्यं यावत्सर्वबाह्यं मण्डलम्। तस्मिंश्च सर्वबाह्ये मण्डले एकं शतसहस्रं षट् शतानि षष्ठ्यधिकानि षोडशभिरेकषष्टिभागैर्न्यूनानि योजनानामायामविष्कम्भपरिमाणम् १००६५९ $\frac{४५}{६१}$। परिरयस्त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि किञ्चिदूनानि ३१८३१५। कृता मण्डलपरिरयप्रमाणप्ररूपणा (१)। सम्प्रति मण्डले मण्डले प्रतिमुहूर्त्तं गतिप्रमाणप्ररूपणा क्रियते—तत्र यदा सर्वाभ्यन्तरं मण्डलमुपसंक्रम्य चन्द्रश्चारं चरति तदा एकैकस्मिन्मुहूर्त्ते पञ्च पञ्च योजनसहस्राणि त्रिसप्ततियोजनानि योजनस्य त्रयोदशभिः सहस्रैः पञ्चविंशत्यधिकैः सप्तभिः शतैः

प्रविभक्तस्य सप्तसप्ततिशतानि चतुश्चत्वारिंशदधिकानि भागानां गच्छति ५०७३ $\frac{७७४४}{१३७२५}$। यदा तु सर्वाभ्यन्तरानन्तरे द्वितीये मण्डले उपसंक्रम्य चन्द्रश्चारं चरति तदा एकैकस्मिन्मुहूर्त्ते पञ्च पञ्च योजनसहस्राणि सप्तसप्ततिं च योजनानि, त्रयोदशभिः सहस्रैः पञ्चविंशत्यधिकैः सप्तभिः शतैः प्रविभक्तस्य योजनस्य सत्कानां भागानां षट्त्रिंशच्छतानि चतुःसप्तत्यधिकानि गच्छति ५०७७ $\frac{३६७४}{१३७२५}$। यदा तु सर्वाभ्यन्तरान्मण्डलात्तृतीये मण्डले उपसंक्रम्य चन्द्रश्चारं चरति तदा एकैकस्मिन्मुहूर्त्ते पञ्च पञ्च योजनसहस्राणि अशीतिं च योजनानि त्रयोदशभिः सहस्रैः पञ्चविंशत्यधिकैः सप्तभिः शतैः प्रविभक्तस्य योजनस्य सत्कानां भागानां त्रयोदश सहस्राणि त्रीणि शतानि एकोनत्रिंशदधिकानि गच्छति ५०८० $\frac{१३३२९}{१३७२५}$। एवं सर्वाभ्यन्तरान्मण्डलान्निष्क्रामन् तदनन्तरान्मण्डलात्तदनन्तरं मण्डलं संक्रामन् मण्डले मण्डले त्रीणि त्रीणि योजनानि त्रयोदशभिः सहस्रैः पञ्चविंशत्यधिकैः सप्तभिः शतैः प्रविभक्तस्य योजनस्य पञ्चपञ्चाशदधिकानि षण्णवतिभागशतानि ३ $\frac{९९५५}{१३७२५}$ व्यवहारतोऽपि वृद्धिं नयन् तावद्वक्तव्यो यावत्सर्वबाह्यं मण्डलम्। तस्मिंश्च सर्वबाह्ये मण्डले यदा उपसंक्रम्य चन्द्रश्चारं चरति तदा एकैकस्मिन्मुहूर्त्ते पञ्च पञ्च योजनसहस्राणि एकं च पञ्चविंशत्यधिकं योजनशतं त्रयोदशभिः सहस्रैः पञ्चविंशत्यधिकैः सप्तभिः शतैश्च प्रविभक्तस्य योजनस्य सत्कानि एकोनसप्ततिशतानि नवत्यधिकानि गच्छति ५१२५ $\frac{६९९०}{१३७२५}$। यदा तु सर्वबाह्यान्मण्डलात्तदनन्तरेऽर्वाक्तने द्वितीये मण्डले उपसंक्रम्य चन्द्रश्चारं चरति तदा एकैकस्मिन्मुहूर्त्ते पञ्च पञ्च योजनसहस्राणि एकं चैकविंशत्यधिकं योजनशतं त्रयोदशभिः सहस्रैः पञ्चविंशत्यधिकैः सप्तभिः शतैश्च प्रविभ-

कस्य योजनस्य सत्कानि षष्ठ्यधिकानि एकादश भागसहस्राणि गच्छति ५१२१ $\frac{११०६०}{१३७२५}$। यदा तु सर्वबाह्यान्मण्डलादर्वाक्तने तृतीये मण्डले उपसंक्रम्य चन्द्रश्चारं चरति तदा एकैकस्मिन्मुहूर्त्ते पञ्च पञ्च योजनसहस्राणि एकं चाष्टादशोत्तरं योजनशतं त्रयोदशभिः सहस्रैः पञ्चविंशत्यधिकैः सप्तभिः शतैश्च प्रविभक्तस्य योजनस्य सत्कानि चतुर्दश भागशतानि पञ्चोत्तराणि गच्छति ५११८ $\frac{१४०५}{१३७२५}$ एवमभ्यन्तरं प्रविशतश्चन्द्रमसो मण्डले मण्डले प्रतिमुहूर्त्तं गतिपरिमाणे पूर्वपूर्वानन्तरमण्डलविषयप्रतिमुहूर्त्तगतिपरिमाणापेक्षया त्रीणि त्रीणि योजनानि त्रयोदशभिः सहस्रैः पञ्चविंशत्यधिकैः सप्तभिः शतैश्च प्रविभक्तस्य योजनस्य सत्कानि पञ्चपञ्चाशदधिकानि षण्णवतिभागशतानि ३ $\frac{९६५५}{१३७२५}$ हीनानि तावद्वक्तव्यानि यावत्सर्वाभ्यन्तरं मण्डलम्। तस्मिंश्च सर्वाभ्यन्तरे मण्डले प्रतिमुहूर्त्तं गतिपरिमाणं प्रागेवोक्तम्। इत्थंभूतायां च मण्डले मण्डले प्रतिमुहूर्त्तं गतिपरिमाणप्ररूपणायामियं भावना—इहैकोऽपि चन्द्रमा एकमर्धं मण्डलमेकेनाहोरात्रेण एकेन मुहूर्त्तेन एकस्य च मुहूर्त्तस्य द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां प्रविभक्तस्य सत्कैः सार्धैरेकादशभागैर्भ्रमणेनापूरयति, द्वितीयोऽपि द्वितीयमर्धमण्डलमेतावता कालेन पूरयति। ततः प्रतिचन्द्रमर्धमण्डलकालगणने एकस्य मण्डलस्य कालो द्वावहोरात्रौ द्वौ मुहूर्त्तौ एकस्य च मुहूर्त्तस्य द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां प्रविभक्तस्य सत्कास्त्रयोविंशतिभागाः, स्थापना—अहोरात्र २ मुहूर्त्त २ $\frac{२३}{२२१}$। अहोरात्रे च त्रिंशन्मुहूर्त्ता इति सर्वमुहूर्त्तसङ्ख्यायां द्वाषष्टिमुहूर्त्ताः, त एकविंशत्यधिकशतद्वयभागकरणार्थमेकविंशत्यधिकाभ्यां द्वाभ्यां शताभ्यां गुण्यन्ते, गुणयित्वा चोपरितनास्त्रयोविंशतिभागास्तत्र प्रक्षि-

प्यन्ते, ततो जातानि त्रयोदश सहस्राणि सप्त शतानि पञ्चविंशत्यधिकानि १३७२५। सर्वाभ्यन्तरस्य च चन्द्रमण्डलस्य परिरयपरिमाणं त्रीणि लक्षाणि पञ्चदश सहस्राणि नवाशीत्यधिकानि ३१५०८९, एतत् द्वाभ्यामेकविंशत्यधिकाभ्यां शताभ्यां गुण्यते, जातः षट्कः नवकः षट्कः त्रिकः चतुष्कः षट्कः षट्कः नवकः ६९६३४६६९। तत एतेषां त्रयोदशभिः सहस्रैः सप्तभिः शतैः पञ्चविंशत्यधिकैर्भागो ह्रियते, हृते च भागे लब्धानि पञ्च योजनसहस्राणि त्रिसप्तत्यधिकानि अंशाश्च सप्तसप्ततिशतानि चतुश्चत्वारिंशदधिकानि योज० ५०७३ अं० $\frac{७७४४}{१३७२५}$ एतावत्सर्वाभ्यन्तरे मण्डले प्रतिमुहूर्त्तं गतिपरिमाणम्। द्वितीये चन्द्रमण्डले परिरयपरिमाणं त्रीणि लक्षाणि पञ्चदश सहस्राणि त्रीणि शतानि एकोनविंशत्यधिकानि ३१५३१९, एतत् द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां गुण्यते, जातः षट्कः नवकः षट्कः अष्टकः पञ्चकः चतुष्कः नवकः नवकः ६९६८५४९९, एतेषां त्रयोदशभिः सहस्रैः सप्तभिः शतैः पञ्चविंशत्यधिकैर्भागो ह्रियते, लब्धानि पञ्च योजनसहस्राणि सप्तसप्तत्यधिकानि अंशाः षट्त्रिंशच्छतानि चतुःसप्तत्यधिकानि यो०५०७७ अं० $\frac{३६७४}{१३७२५}$ एतावद्द्वितीये मण्डले प्रतिमुहूर्त्तं गतिपरिमाणम्। तृतीये चन्द्रमण्डले परिरयपरिमाणं त्रीणि शतसहस्राणि पञ्चदश सहस्राणि पञ्च शतानि एकोनपञ्चाशदधिकानि ३१५५४९, एतत् शतद्वयेनैकाविंशत्यधिकेन गुण्यते, जातः षट्कः नवकः सप्तकः त्रिकः षट्कः त्रिकः द्विकः नवकः ६९७३६३२९, एतेषां त्रयोदशभिः सहस्रैः सप्तभिः शतैः पञ्चविंशत्यधिकैर्भागो ह्रियते, लब्धानि पञ्च (योजन) सहस्राणि अशीत्यधिकानि अंशास्त्रयोदश सहस्राणि त्रीणि शतानि एकोनत्रिंशदधिकानि यो० ५०८० अं० $\frac{१३३२९}{१३७२५}$।

एवं सर्वेष्वपि मण्डलेषु परिरयपरिमाणं परिज्ञाव्य भावना भावनीया, यावत्सर्वबाह्यं मण्डलम्। तस्मिंश्च सर्वबाह्ये मण्डले परिरयपरिमाणं तिस्रो लक्षा अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि ३१८-३१५, एतत् द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां गुण्यते, जातः सप्तकः शून्यं त्रिकः चतुष्कः सप्तकः षट्कः एककः पञ्चकः ७०३४७६१५, एतेषां त्रयोदशभिः सहस्रैः सप्तभिः शतैः पञ्चविंशत्यधिकैर्भागे हृते लब्धानि पञ्च सहस्राणि शतमेकं पञ्चविंशत्यधिकं योजनानामंशा एकोनसप्ततिशतानि नवत्यधिकानि यो० ५१२५ अं० $\frac{६९९०}{१३७२५}$। सर्वबाह्यादर्वाक्तने द्वितीये मण्डले परिरयपरिमाणं तिस्रो लक्षा अष्टादश सहस्राणि पञ्चाशीत्यधिकानि ३१८०८५, एतत् द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां गुण्यते, जातः सप्तकः शून्यं द्विकः नवकः षट्कः सप्तकः अष्टकः पञ्चकः ७०२९६७८५, एतेषां त्रयोदशभिः सहस्रैः सप्तभिः शतैः पञ्चविंशत्यधिकैर्भागो ह्रियते, लब्धानि पञ्च योजनसहस्राणि शतमेकमेकविंशत्यधिकमंशा एकादश सहस्राणि षष्ट्यधिकानि यो० ५१२१ अं० $\frac{११०६०}{१३७२५}$। सर्वबाह्यादर्वाक्तने तृतीये मण्डले परिरयपरिमाणं त्रीणि योजनशतसहस्राणि सप्तदश सहस्राणि अष्टौ शतानि पञ्चपञ्चाशदधिकानि ३१७८५५, एतत् द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां गुण्यते, जातः सप्तकः शून्यं द्विकः चतुष्कः पञ्चकः नवकः पञ्चकः पञ्चकः ७०२४५९५५, एतेषां त्रयोदशभिः सहस्रैः सप्तभिः शतैः पञ्चविंशत्यधिकैर्भागो ह्रियते, हृते च भागे लब्धानि एकपञ्चाशच्छतानि अष्टादशोत्तराणि योजनानामंशाश्चतुर्दश शतानि पञ्चोत्तराणि ५११८ $\frac{१४०५}{१३७२५}$। एवमभ्यन्तरप्रदेशे प्रतिमण्डलं परिरयपरिभावना कर्तव्येति कृता मण्डले मण्डले प्रति-

मुहूर्त्तं गतिप्रमाणप्ररूपणा (१)। सम्प्रति कालसङ्ख्यानतोऽर्धमण्डलपरिपूर्णमण्डलपूरणप्ररूपणा क्रियते— यस्मिन् तस्मिन् वा मण्डले संक्रान्तश्चन्द्र एकेनाहोरात्रेणैकमर्धमण्डलं नवभिः शतैः पञ्चदशभिरधिकैः प्रविभक्तस्यार्धमण्डलस्य सत्कैरेकत्रिंशद्भागैर्न्यूनं भ्रमणतः पूरयति। उक्तं च—एगमेगे णं भंते अहोरत्तेणं चंदमंडले कइ मंडलाइं चरइ? गोयमा! एगं अद्धमंडलं चरइ एकतीसभागेहिं ऊणं नवहियपन्नरसेहिं सएहिं अद्धमंडलं छित्ता"। परिपूर्णं पुनश्चन्द्रमण्डलं भ्रमणेन पूरयति द्वाभ्यामहोरात्राभ्यां चतुर्भिः शतैर्द्विचत्वारिंशदधिकैः प्रविभक्तस्य रात्रिंदिवस्य सत्कैरेकत्रिंशद्भागैरधिकाभ्याम्। उक्तं च—"एगमेगे णं भंते मंडलं चंदे कइहिं अहोरत्तेहिं चरइ? गोयमा! दोहिं अहोरत्तेहिं चरइ एकतीसाए भागेहिं अहिएहिं चउहिं बायालेहि सएहिं राइंदियं छित्ता"। सूर्यः पुनरेकमर्धमण्डलमेकेनाहोरात्रेण परिपूर्णेन पूरयति, परिपूर्णं मण्डलं द्वाभ्यामहोरात्राभ्याम्। उक्तं च—"एगमेगे णं भंते अहोरत्तेणं सूरे कइ मंडलाइं चरइ? गोयमा! एगं अद्धमंडलं चरइ। एगमेगे णं भंते सूरे कइहिं अहोरत्तेहिं चरइ? गोयमा! दोहिं अहोरत्तेहिं चरइ"। कृता कालसङ्ख्यानतोऽर्धमण्डलपरिपूर्णमण्डलपूरणप्ररूपणा (२)। सम्प्रति साधारणासाधारणमण्डलप्ररूपणा क्रियते—चन्द्रमसः पञ्चदश मण्डलानि। तत्र प्रथमं तृतीयं षष्ठं सप्तममष्टमं दशममेकादशं पञ्चदशमित्येतानि अष्टौ मण्डलानि सर्वकालं नक्षत्रैरविरहितानि, किमुक्तं भवति? एतेषु चन्द्रसत्केषु अष्टसु मण्डलेषु नक्षत्राण्यपि चारं चरन्तीति। उक्तं च—"तत्थ जे चंदमंडला सया नक्खत्तेहिं अविरहिया, ते णं अट्ठ, तं जहा—पढमे चंदमंडले तइए चंदमंडले छट्ठे चंदमंडले सत्तमे चंदमं-

ण्डले अट्ठमे चंदमंडले दसमे चंदमंडले एक्कारसमे चंदमंडले पन्नरसमे चंदमंडले" इति । अत्र सङ्ग्रहणी-गाथा—"एक्कतिगछक्कसत्तग-अट्ठदसिक्कारपन्नरस चेव । नक्खत्तेहिं समेया, मंडलगा अट्ठ चंदस्स ॥ १ ॥" एतान्येव च वक्ष्यमाणानि नक्षत्राणामष्टौ मण्डलानि ज्ञातव्यानि । सप्त मण्डलानि पुनः सर्वदैव नक्षत्र-विरहितानि ज्ञातव्यानि, तद्यथा—द्वितीयं चतुर्थं पञ्चमं नवमं द्वादशं त्रयोदशं चतुर्दशं च । अत्र सङ्ग्र-हणी गाथा—"दुगचउपणनववारस-तेरसचोद्दसगमंडला पन्नत्ता । नक्खत्तेहिं विरहिया, विन्नेया सव्व-कालम्मि ॥ १ ॥" चत्वारि पुनर्मण्डलानि रविनक्षत्राणामपि साधारणानि, तद्यथा—प्रथमं तृतीयं एका-दशं पञ्चदशं च । उक्तं च—"जे णं चंदमंडला रविससिनक्खत्ताणं सामन्ना ते णं चत्तारि, तं जहा—पढमे चंदमंडले तइए चंदमंडले एक्कारसमे चंदमंडले पन्नरसमे चंदमंडले" इति । अत्र सङ्ग्रहणी गाथा—पढमं तइयं एक्का-रसं च पन्नरसमेव चत्तारि । रविससिनक्खत्ताणं, सामन्ना मंडला होंति ॥ १ ॥" पञ्च पुनश्चन्द्रमसो मण्डलानि सदैव सूर्यविरहितानि, तद्यथा—षष्ठं सप्तममष्टमं नवमं दशमं (च) । उक्तं च—"तत्थ णं जे ते चंदमंडला सया आइच्चेहिं विरहिया ते णं पंच, तं जहा—छट्ठे चंदमंडले सत्तमे चंद-मंडले अट्ठमे चंदमंडले नवमे चंदमंडले दसमे चंदमंडले" इति । अत्र सङ्ग्रहणी गाथा—"छट्ठं सत्तममट्ठम, नवमं दसमं च मंडला पंच । आइच्चेहिं विरहिया, नायव्वा सव्वकालं पि ॥ १ ॥" कृता साधारणासा-धारणमण्डलप्ररूपणा ( ४ ) । ( इति मण्डलचारप्ररूपणा ) ॥ ४ ॥

सम्प्रति मण्डलगतवृद्धिहानिप्रतिज्ञासप्ररूपणा क्रियते—इह चन्द्रमण्डलं सर्वदा स्वरूपेणावस्थितस्व-

भावं, न तस्य हानिर्वृद्धिर्वा तात्त्विकी, केवलं या शुक्लपक्षे चन्द्रमण्डलस्य वृद्धिः प्रतिभासते कृष्णपक्षे च हानिः सा राहुविमानेनावरणानावरणयोगतः प्रत्यवसेया। तथाहि—द्विविधो राहुः, तद्यथा—ध्रुवराहुः पर्वराहुश्च। तत्र यो ध्रुवराहुस्तस्य विमानं कृष्णं, तच्च सर्वदा चन्द्रमण्डलस्याधोभागेन चतुरङ्गुलमसंप्राप्तं सञ्चारं चरति, केवलं कदाचिच्छनैः शनैरावृण्वच्चारं चरति, कदाचिदनावृण्वत् ( च ), ततश्चन्द्रमण्डलस्य वृद्धिहानिप्रतिभासः। उक्तं च—"चंदस्स नेव हाणी, न वि वुड्ढी वा अवट्ठिओ चंदो। सुक्किलभावस्स पुणो, दीसइ वुड्ढी य हाणी य॥ १॥ किण्हं राहुविमाणं, निच्चं चंदेण होइ अविरहियं। चउरंगुलमप्पत्तं, हिच्चा चंदस्स तं चरइ॥ २॥ तेणं वड्ढइ चंदो, परिहाणी वावि होइ चंदस्स।" तत्र कालविभागनियमेनावरणप्रदर्शनं क्रियते—इह चन्द्रविमानं द्वाषष्टिसङ्ख्यैर्भागैः परिकल्प्यते, परिकल्प्य च तेषां भागानां पञ्चदशभिर्भागो ह्रियते, हृते च भागे लब्धाश्चत्वारो द्वाषष्टिभागाः, शेषौ द्वौ भागौ तिष्ठतः, तौ च सदाऽनावृतौ, एषा किल चन्द्रमसः षोडशी कलेति प्रसिद्धिः। तत्र कृष्णपक्षे प्रतिपदि ध्रुवराहुविमानं चन्द्रमण्डलस्याधोभागेन चतुरङ्गुलमसंप्राप्तं चारं चरत् आत्मीयेन पञ्चदशेन भागेन द्वौ द्वाषष्टिभागौ सदाऽनावार्यस्वभावौ मुक्त्वा शेषद्वाषष्टिसत्कषष्टिभागात्मकस्य चन्द्रमण्डलस्य सत्कं चतुर्भागात्मकं पञ्चदशभागमावृणोति, द्वितीयस्यामात्मीयाभ्यां द्वाभ्यां पञ्चदशभागाभ्यां द्वौ पञ्चदशभागौ, तृतीयस्यामात्मीयैस्त्रिभिः पञ्चदशभागैस्त्रीन् पञ्चदशभागान्, एवं यावदमावास्यायां पञ्चदशभागानावृणोति। ततः शुक्लपक्षे प्रतिपदि एकं पञ्चदशभागं प्रकटीकरोति, द्वितीयस्यां द्वौ पञ्चदशभागौ, तृतीयस्यां त्रीन् पञ्चद-

शभागान्, एवं यावत् (पूर्णिमायां) पञ्चदशापि भागानावृतान् करोति, तदा च सर्वात्मना परिपूर्णं चन्द्रमण्डलं लोके प्रकटं भवति। उक्तं च—"कइविहे णं भंते राहू पन्नत्ते? गोयमा! दुविहे राहू पन्नत्ते—धुवराहू पव्वराहू य। तत्थ णं जे से धुवराहू से णं बहुलपक्खस्स पाडिवए आरब्भ पन्नरसइ भागेणं पन्नरसभागं पन्नरसभागमावरेमाणे आवरेमाणे चिट्ठइ, तं जहा—पढमाए पढमभागं बिइयाए बिइयं भागं जाव पन्नरसीए पन्नरसं भागं, तं चेव सुक्कपक्खे उवदंसेमाणे उवदंसेमाणे चिट्ठइ, तं जहा—पढमाए पढमभागं बिइयाए बिइयं भागं जाव पन्नरसीए पन्नरसं भागं" इति। यस्तु पर्वराहुः स यथायोगं कालविशेषेऽधोभागेन व्रजन् चन्द्रमण्डलं सूर्यमण्डलं वाऽऽवृण्वन् गच्छति, स च जघन्यतश्चन्द्रमण्डलस्य सूर्यमण्डलस्य चाधोभागेन लेश्यामावृण्वन् गच्छति षण्णां मासानामन्ते, उत्कर्षतो द्विचत्वारिंशन्मासानामन्ते चन्द्रमण्डलस्य, अष्टाचत्वारिंशत्संवत्सराणामन्ते सूर्यमण्डलस्य। उक्तं च—"तत्थ णं जे से पव्वराहू से जहन्नेणं छण्हं मासाणं उक्कोसेणं बायालीसाए मासाणं चंदस्स अडयालीसाए संवच्छराणं सूरस्स"। तत्र यदा राहुनामा देव आगच्छन् गच्छन् वा सूर्यस्य चन्द्रस्य वा लेश्यामावृणोति तदा मनुष्यलोके मनुष्या वदन्ति राहुणा चन्द्रः सूर्यो वा गृहीतः। यदा तु राहुश्चन्द्रस्य सूर्यस्य वा लेश्यामावृत्य पार्श्वेन गच्छति तदैवं मनुष्यलोकप्रवादो यथा चन्द्रेण सूर्येण वा राहोः कुक्षिर्विभिन्नेति। यदा तु राहुदेव आगच्छन् गच्छन् वा सूर्यस्य चन्द्रमसो वा लेश्यामावृत्य प्रत्यवष्वष्कते तदा वदन्ति मनुष्यलोके मनुष्या यथा राहुणा चन्द्रः सूर्यो वा वान्त इति। यदाऽऽगच्छन् गच्छन् वा राहुदेवश्चन्द्रस्य सूर्यस्य वा लेश्यामावृत्य मध्येन गच्छति

तदैवं मनुष्यलोके मनुष्याणामुक्तिर्यथा राहुणा चन्द्रः सूर्यो वा विभिन्नः । यदा तु सर्वात्मना चन्द्रस्य सूर्यस्य वा लेश्यामावृणोति राहुदेवस्तदैवं मनुष्यलोके मनुष्या ज्ञापन्ते यथा चन्द्रः सूर्यो वा राहुणा ग्रस्त इति । उक्तं च चन्द्रप्रज्ञप्त्यादिषु—"जया णं राहू देवे आगच्छमाणे वा गच्छमाणे वा विउव्वेमाणे वा परियारेमाणे वा चंदस्स वा सूरस्स वा लेसमावरेइ तया णं मणुस्सलोगे मणुस्सा वयंति—राहुणा चंदे वा सूरे वा गहिए । जया णं राहुदेवे आगच्छमाणे वा गच्छमाणे वा विउव्वेमाणे वा परियारेमाणे वा चंदस्स वा सूरस्स वा लेसमावरित्ता पासेणं विइवयइ तया णं मणुस्सलोए मणुस्सा वयंति—चंदेण वा सूरेण वा राहुस्स कुच्छी भिन्ना । जया णं राहुदेवे आगच्छमाणे वा गच्छमाणे वा विउव्वेमाणे वा परियारेमाणे वा चंदस्स वा सूरस्स वा लेसमावरित्ता पच्चोसक्कइ तया णं मणुस्सलोए मणुस्सा वयंति—राहुणा चंदे वा सूरे वा वंते । जया णं राहू देवे आगच्छमाणे वा गच्छमाणे वा विउव्वेमाणे वा परियारेमाणे वा चंदस्स वा सूरस्स वा लेसमावरित्ता मज्झंमज्झेणं विइवयइ तया णं मणुस्सलोए मणुस्सा वयंति—राहुणा चंदे वा सूरे वा वइचरिए । जया णं राहुदेवे आगच्छमाणे वा गच्छमाणे वा विउव्वेमाणे वा परियारेमाणे वा चंदस्स वा सूरस्स वा लेसमावरित्ता णं अहे सपक्खे सपडिदिसिं चिट्ठंति तया णं मणुस्सलोए मणुस्सा वयंति—राहुणा चंदे वा सूरे वा घत्थे" इति । एष च राहुनामा देवः परिपूर्णसर्वाङ्गो वरवस्त्रधारी वरमाल्याभरणविभूषितो महर्द्धिको, न तु शिरोमात्रं यथा प्राहुरज्ञानिनो लोकाः । कृता मण्डलगतवृद्धिहानिप्रति-

भासप्ररूपणा ॥ ५ ॥ अत ऊर्ध्वं प्रभूतं नक्षत्रयोगादिकं चन्द्रमसो वक्तव्यमस्ति, परं तच्चन्द्रप्रज्ञप्त्यादिटीकाभ्योऽवसेयम्, इह ग्रन्थगौरवभयान्न लिख्यते । समाप्ता चन्द्रमण्डलवक्तव्यता ॥

सम्प्रति नक्षत्रप्ररूपणा कर्तव्या—तत्रैकस्य शशिनः परिवारभूतान्यष्टाविंशतिनक्षत्राणि, उक्तं च—"नक्खत्तअट्ठवीसं, अट्ठासई महग्गहा भणिया । एक्कससीपरिवारो०," इति । जम्बूद्वीपे च द्वौ चन्द्रमसौ, ततः षट्पञ्चाशन्नक्षत्राण्युपदिष्टानि । तत्राष्टाविंशतिनक्षत्राणाममूनि नामानि, तद्यथा—अभिजिन्नक्षत्रं श्रवणनक्षत्रं धनिष्ठा शतभिषक् पूर्वभद्रपदा उत्तरभद्रपदा रेवती अश्विनी भरणी कृत्तिका रोहिणी मृगशिर आर्द्रा पुनर्वसु पुष्यमश्लेषा मघा पूर्वाफाल्गुनी उत्तराफाल्गुनी हस्तं चित्रा स्वातिः विशाखा अनुराधा ज्येष्ठा मूलं पूर्वाषाढा उत्तराषाढा । तत्राभिजिन्नक्षत्रं त्रितारं, श्रवणनक्षत्रं त्रितारं, धनिष्ठानक्षत्रं पञ्चतारं, शतभिषग्नक्षत्रं शततारं, पूर्वभद्रपदानक्षत्रं द्वितारं, उत्तरभद्रपदानक्षत्रं द्वितारं, रेवतीनक्षत्रं द्वात्रिंशत्तारं, अश्विनीनक्षत्रं त्रितारं, भरणीनक्षत्रं त्रितारं, कृत्तिकानक्षत्रं षट्तारं, रोहिणीनक्षत्रं पञ्चतारं, मृगशिरोनक्षत्रं त्रितारं, आर्द्रानक्षत्रमेकतारं, पुनर्वसुनक्षत्रं पञ्चतारं, पुष्यनक्षत्रं त्रितारं, अश्लेषानक्षत्रं षट्तारं, मघानक्षत्रं सप्ततारं, पूर्वाफाल्गुनीनक्षत्रं द्वितारं, उत्तराफाल्गुनीनक्षत्रं द्वितारं, हस्तनक्षत्रं पञ्चतारं, चित्रानक्षत्रमेकतारं, स्वातिनक्षत्रमेकतारं, विशाखानक्षत्रं पञ्चतारं, अनुराधानक्षत्रं चतुस्तारं, ज्येष्ठानक्षत्रं त्रितारं, मूलनक्षत्रमेकादशतारं, पूर्वाषाढानक्षत्रं चतुस्तारं, उत्तराषाढानक्षत्रं चतुस्तारम् । तथा चात्र जम्बूद्वीपप्रज्ञप्तिसत्का सङ्ग्रहणीगाथा (द्वयम्)—"तिग तिग पंचग सय दुग, दुग वत्तीसग

तिगं तह तिगं च । छप्पंचग तिग एक्कगं, पंचग तिग छक्कगं चेव ॥ १ ॥ सत्तग दुग दुग पंचग, एक्केक्कग पंच चउ तिगं चेव । एक्कारसग चउक्कं, चउक्कगं चेव तारग्गं ॥ २ ॥' अमीषां चाष्टाविंशतिनक्षत्राणां संस्थानान्यमूनि, तद्यथा—अभिजिन्नक्षत्रं गोशीर्षसंस्थानसंस्थितं, श्रवणनक्षत्रं कासारसंस्थानसंस्थितं, धनिष्ठानक्षत्रं शकुनिपञ्जरसंस्थानं, शतभिषग्नक्षत्रं पुष्पोपचारसंस्थानं, पूर्वभद्रपदानक्षत्रमर्धवापीसंस्थानम्, उत्तरभद्रपदानक्षत्रमर्धवापीसंस्थानं, रेवतीनक्षत्रं नौसंस्थानं, अश्विनीनक्षत्रमश्वस्कन्धसंस्थानं, भरणीनक्षत्रं भगसंस्थानं, कृत्तिकानक्षत्रं क्षुरधारसंस्थानं, रोहिणीनक्षत्रं शकटोद्धिसंस्थानं, मृगशिरोनक्षत्रं मृगशीर्षसंस्थानं, आर्द्रानक्षत्रं रुधिरविन्दुसंस्थानं, पुनर्वसुनक्षत्रं तुलासंस्थानं, पुष्यनक्षत्रं सुप्रतिष्ठितवर्धमानकसंस्थानं, अश्लेषानक्षत्रं पताकासंस्थानं, मघानक्षत्रं प्राकारसंस्थानं, पूर्वफाल्गुनीनक्षत्रमर्धपल्यङ्कसंस्थानं, उत्तरफाल्गुनीनक्षत्रमप्यर्धपल्यङ्कसंस्थानं, हस्तनक्षत्रं हस्तसंस्थानं, चित्रानक्षत्रं मुखमण्डलसुवर्णपुष्पसंस्थानं, स्वातिनक्षत्रं कीलकसंस्थानं, विशाखानक्षत्रं दामनीसंस्थानं, अनुराधानक्षत्रमेकावलीसंस्थानं, ज्येष्ठानक्षत्रं गजदन्तसंस्थानं, मूलनक्षत्रं वृश्चिकलाङ्गूलसंस्थानं, पूर्वाषाढानक्षत्रं गजविक्रमसंस्थानं, उत्तराषाढानक्षत्रं सिंहनिषीदनसंस्थानसंस्थितम् । तथा चात्र जम्बूद्वीपप्रज्ञप्तिसङ्ग्रहणीगाथाः—

"गोसीसावलिका हार, सउणि पुप्फोवयार वावीया । नावा आसखंध भग, छुरधरए य सगडुद्धी ॥ १ ॥ मिगसीसावलि तह रुहिर विंदुल वद्धमाणग पडागा । पागारे पलियंके, हत्थे मुहफुल्लए चेव ॥ २ ॥ खीलग दामणि एगा-वली य गयदंत विच्छुयअले य । गयविक्कमे य तत्तो, सीहनिसाईयसंगणा ॥३॥ "

नक्षत्राणां सामान्यतोऽष्टौ मण्डलानि, तत्र द्वे मण्डले जम्बूद्वीपे, षट् लवणसमुद्रे ( च )। मण्डलक्षेत्रस्य चक्रवालतया विष्कम्भः पञ्च योजनशतानि दशोत्तराणि । तथाहि—यच्चन्द्रमसः सर्वाभ्यन्तरं मण्डलं तन्नक्षत्राणामपि सर्वाभ्यन्तरं मण्डलं, यच्च सर्वबाह्यं पञ्चदशं मण्डलं तन्नक्षत्राणां सर्वबाह्यमष्टमं मण्डलम्। उक्तं च—"एए णं भंते अट्ठ नक्खत्तमंडला कइ चंदमंडलेहिं समोयरंति ? गोयमा ! अट्ठहिं चंदमंडलेहिं समोयरंति—पढमे चंदमंडले तइए चंदमंडले छट्ठे सत्तमे अट्ठमे दसमे एक्कारसमे पन्नरसमे चंदमंडले" इति । सर्वमपि च नक्षत्रं सर्वकालमेकस्मिन्नेव प्रतिनियते आत्मीये मण्डले चरति । उक्तं च—"नक्खत्ततारगाणं, अवट्ठिया मंडला मुणेयव्वा । तच्चिय पयाहिणावत्तमेव मेरुं अणुचरंति ॥ १ ॥" एकेन चाहोरात्रेण सर्वमपि नक्षत्रमात्मीयस्य मण्डलस्यार्धं भ्रमणेन पूरयति सप्तभिः शतैर्द्वात्रिंशदधिकैः प्रविभक्तस्यार्धमण्डलस्य सत्काभ्यां द्वाभ्यां भागाभ्यामधिकम्, परिपूर्णं पुनरात्मीयमात्मीयं मण्डलमेकैकं नक्षत्रं भ्रमणेन पूरयति द्वाभ्यामहोरात्राभ्यां त्रिभिः सप्तषष्ट्यधिकैः शतैः प्रविभक्तस्य अहोरात्रस्य सत्काभ्यां द्वाभ्यां भागाभ्यामूनाभ्याम्। उक्तं च—"एगमेगे णं भंते अहोरत्तेणं नक्खत्तेणं कइ मंडलाइं चरइ ? गोयमा ! एगं अद्धमंडलं चरइ दोहिं भागेहिं अहियं सत्तहि उ बत्तीसेहिं सएहिं अद्धमंडलं छित्ता । एगमेगे णं भंते मंडलं नक्खत्ते कइहिं अहोरत्तेहिं चरइ ? गोयमा ! दोहिं अहोरत्तेहिं चरइ दोहिं भागेहिं ऊणेहिं तिहि य सत्तट्ठेहिं सएहिं राइंदियं छित्ता" । कृता नक्षत्रप्ररूपणा ग्रहाश्चैकैकस्य शशिनः परिवा-

रज्जूता अष्टाशीतिः, ततो द्वयोश्चन्द्रमसोः परिवारे षट्सप्तत्यधिकं ग्रहशतं भवति । तथा एकस्य शशिनस्तारागणपरिवारः कोटीकोटीनां षट्षष्टिः सहस्राणि नव शतानि पञ्चसप्तत्यधिकानि । उक्तं च सूर्यप्रज्ञप्तौ—"छावट्ठि सहस्साइं, नव चेव सयाइं पंचसयराइं । एगससीपरिवारो, तारागणकोडिकोडीणं ॥ १ ॥" उभयोश्च शशिनोस्तारागणपरिवारः समुदितो यथोक्तपरिमाणो भवति ॥ ३९५–३९६ ॥

सम्प्रति जम्बूद्वीपवक्तव्यतोपसंहारमाह—

जंबूद्दीवो नामं, खेत्तसमासस्स पढम अहिगारो ।
पढमे जाण समत्तो, ताण समत्ताइं दुक्खाइं ॥ ३९७ ॥

व्याख्या—क्षेत्रसमासस्य क्षेत्रसमासाभिधानस्य प्रथमो जम्बूद्वीपो नामाधिकारो येषां पाठकानां पाठे पठनमधिकृत्य, उपलक्षणमेतत्, बोधमधिकृत्य च समाप्तः परिसमाप्तिमुपगतस्तेषां दुःखानि कष्टानि समाप्तानि, एष एव हि प्रायः प्रथमो जम्बूद्वीपनामाऽधिकारः पठने बोधने च महादुर्गस्तत एतस्मिन् पठितेऽवबुद्धे वा सकलमपि प्रकरणं प्रायः पठितमवबुद्धं च भवतीति भवति समस्तकष्टपरिसमाप्तिः ॥३९७॥

साम्प्रतमस्मिन्नधिकारे गाथापरिमाणमाह—

गाहाणं तिन्नि सया, अट्ठाणउया य होंति नायव्वा ।
जंबूद्दीवसमासो, गाहग्गेणं विणिद्दिट्ठो ॥ ३९८ ॥

व्याख्या—जम्बूद्वीपवक्तव्यतासमासप्रतिपादकः प्रथमोऽधिकारो गाथाग्रेण परिमाणेन निर्दिष्टो यथा—त्रीणि शतानि अष्टनवत्यधिकानि गाथानां भवन्ति ज्ञातव्यानि ॥ ३९८ ॥

॥ इति श्रीमलयगिरिविरचितायां क्षेत्रसमासटीकायां जम्बूद्वीपनामा प्रथमोऽधिकारः ॥ १ ॥

---

## ॥ अथ लवणसमुद्रनामा द्वितीयोऽधिकारः ॥ २ ॥

सम्प्रति लवणसमुद्रवक्तव्यतामाह—

**दो लक्खा विच्छिन्नो, जंबूद्दीवं विढिउं परिक्खिविउं ।**
**लवणे दारा वि य से, विजयाइं होंति चत्तारि ॥ १ ॥**

व्याख्या—लवणो लवणोदः समुद्रो जम्बूद्वीपं परिक्षिप्य वेष्टयित्वा स्थितः । अथ कस्माल्लवणोद इति व्यपदिश्यते ? उच्यते—अस्योदकस्य लवणात्मकत्वात्, ततो लवणमुदकं यस्येति व्युत्पत्त्या लवणोद इति व्यपदिश्यते । उक्तं च—“से केणट्ठेणं भंते एवं वुच्चइ लवणे समुद्दे इति ? गोयमा ! लवणस्स समुद्दस्स उदए खारे कडुए अपिज्जे बहूणं दुप्पयचउप्पयमिगसरीसिवाणं नन्नत्थ तन्निसियाणं सत्ताणं से एएणट्ठेणं गोयमा एवं वुच्चइ लवणे समुद्दे” इति । स च लवणसमुद्रश्चक्रवालतया विस्तीर्णो द्वे लक्षे योजनानाम् । तथा तस्य लवणसमुद्रस्य द्वाराणि भवन्ति चत्वारि, तानि च पूर्वादिक्रमेण विजयादीनि विजयादि-

नामानि, तद्यथा—पूर्वस्यां दिशि धातकीखण्डपूर्वार्धस्य पश्चिमतः शीतोदाया महानद्या उपरि विजयं, दक्षिणस्यां दिशि धातकीखण्डद्वीपदक्षिणार्धस्योत्तरतो वैजयन्तं, पश्चिमायां दिशि धातकीखण्डपश्चिमार्धस्य पूर्वतः शीताया महानद्या उपरि जयन्तं, उत्तरस्यां दिशि धातकीखण्डद्वीपोत्तरार्धस्य दक्षिणतोऽपराजितम्। अमूनि च द्वाराणि प्रत्येकमष्टौ योजनान्युच्चैस्त्वेन चत्वारि योजनानि विष्कम्भतः। अथ कस्मात् पूर्वदिग्वर्तिद्वारं विजयमित्यभिधीयते? उच्यते—तत्र विजयनामा देवश्चतुर्णामिन्द्रसामानिकसहस्राणां चतसृणामग्रमहिषीणां सपरिवाराणां तिसृणां पर्षदां सप्तानामनीकानां सप्तानामनिकाधिपतीनां षोडशानामात्मरक्षकदेवसहस्राणामन्येषां च बहूनां देवानां देवीनां च विजयाभिधनगरीवास्तव्यानामाधिपत्यं परिपालयन् वर्तते, तेन तद्विजयमित्यभिधीयते। एवं शेषाण्यपि वैजयन्तादीनि द्वारनामानि भावनीयानि। तत्र विजयदेवस्य विजयाभिधा नगरी विजयद्वारस्य पूर्वतस्तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्यापरस्मिन् लवणसमुद्रे द्वादश योजनसहस्राणि अवगाह्य परतो वेदितव्या। उक्तं च—"कहि णं भंते विजयस्स देवस्स विजया णाम रायहाणी पन्नत्ता? गोयमा! विजयदारस्स पुरच्छिमेणं तिरियमसंखेज्जदीवसमुद्दे वीइवइत्ता अन्नम्मि लवणसमुद्दे बारस जोयणसहस्साइं ओगाहित्ता एत्थ णं विजयस्स देवस्स विजया णाम रायहाणी पन्नत्ता" इत्यादि। एवं वैजयन्तादीनामपि वैजयन्तादिका नगर्योऽपरस्मिन् लवणसमुद्रे प्रतिपत्तव्याः, नवरं वैजयन्ता नगरी वैजयन्तदेवस्य वैजयन्तद्वाराद्दक्षिणतः, जयन्तदेवस्य जयन्ता नगरी जयन्तद्वारस्य पश्चिमदिशि, अपराजितदेवस्यापराजिता नगरी अपराजितद्वारस्योत्तरतः॥१॥

सम्प्रति लवणसमुद्रस्य परिमाणमाह—

पन्नरस सयसहस्सा, एगासीई नवे सहस्साइं ।
इयालीसं च सयं, लवणजले परिरउ होइ ॥ २ ॥

व्याख्या—पञ्चदश शतसहस्राणि एकाशीतिः सहस्राणि एकोनचत्वारिंशमेकोनचत्वारिंशदधिकं शतं किञ्चिदूनमिति शेषः १५८११३९ योजनानामिति लवणजले लवणोदसमुद्रे परिरयो भवति । तथाहि—लवणसमुद्रस्य सामस्त्येन विष्कम्भपरिमाणं पञ्च योजनलक्षाः, यत एकतोऽपि चक्रवालतया विष्कम्भो द्विलक्षप्रमाणोऽपरतोऽपि द्विलक्षप्रमाण इति चतस्रो लक्षाः, जम्बूद्वीपस्य च विष्कम्भो योजनलक्षमिति सर्वमीलने लक्षाः पञ्च भवन्ति ५०००००। एतेषां वर्गे जाताः पञ्चविंशतिर्दश शून्यानि २५००००००००००, दशभिर्गुण्यते, जातानि एकादश शून्यानि २५०००००००००००। एतस्य राशेर्वर्गमूलानयने लब्धाः पञ्चदश लक्षा एकाशीतिः सहस्राणि शतमेकोनचत्वारिंशदधिकं किञ्चिदूनं १५८११३९ । उक्तं च सूर्यप्रज्ञप्तौ—"पन्नरस सयसहस्सा, एगासीया सयं च इयालं। किंचि विसेसेणूणं, लवणोदहिणो परिक्खेवो॥१॥"इति ॥२॥

सम्प्रति विजयादीनां द्वाराणामन्तरं परिमाणतः प्रतिपादयति—

अा ( अ ) सीया दोन्नि सया, पणणउइ सहस्स तिन्नि लक्खाइं ।
कोसो एगं अंतरं, सागरस्स दाराण विन्नेयं ॥ ३ ॥

व्याख्या—सागरस्य लवणोदसागरस्य संबन्धिनां द्वाराणां परस्परमन्तरं विज्ञेयं—तिस्रो लक्षाः पञ्चनवतिः सहस्राणि द्वे शते अशीत्यधिके योजनानामेकश्च क्रोशः ( ३९५२८० को० १ )। तथाहि—एकैकस्य द्वारस्य पृथुत्वं चत्वारि योजनानि, एकैकस्मिंश्च द्वारे एकैका द्वारशाखा क्रोशबाहल्या, द्वारे ( द्वारे ) च द्वे द्वे शाखे, तत एकैकस्मिन् द्वारे पृथुत्वं सामस्त्येन चिन्त्यमानं सार्धयोजनचतुष्टयप्रमाणं प्राप्यते, चतुर्णामपि च द्वाराणामेकत्र पृथुत्वमीलने जातान्यष्टादश योजनानि, तानि लवणसमुद्रपरिरयपरिमाणात्प्रागुक्तादपनीयन्ते, अपनीय च यच्छेषं तस्य चतुर्भिर्भागे हृते यदागच्छति तत् द्वाराणां परस्परमन्तरपरिमाणं भवति, तच्च यथोक्तमिति। उक्तं च—"लवणस्स णं भंते समुद्दस्स केवइए दारस्स य दारस्स य आबाहाए अंतरे पन्नत्ते ? गोयमा ! तिन्नि जोयणसयसहस्साइं पंचाणउइं जोयणसहस्साइं दोण्णि असीए जोयणसए कोसं च दारस्स दारस्स अबाहाए अंतरे पन्नत्ते" इति ॥ ३ ॥

इह प्रतिदिवसं कदाचिदुदकमतिरेकेण लवणसमुद्रे परिवर्धते, कदाचिद्धीयते, तथा केषुचिद्दिवसेषु प्रभूतं वर्धते, केषुचित्स्तोकं, तत्र च कारणं पातालकलशगतवायुक्षोभादिकमतः पातालकलशवक्तव्यतामाह—

पणनउइ सहस्साइं, उगाहित्ता चउदिसिं लवणं।
चउरोऽलिंजरसंठाण-संठिया हुंति पायाला ॥ ४ ॥

व्याख्या—मन्दरपर्वतस्य चतसृषु पूर्वादिषु दिक्षु प्रत्येकं जम्बूद्वीपवेदिकातः परतः पञ्चनवतिं पञ्च-

नवतिं योजनसहस्राणि लवणसमुद्रमवगाह्यात्रान्तरे चतसृषु पूर्वादिषु दिक्षु प्रत्येकमेकैकत्वेन चत्वारः पातालाः पदैकदेशे पदसमुदायोपचारात् पातालकलशाः, ते च किंसंस्थाना इत्याह—अलिञ्जरसंस्थान-संस्थिता महापिठरसंस्थानसंस्थिताः। उक्तं च—"जंबूदीवे णं दीवे मंदरस्स पव्वयस्स चउद्दिसिं लवण-समुद्दं पंचाणउइ पंचाणउइ जोयणसहस्साइ ओगाहित्ता एत्थ णं चत्तारि महइमहालिया महालिंजरसं-ठाणसंठिया महापायालकलसा पन्नत्ता" इति ॥ ४ ॥

सम्प्रत्येतेषां नामादिकमाह—

वलयमुहे केऊए, जुयए तह ईसरे य बोधव्वे।
सव्वरयणामया णं, कूडा एएसि दससइया ॥ ५ ॥

व्याख्या—मेरोः पूर्वस्यां दिशि पातालकलशो वडवामुखो वडवामुखनामा, दक्षिणस्यां केयूपः, अपरस्यां यूपः, उत्तरस्यामीश्वरः, एते चत्वारोऽपि सर्ववज्रमयाः सर्वात्मना वज्रमयाः, तेषां च वज्रमयानां कुड्यानि ठिक्करिकाः सर्वत्र बाहल्यमधिकृत्य दशशतिकानि दशयोजनशतप्रमाणानि। उक्तं च—"तेसिं महापायालाणं कूडा सव्वत्थ समा दसजोयणसयबाहल्ला पन्नत्ता" इति ॥ ५ ॥

जोयणसहस्सदसगं, मूले उवरिं च होंति विच्छिन्ना।
मज्झे य सयसहस्सं, तत्तियमेत्तं च ओगाढा ॥ ६ ॥

व्याख्या—चत्वारोऽपि महापातालकलशा मूले बुध्ने उपरि मुखे प्रत्येकं योजनसहस्रदशकं दश योजनसहस्राणि १०००० विस्तीर्णा भवन्ति, मध्ये उदरप्रदेशे पुनः शतसहस्रं योजनलक्षं विस्तीर्णाः, तथा तावन्मात्रं योजनलक्षमात्रमवगाढा भूमौ प्रविष्टाः ॥ ६ ॥

साम्प्रतं महापातालकलशानां परस्परमन्तरं वक्तव्यं तच्च लवणसमुद्रमध्यभागपरिरयपरिज्ञाने सुज्ञानं भवति, नान्यथा, ततो लवणसमुद्रमध्यभागपरिरयं विवक्षुः सामान्यतः सर्वद्वीपसमुद्राणां मध्यभागपरिरयस्यानयनाय करणमाह—

अब्भिंतरबज्झाणं, तु परिरयाणं समासमद्धं जं ।
तं मज्झम्मि परिरओ, दीवसमुद्दाण सव्वेसिं ॥ ७ ॥

व्याख्या—सर्वेषां द्वीपानां समुद्राणां च योऽभ्यन्तरः परिरयो यश्च बाह्यस्तयोः समासे एकत्र मीलने कृते सति यदर्धं तत् मध्ये परिरयः परिरयपरिमाणं भवति । तत्र लवणसमुद्रस्याभ्यन्तरः परिरयो जम्बूद्वीपपरिधिः, स च त्रीणि शतसहस्राणि षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके योजनानां ३१६२२७, शेषं न विवक्षितं, बाह्यपरिरयः पञ्चदश लक्षा एकाशीतिः सहस्राणि शतमेकमेकोनचत्वारिंशदधिकं १५८११३९, अनयोरेकत्र मीलने जातानि अष्टादश लक्षाणि सप्तनवतिसहस्राणि त्रीणि शतानि षट्षष्ठ्यधिकानि १८९७३६६, एतेषामर्धे लब्धा नव लक्षा अष्टाचत्वारिंशत्सहस्राणि षट् शतानि त्र्यशीत्यधि-

कानि ९४८६८३, एतत् लवणसमुद्रस्य मध्यभागपरिरयपरिमाणम् । एवं सर्वद्वीपसमुद्रेषु भावनीयम् ॥७॥

सम्प्रत्यनन्तरोक्तमेव लवणसमुद्रमध्यभागपरिरयपरिमाणमाह—

अडयालीस सहस्सा, तेसीया छस्सया य नव लक्खा ।
लवणस्स मज्झपरिही, पायालमुहा दस सहस्सा ॥ ८ ॥

व्याख्या—लवणस्य समुद्रस्य मध्यभागे परिधिर्नव लक्षा अष्टाचत्वारिंशत्सहस्राणि षट् शतानि त्र्यशीत्यधिकानि ९४८६८३ । तथा पातालकलशानां मुखानि प्रत्येकं दश सहस्राणि दशयोजनसहस्रप्रमाणानि ॥८॥

ततः किमित्याह—

मज्झिल्लपरिरयाओ, पायालमुहेहि सुद्धसेसं जं ।
चउहि विहत्ते सेसं, जं लद्धं अंतरमुहाणं ॥ ९ ॥

व्याख्या—सर्वेषां पातालकलशमुखानामेकत्र परिमाणमीलने जातानि चत्वारिंशद्योजनसहस्राणि, तैः पातालमुखैः पातालमुखपरिमाणैः चत्वारिंशद्योजनसहस्रैर्लवणसमुद्रमध्यपरिरयात् नव लक्षा इत्यादिरूपादनन्तरोक्तात् शुद्ध्यत् शेषमवतिष्ठते नव लक्षा अष्टौ सहस्राणि षट् शतानि त्र्यशीत्यधिकानि ९०८६८३, तस्मिन् चतुर्भिर्विभक्ते सति यल्लब्धं द्वे लक्षे सप्तविंशतिः सहस्राणि शतमेकं सप्तत्यधिकं २२७१७० योजनानां त्रयश्च चतुर्भागा योजनस्य, एतदन्तरं मुखानां पातालकलशमुखानां परस्परमन्तरपरिमाणम् ॥९॥

एतदेवाह—

सत्तावीस सहस्सा, दो लक्खा सत्तरं सयं चेगं ।
तिन्नेव चउब्भागा, पायालमुहंतरं होइ ॥ १० ॥

व्याख्या—द्वे लक्षे सप्तविंशतिसहस्राणि सप्तत्यधिकं शतमेकं योजनानां त्रयश्च चतुर्भागा योजनस्य त्रीणि गव्यूतानीत्यर्थः. २२७१७० क्रो ३, एतत्पातालकलशमुखानां परस्परमन्तरम् ॥ १० ॥

साम्प्रतमेतेषां पातालकलशानामधिपतीन् देवानाह—

पलिउवमठिइयाए एसिं अहिवई सुरा इणमो ।
काले य महाकाले, वेलंब पभंजणे चेव ॥ ११ ॥

व्याख्या—एतेषां पातालकलशानामधिपतयः सुराः पल्योपमस्थितिका महर्द्धय इमे एतन्नामानः, तद्यथा—वडवामुखकलशाधिपतिः कालः, केयूपकलशाधिपतिर्महाकालः, यूपकलशाधिपतिर्वेलम्बः, ईश्वरकलशाधिपतिः प्रभञ्जनः ॥ ११ ॥

सम्प्रति लघुपातालकलशवक्तव्यतामाह—

अन्नेऽवि य पायाला, खुड्डालिंजरसंठिया लवणे ।
अट्ठ सया चुलसीया, सत्त सहस्सा य सव्वेऽवि ॥ १२ ॥

व्याख्या—लवणे समुद्रे तत्र तत्र प्रदेशे बहवोऽन्येऽपि क्षुल्ला लघवः पातालाः पातालकलशाः कुड्यालिंजरसंस्थिता लघुपिठरकसंस्थानसंस्थिताः सन्ति । उक्तं च—"अनुत्तरं च णं गोयमा लवणे समुद्दे तत्थ तत्थ देसे तहिं तहिं खुड्डालिंजरसंठाणसंठिया खुड्डा पायालकलसा पन्नत्ता" इति । ते च सर्वेऽपि सर्वसङ्ख्यया सप्त सहस्राणि अष्टौ शतानि चतुरशीत्यधिकानि ७८८४ । एते च लघुपातालकलशाः प्रत्येकमर्धपल्योपमस्थितिकैर्देवैः परिगृहीताः ॥ १२ ॥

सम्प्रत्येतेषां प्रमाणमाह—

जोयणसयविच्छिन्ना, मूलुवरिं दस सयाणि मज्झम्मि ।
उग्गाढा य सहस्सं, दस जोयणिया य सिं कुड्डा ॥ १३ ॥

व्याख्या—सर्वेऽपि लघुपातालकलशा मूले बुध्ने उपरि मुखे प्रत्येकं योजनशतं विस्तीर्णाः, मध्ये मध्यभागे जठरप्रदेशे दश शतानि योजनदशशतानि विस्तीर्णाः, तथाऽवगाढा भूमौ प्रविष्टाः सहस्रं योजनसहस्रं, तथा 'सिं' एतेषां लघुपातालकलशानां कुड्यानि ठिक्करिका बाहल्यमधिकृत्य दश योजनकानि दशयोजनप्रमाणानि ॥ १३ ॥

सम्प्रति गुरुलघुपातालकलशानां वाय्वादिविभागमाह—

पायालाण विभागा, सव्वाण वि तिन्नि तिन्नि विन्नेया ।
हिट्ठिमभागे वाऊ, मज्झे वाऊ य उदगं च ॥ १४ ॥

उवरिं उदगं भणियं, पढमगबीएसु वाउ संखुभिउं ।
उड्ढं वमेइ उदगं, परिवड्ढइ जलनिही खुहिउं ॥ १५ ॥
परिसंठियम्मि पवणे, पुणरवि उदगं तमेव संठाणं ( सट्ठाणं ) ।
वड्ढेइ तेण उदही, परिहायइ अणुकमेणं च ॥ १६ ॥

व्याख्या—सर्वेषामपि गुरूणां लघूनां च पातालकलशानां त्रयस्त्रयो विभागा भवन्ति । तद्यथा—अधस्तनो मध्यम उपरितनश्च । तत्र महापातालकलशानामेकैकस्त्रिभागस्त्रयस्त्रिंशद्योजनसहस्राणि त्रीणि शतानि त्रयस्त्रिंशदधिकानि त्रिभागश्च योजनस्य ( ३३३३३ १/३ ) । लघुपातालकलशानां त्रीणि योजनशतानि त्रयस्त्रिंशदधिकानि त्रिभागश्च योजनस्य ( ३३३ १/३ ) । एतेषु च सर्वेषु महापातालकलशेषु लघुपातालकलशेषु च प्रत्येकमधस्तने त्रिभागे वायुः, मध्यमे त्रिभागे वायुरुदकं च, उपरितने ( च ) त्रिभागे उदकं भणितं तीर्थंकरगणधरैः । तथा चोक्तं जीवाभिगमे—"हेट्ठिल्ले तिभागे वाउकाए संचिट्ठइ, मज्झिल्ले तिभागे वाउकाए आउकाए य संचिट्ठइ, उवरिल्ले तिभागे आउकाए संचिट्ठइ" इति । तत्र जगत्स्वाभाव्यादेव समकालं प्रतिनियते कालविभागे सर्वेष्वपि पातालकलशेषु प्रत्येकं प्रथमे द्वितीये च त्रिभागे बहवोऽन्ये उदारा वायवः संमूर्छन्ति चलन्ति क्षुभ्यन्ते तथा परिणमन्ति येनोर्ध्वमुदकं तैरुच्छाल्यते । उक्तं च—"तेसिं खुड्डापायालाणं महापायालाणं च हिट्ठिल्लमज्झिल्लेसु तिभागेसु बहवे उराला वाया

संसेयंति संमुछंति चलंति खुभंति तं तं भावं परिणमंति जेहि तं उदगं उड्ढं वमिज्जइ" इति । ततः प्रथमद्वितीयेषु त्रिभागेषु वायुः संक्षुब्धः सन् ऊर्ध्वमुदकं वमयति निःसारयति, तेन चोर्ध्वं निःसार्यमाणेन जलनिधिः क्षुभितः सन् परिवर्धते, परिसंस्थिते उपशमं गते पुनः पवने पुनरप्युदकं तदेव सं(स्व)स्थानमाश्रयते, भूयोऽपि कलशेषु मध्ये प्रविशतीत्यर्थः, तेन कारणेनानुक्रमेणैव परिपाट्यैव उदधिर्वर्धते परिहीयते (च) । अहोरात्रमध्ये च द्विः वायवः क्षुभ्यन्ते, तेन प्रत्यहोरात्रं द्वौ वारौ वर्धते हीयते (च) समुद्रः । उक्तं च—"लवणे णं भंते समुद्दे तीसाए मुहुत्तेणं कइखुत्तो अइरेगं वड्ढइ वा हायइ वा ? गोयमा ! दुखुत्तो अइरेगं वड्ढइ वा हायइ वा । से केणट्ठेणं एवं वुच्चइ दुखुत्तो अइरेगं वड्ढइ वा हायइ वा ? गोयमा ! उड्ढं उवमंतेसु पायालेसु वड्ढइ, आपूरिंतेसु पायालेसु हायइ, से एएणट्ठेणं गोयमा ! एवं वुच्चइ दुक्खुत्तो अइरेगं वड्ढइ वा हायइ वा" । अत्र 'आपूरितेसु त्ति' परिसंस्थिते पवने जलेनापूर्यमाणेषु कलशेषु, शेषं सुगमं, नवरं पूर्णमास्यादिषु तिथिषु अतिरेकेण वायवः क्षोभमुपगच्छन्ति, तेनातिरेकतरेण तासु तिथिषु वर्धत इति ॥ १४–१५–१६ ॥

सम्प्रति लवणसमुद्रशिखावक्तव्यतामाह—

दसजोयणसहस्सा, लवणसिहा चक्कवालउ रुंदा ।
सोलस सहस्स उच्चा, सहस्समेगं च उगाढा ॥ १७ ॥

व्याख्या—अभ्यन्तरतो बाह्यतश्च पञ्चनवतिपञ्चनवतियोजनसहस्राणि परित्यज्य मध्यभागे लवणसमुद्रस्य शिखा वर्तते, सा च चक्रवालतो रथचक्राकारेण रुन्दा विस्तीर्णा दश योजनसहस्राणि, तथा भूतले समजलपट्टादूर्ध्वमुच्चा षोडश योजनसहस्राणि, सहस्रमेकं योजनानामवगाढा भूमौ प्रविष्टा ॥ १७ ॥

देसूणमध्धजोयण, लवणसिहोवरि दगं डुवे काला ।
अइरेगं अइरेगं, परिवड्ढइ हायए वावि ॥ १८ ॥

व्याख्या—अनन्तरोक्ताया लवणसमुद्रशिखाया उपरि देशोनमर्धयोजनं किञ्चिन्न्यूने द्वे गव्यूते द्वौ कालौ अहोरात्रमध्ये द्वौ वारौ उदकमतिरेकमतिरेकं परिवर्धते हीयते च पातालकलशगतवायुक्षोभे वर्धते, तदुपशान्तौ च हीयते इत्यर्थः ॥ १८ ॥

सम्प्रति वेलन्धरवक्तव्यतामाह—

अभिंतरियं वेलं, धरंति लवणोदहिस्स नागाणं ।
बायालीस सहस्सा, डुसत्तरि सहस्स बाहिरियं ॥ १९ ॥
सर्ट्ठि नागसहस्सा, धरंति अग्गोदयं समुद्दस्स ।
वेलंधरआवासा, लवणे चाउद्दिसिं चउरो ॥ २० ॥

व्याख्या—लवणसमुद्रस्याभ्यन्तरिकां जम्बूद्वीपाभिमुखां वेलां शिखोपरिजलं शिखां च अर्वाक् प्रविशन्तीं धरन्ति वारयन्ति नागानां नागकुमाराणां भवनपतिनिकायान्तर्वर्तिनां द्वाचत्वारिंशत्सहस्राणि, बाह्यां धातकीखण्डद्वीपाभिमुखां वेलां धातकीखण्डद्वीपमध्ये प्रविशन्तीं वारयन्ति नागानां द्वासप्ततिसहस्राणि, तथा षष्टिनागसहस्राणि अग्रोदकं देशोनयोजनार्धजलादुपरि वर्धमानं जलं समुद्रस्य लवणसमुद्रस्य वारयन्ति। एवं सर्वसङ्ख्यया वेलन्धरदेवानामेकं लक्षं चतुःसप्ततिसहस्राणि भवन्ति। उक्तं च—"लवणस्स णं भंते समुद्दस्स केवइया नागसहस्सा अब्भिंतरियं वेलं धरंति? केवइया नागसहस्सा बाहिरियं वेलं धरंति? केवइया नागसहस्सा अग्गोदगं धरंति? गोयमा! लवणस्स णं समुद्दस्स बायालीसं नागसहस्सा अब्भिंतरियं वेलं धरंति, बावत्तरि नागसहस्सा बाहिरियं वेलं धरंति, सट्ठि नागसहस्सा अग्गोदगं धरंति। एवमेव सपुव्वावरेण लवणे समुद्दे एगसयसाहस्सिया चउहत्तरिं च नागसहस्सा भवंतीति मक्खायं"। एतेषां च वेलन्धरदेवानामावासा आश्रयभूताः पर्वता लवणसमुद्रे पूर्वादिषु चतसृषु दिक्षु द्विचत्वारिंशद्द्विचत्वारिंशद्योजनसहस्राण्यवगाह्यात्रान्तरे प्रत्येकमेकैकभावेन चत्वारः चतुसङ्ख्या वेदितव्याः॥ १९–२०॥

सम्प्रति तेषामावासपर्वतानामावासपर्वताधिपतीनां च नागराजानां नामान्याह—

पुव्वाइ अणुकमसो, गोत्थुभ दगभास संख दगसीमा।
गोत्थुभ सिवए संखे, मणोसिले नागरायाणो॥ २१॥



व्याख्या—पूर्वाद्यनुक्रमशः पूर्वाद्यनुक्रमेण तेषामावासपर्वतानाममूनि नामानि, तद्यथा—जम्बूद्वीप-
वेदिकायाः परतः पूर्वस्यां दिशि द्विचत्वारिंशद्योजनसहस्राणि लवणसमुद्रमवगाह्यात्रान्तरे यः स्थित
आवासपर्वतः स गोस्तूपो गोस्तूपनामा, यतस्तत्र तासु तासु क्षुल्लवापीषु सरस्सु सरःपङ्क्तिषु बहूनि शत-
पत्राणि सहस्रपत्राणि वा गोस्तूपाकाराणि, गोस्तूपनामा च देवस्तत्र परिवसति, तेन स गोस्तूप उच्यते,
दक्षिणस्यां तावत्प्रमाणमेव लवणसमुद्रमवगाह्य यः स्थित आवासपर्वतः स दकभासः सुविशुद्धाङ्करत्न-
मयतया सर्वासु दिक्षु विदिक्षु चाष्टासु योजनेषु मध्ये स्वप्रभाभिर्दकमुदकं भासयति द्योतयतीति
दकभासः । उक्तं च—"से केणट्ठेणं भंते एवं वुच्चइ दगभासे आवासपव्वए ? गोयमा ! दगभासे णं
आवासपव्वए अच्छजोयणिए खित्ते सव्वओ समंता दगओ भासेइ जाव पभासे" इत्यादि । पश्चिमायां
दिशि तावन्तं लवणसमुद्रमवगाह्य यः स्थित आवासपर्वतः स शङ्खनामा, तत्र हि वापीषु सरस्सु सरः-
पङ्क्तिषु बहूनि शतपत्राणि सहस्रपत्राणि वा शङ्खवर्णानि, शङ्खनामा देवस्तत्राधिपत्यं परिपालयति, तेन
स शङ्खनामा । यः पुनरुत्तरस्यां दिशि द्विचत्वारिंशद्योजनसहस्राण्यवगाह्यावस्थित आवासपर्वतः स
दकसीमा, तत्र हि शीतायाः शीतोदायाश्च महानद्याः श्रोतांसि प्रतिगत्य प्रतिगत्य प्रतिहतानि निवर्तन्ते,
तेन शीताशीतोदयोरुदकानां सीमाकारीति दकसीमेत्यभिधीयते । उक्तं हि—"से केणट्ठेणं भंते एवं
वुच्चइ दगसीमे आवासपव्वए ? गोयमा ! दगसीमे आवासपव्वए सीयासीओयाणं महानईणं सोया तत्थ



तछ णं पक्षिहया पक्षिनियच्चंति, से एएणट्ठेणं गोयमा एवं वुच्चइ दगसीमे आवासपव्वए" इति । तथा पूर्वाद्यनुक्रमेणैवैतेषामावासपर्वतानामधिपतीनां नामान्यमूनि, तद्यथा—गोस्तूपस्यावासपर्वतस्याधिपतिर्गोस्तूपनामा देवः, दकभासस्य शिवः, शङ्खस्य शङ्खः, दकसीम्नो मनःशिलः । एते चत्वारोऽपि प्रत्येकं चतुर्णामिन्द्रसामानिकसहस्राणां, चतसृणामग्रमहिषीणां सपरिवाराणां, तिसृणां पर्षदां, सप्तानामनीकानां, सप्तानामनीकाधिपतीनां, षोडशानामात्मरक्षकदेवसहस्राणां, स्वस्य स्वस्यावासपर्वतस्य, स्वस्याः स्वस्या राजधान्या अधिपतयः । तत्र गोस्तूपदेवस्य राजधानी गोस्तूपा, सा च गोस्तूपस्यावासपर्वतस्य पूर्वतोऽपरस्मिन् लवणसमुद्रे द्वादशयोजनसहस्रेभ्यः परतो वेदितव्या । शिवदेवस्य शिवा राजधानी, सा च दकभासस्यावासपर्वतस्य दक्षिणतोऽपरस्मिन् लवणसमुद्रे । शङ्खदेवस्य शङ्खा नाम राजधानी, सा च शङ्खस्यावासपर्वतस्यापरतोऽपरस्मिन् लवणसमुद्रे । मनःशिलस्य देवस्य मनःशिला राजधानी, सा च दकसीम्न आवासपर्वतस्योत्तरतोऽपरस्मिन् लवणसमुद्रे ॥ २१ ॥

तदेवमुक्त्वा महतां वेलन्धराणां नागराजानामावासपर्वता नामानि च, सम्प्रति क्षुद्रवेलन्धरदेवानामावासपर्वता नामानि चाह—

अणुवेलंधरवासा, लवणे विदिसासु संठिया चउरो ।
कक्कोडग विज्जुप्पभ, कइलास रुणप्पभे चेव ॥ २२ ॥

कक्कोरुग कद्दमए, केलास रुणप्पन्ने य रायाणो ।
बायालीस सहस्से, गंतुं उदहिम्मि सव्वेऽवि ॥ २३ ॥

व्याख्या—महतां वेलन्धराणामादेशप्रतीच्छकतयाऽनुयायिनो वेलन्धरा अनुवेलन्धरास्तेषामावासा आवासपर्वता लवणे लवणसमुद्रे विदिक्षु उत्तरपूर्वादिकासु चतसृषु विदिक्षु द्वाचत्वारिंशतं योजनसहस्राण्यवगाह्यात्रान्तरे संश्रिताः स्थिता चत्वारः चतुःसङ्ख्या वेदितव्याः, तद्यथा—उत्तरपूर्वस्यां दिशि कर्कोटकः १, दक्षिणपूर्वस्यां विद्युत्प्रभः २, दक्षिणापरस्यां कैलाशः ३, अपरोत्तरस्यामरुणप्रभः ४ । एतेषामधिपतयो नागराजा यथाक्रमं कर्कोटकः कर्दमकः कैलाशः अरुणप्रभश्च । एते च चत्वारोऽपि गोस्तूपदेव इव महर्द्धिका वेदितव्याः, नवरं कर्कोटकस्य नागराजस्य राजधानी कर्कोटिका, सा च कर्कोटकस्यावासपर्वतस्योत्तरपूर्वस्यां दिशि तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्यापरस्मिन् लवणसमुद्रे द्वादशयोजनसहस्रेभ्यः परतोऽवगन्तव्या । कर्दमस्य च नागराजस्य कर्दमिका राजधानी, सा च विद्युत्प्रभस्य स्वावासपर्वतस्य दक्षिणपूर्वतोऽपरस्मिन् लवणसमुद्रे । कैलाशदेवस्य नागराजस्य कैलाशा नाम राजधानी, सा च स्वावासपर्वतस्य कैलाशस्य दक्षिणापरतोऽपरस्मिन् लवणसमुद्रे । अरुणप्रभस्य नागराजस्यारुणप्रभा नाम राजधानी, सा च स्वावासपर्वतस्यारुणप्रभस्यापरोत्तरतोऽपरस्मिन् लवणसमुद्रे । एते च सर्वेऽपि गोस्तूपादयोऽरुणप्रभपर्यवसाना अष्टावप्यावासपर्वता जम्बूद्वीपवेदिकान्तात्प्रत्येकं द्विचत्वारिंशतं योजनसहस्राण्युदधौ लवणसमुद्रेऽवगाह्यात्रान्तरे वेदितव्याः । एतच्च प्रागेव भावितम् ॥ २२–२३ ॥

सम्प्रत्येतेषामवगाहादिप्रमाणमाह—

चत्तारि जोयणसए, तीसं कोसं च उवगया भूमिं ।
सत्तरस जोयणसए, इगवीसे ऊसिया सव्वे ॥ २४ ॥

व्याख्या—सर्वेऽष्टावपि गोस्तूपादयः पर्वताः प्रत्येकं चत्वारि योजनशतानि त्रिंशदधिकानि ४३० एकं च क्रोशं १ भूमिमुपगता भूमौ प्रविष्टाः, सप्तदश योजनशतानि एकविंशत्यधिकानि १७२१ उच्छ्रिता उच्चाः। एते च सर्वेऽपि प्रत्येकमेकैकया वेदिकया एकैकेन च वनखण्डेन समन्ततः परिक्षिप्ताः ॥२४॥

सम्प्रत्येतेषां समानवक्तव्यत्वान्मानुषोत्तरपर्वतस्य च विष्कम्भानयनाय करणमाह—

जहिच्छसि विक्खंभं, वेलंधरमाणुसोत्तरनगाणं ।
पंचसएहिं गुणए, अट्ठाणउएहिं तं रासिं ॥ २५ ॥
तस्सेव उस्सएण उ, भयाहि तह भागलद्धं तु ।
चउसय चउवीसजुयं, विक्खंभं तं वियाणाहि ॥ २६ ॥

व्याख्या—शिखरादवतीर्य यत्र योजनादौ अतिक्रान्ते वेलन्धरपर्वतानामष्टानां मानुषोत्तरस्य च पर्वतस्य विष्कम्भं ज्ञातुमिच्छसि तं राशिमतिक्रान्तयोजनादिरूपं पञ्चशतैरष्टानवत्यधिकैर्गुणयेत् (येः),

गुणयित्वा च तस्यैव वेलन्धरादेरुच्छ्रयेणैकविंशत्यधिकसप्तदशयोजनशतप्रमाणेन भज, भक्ते च सति यत्तत्र भागलब्धं तच्चतुर्विंशत्यधिकचतुःशतयुतं तत्र विष्कम्भं जानीहि। तत्र शिखरादवतीर्ण सप्तदश योजनशतानि एकविंशतानि एकविंशत्यधिकानि, ततः सप्तदश शतानि एकविंशत्यधिकानि ध्रियन्ते १७२१, धृत्वा च पञ्चभिः शतैरष्टानवत्यधिकैः ५९८ गुण्यन्ते, गुणितेषु च सत्सु तेषु जातानि दश शतसहस्राणि एकोनत्रिंशत्सहस्राणि शतमेकमष्टापञ्चाशदधिकं १०२९१५८, तत एतेषामुच्छ्रयेण एकविंशत्यधिकसप्तदशशतरूपेण १७२१ भागो ह्रियते, हृते च भागे लब्धानि पञ्च शतानि अष्टानवत्यधिकानि ५९८, एतानि चतुर्भिः शतैश्चतुर्विंशत्यधिकैर्युतानि क्रियन्ते, जातानि दश शतानि द्वाविंशत्यधिकानि १०२२, एतावान्मूले विष्कम्भः। तथा शिखरादवतीर्णोऽष्टौ योजनशतानि षष्ट्यधिकानि गव्यूतद्वयं च ८६० ग० २, तत्र सर्वोऽपि योजनराशिर्गव्यूतद्वयकरणाय द्विकेन गुण्यते, गुणयित्वा चैकं गव्यूतद्वयमुपरितनं तत्र प्रक्षिप्यते, ततो जातानि सप्तदश शतानि एकविंशत्यधिकानि १७२१, एतानि पञ्चभिः शतैरष्टानवत्यधिकैर्गुण्यन्ते, जाता दश लक्षा एकोनत्रिंशत्सहस्राणि शतमेकमष्टापञ्चाशदधिकं १०२९१५८, एतेषां योजनानयनाय छेदराशिरेकविंशत्यधिकसप्तदशशतप्रमाणो द्विगुणी क्रियते, जातानि द्विचत्वारिंशदधिकानि चतुस्त्रिंशच्छतानि ३४४२, एतैर्भागे हृते लब्धे द्वे शते नवनवत्यधिके २९९, ते च चतुर्भिः शतैश्चतुर्विंशत्यधिकैः (४२४) सहिते क्रियेते, जातानि सप्त शतानि त्रयोविंशत्यधिकानि ७२३ एतावान्मध्यभागे विष्कम्भः। अथ चान्यथा मध्यविष्कम्भ आनीयते—मूलविष्कम्भः शिखरविष्कम्भ-

॥

श्चैकत्र मील्यते, मीलयित्वा च तयोरर्धं यल्लभ्यते स मध्यविष्कम्भो ज्ञातव्यः। तत्र मूलविष्कम्भो दश शतानि द्वाविंशत्यधिकानि १०२२, शिखरविष्कम्भश्चत्वारि योजनशतानि चतुर्विंशत्यधिकानि ४२४, तयोरेकत्र मीलने जातानि चतुर्दश शतानि षट्चत्वारिंशदधिकानि १४४६, एतेषामर्धे लब्धानि सप्त शतानि त्रयोविंशत्यधिकानि ७२३, एतावान्मध्यभागे विष्कम्भः। एवमन्यत्रापि गाथोक्तकरणवशात्प्रदेशान्तरे शिखरादवतरता विष्कम्भपरिमाणं परिभावनीयम्। तदेवं विष्कम्भानयनाय करणमुक्तम् ॥ २५–२६ ॥

सम्प्रति मूले मध्ये शिखरे च क्रमेण विष्कम्भपरिमाणं प्रतिपादयति—

कमसो विक्खंभा सिं, दस बावीसाइं जोयणसयाइं।
सत्त सए तेवीसे, चत्तारि सए य चउवीसे ॥ २७ ॥

व्याख्या—इह मानुषोत्तरस्य मूलादिषु विष्कम्भपरिमाणमग्रे वक्ष्यते, तत इदं वेलन्धरपर्वतानामेव द्रष्टव्यम्। एषां वेलन्धरपर्वतानामष्टानां मूले मध्ये उपरि च क्रमशः क्रमेण विष्कम्भा इमे भवन्ति, तद्यथा—मूले विष्कम्भो दश योजनशतानि द्वाविंशत्यधिकानि १०२२, मध्ये सप्त शतानि त्रयोविंशत्यधिकानि ७२३, उपरि विष्कम्भश्चत्वारि योजनशतानि चतुर्विंशत्यधिकानि ४२४ ॥ २७ ॥

एते चाष्टावपि पर्वता वृत्ताकारास्तत एतेषां मूले मध्ये उपरि च क्रमेण परिधिपरिमाणमाह—

मूले बत्तीस सए, बत्तीसे जोयणाणि किंचूणा ।
मज्झे बावीस सए, छलसीए साहिए परिही ॥ २८ ॥
तेरस सया उ उवरिं, इगयाला किंचि ऊणिया परिही ।

व्याख्या—अष्टानामपि पर्वतानां मूले परिरयो द्वात्रिंशद्योजनशतानि द्वात्रिंशदधिकानि किञ्चिदूनानि ३२३२ । मध्ये परिधिर्द्वाविंशतियोजनशतानि षडशीत्यधिकानि किञ्चित्समतिरेकानि २२८६ । उपरि त्रयोदश शतानि एकचत्वारिंशदधिकानि किञ्चिदूनानि १३४१ परिधिः ॥

सम्प्रत्येतेषां पर्वतानां वर्णविभागमाह—

कणगंकरययफालिय, दिसासु विदिसासु रयणमया ॥ २९ ॥

व्याख्या—ये पूर्वादिषु चतसृषु दिक्षु गोस्तूपादयश्चत्वारः पर्वतास्ते यथाक्रमं कनकाङ्करजतस्फटिकमयाः । तद्यथा—कनकमयो गोस्तूपः, अङ्करत्नमयो दकभासः, रजतमयः शङ्खः, स्फटिकमयो दकसीमा । ये पुनर्विदिक्षु कर्कोटकादयः पर्वतास्ते सर्वेऽपि रत्नमयाः ॥ २९ ॥

सम्प्रत्येतेषां मूले परस्परमन्तरपरिमाणं प्रतिपिपादयिषुराह—

बायालीस सहस्सा, दुगुणा गिरिवाससंजुया जाया ।
बावीसहिया पणसीइ, सहस्सा तस्स परिहीउ ॥ ३० ॥

तेवट्ठा अट्ठ सया, अट्ठहि सहस्स दोन्नि लक्खा य ।
जंबूद्दीवपरिरए, संमिलिए होइमो रासी ॥ ३१ ॥
इगनउया पणसीई, सहस्स पणलक्ख इत्थ गिरिवासो ।
सोहे अट्ठविहत्ते, लवणगिरि(री)णंतरं होइ ॥ ३२ ॥

व्याख्या—इह जम्बूद्वीपवेदिकाया बहिर्द्विचत्वारिंशतं द्विचत्वारिंशतं योजनसहस्राण्यवगाह्य वेलन्धरपर्वताः स्थिताः, ततः पूर्वतोऽपि वेदिकायाः परतो द्विचत्वारिंशद्योजनसहस्राणि, अपरतोऽपि वेदिकायाः परतो द्विचत्वारिंशद्योजनसहस्राणि, इति द्विचत्वारिंशत्सहस्राणि द्विगुणानि क्रियन्ते, जातानि चतुरशीतिसहस्राणि, एतानि गिरिव्यासेन द्वाविंशत्यधिकदशशतप्रमाणेन युतानि क्रियन्ते, मध्यभागे हि किल तेषां परस्परमन्तरपरिमाणं ज्ञातुमिष्यते इत्येकतोऽपि पञ्च योजनशतानि एकादशाधिकानि, अपरतोऽपि पञ्च योजनशतानि एकादशाधिकानीति सर्वसङ्ख्यया दश शतानि द्वाविंशत्यधिकानि योजनानां गिरिव्यासस्तेन सहितानि क्रियन्ते, जातानि पञ्चाशीतिसहस्राणि द्वाविंशत्यधिकानि ८५०२२। तस्य परिधिः द्वे लक्षे अष्टषष्टिसहस्राणि अष्टौ शतानि त्रिषष्ट्यधिकानि २६८८६३, एतच्च परिमाणं प्रागुक्तकरणवशात्स्वयमानेतव्यम् । तत एष राशिर्जम्बूद्वीपपरिधिना सह संमील्यते, मीलितश्चायं राशिर्भवति—पञ्च लक्षाः पञ्चाशीतिः सहस्राणि एकनवत्यधिकानि ५८५०९१ । तत एतेभ्योऽष्टानामपि

आवासपर्वतानां व्यासोऽपनीयते, अष्टानां आवासपर्वतानां व्यासपरिमाणमष्टौ सहस्राणि शतमेकं षट्सप्तत्यधिकं ८१७६। तथाहि—एकस्य गिरेर्व्यासो दश शतानि द्वाविंशत्यधिकानि १०२२, एतेषामष्टभिर्गुणने यथोक्तं व्यासपरिमाणं भवति, ततः पूर्वराशेरपनीयते, अपनीते च तस्मिन् जातः पूर्वराशिः पञ्च लक्षाः षट्सप्ततिसहस्राणि नव शतानि पञ्चदशोत्तराणि ५७६९१५, एतेषामष्टभिर्भागे हृते यल्लभ्यते तल्लवणसमुद्रे गिरीणां गोस्तूपादीनां परस्परमन्तरं भवति ॥ ३०–३१–३२ ॥

तदेवाह—

तिन्नठभाग बिसयरि, सहस्स चोद्दस हियं सयं चेगं।
कक्कोडाइनगाणं–तरं तु अठएह मूलम्मि ॥ ३३ ॥

व्याख्या—अष्टानामपि कर्कोटकादीनां पर्वतानां मूले परस्परमन्तरं द्विसप्ततिसहस्राणि शतमेकं चतुर्दशोत्तरं योजनानां त्रयश्चाष्टौ भागा योजनस्य ७२११४ $\frac{3}{8}$ ॥ ३३ ॥

सम्प्रति गोतीर्थजलवृद्ध्योः स्वरूपमाह—

पंचाणउइ सहस्से, गोतित्थं उभयओऽवि लवणस्स।
जोयणसयाणि सत्त उ, दगपरिवुड्ढी वि उभओऽवि ॥ ३४ ॥

व्याख्या—गवां तीर्थं गोतीर्थं तडागादिषु प्रवेशमार्गरूपो नीचो नीचतरो भूप्रदेशो गोतीर्थमिव

गोतीर्थं, तच्च लवणसमुद्रस्य उभयतोऽपि जम्बूद्वीपाद्धातकीखण्डाच्च प्रत्येकं पञ्चनवतिः सहस्राणि- मध्यभागावगाहस्तु दशयोजनसहस्रप्रमाणविस्तारः। गोतीर्थं च जम्बूद्वीपवेदिकान्तसमीपे धातकीखण्ड- वेदिकान्तसमीपे चाङ्गुलसङ्ख्येयभागः, ततः परं समतलाद्भूभागादारभ्य क्रमेण प्रदेशहान्या तावन्नी- चत्वं नीचतरत्वं परिभावनीयं यावत् पञ्चनवतियोजनसहस्राणि, पञ्चनवतियोजनसहस्रपर्यन्ते च समतलं भूभागमपेक्ष्योण्डत्वं योजनसहस्रमेकम् । तत उभयतोऽपि जम्बूद्वीपवेदिकातो धातकी- खण्डद्वीपवेदिकातश्च समतलभूभागे प्रथमतो जलवृद्धिरङ्गुलसङ्ख्येयभागः । ततः समतलभूभागमे- वाधिकृत्य प्रदेशवृद्ध्या जलवृद्धिः क्रमेण परिवर्धमाना तावत्परिभावनीया यावदुभयतोऽपि पञ्चनव- तियोजनसहस्राणि । पञ्चनवतियोजनसहस्रपर्यन्ते चोभयतोऽपि समतलं भूभागमपेक्ष्य जलवृद्धिः सप्त योजनशतानि । किमुक्तं भवति ? तत्र प्रदेशे समतलं भूभागमपेक्ष्यावगाहो योजनसहस्रं, तदुपरि जलवृद्धिः सप्त योजनशतानि, ततः परे मध्यभागे दशयोजनसहस्रविस्तारे जलवृद्धिः षोडश योजनसहस्राणि ॥ ३४ ॥

सम्प्रति सुस्थितलवणाधिपतिसंबन्धी यो गौतमद्वीपस्तद्वक्तव्यतामाह—

बारससहस्सपिहुलो, अवरेणुदहिम्मि तत्तियं गंतु ।

सुट्ठियउदहीवय(इ)णो, गोयमदीवो त्ति आवासो ॥ ३५ ॥

व्याख्या–जम्बूद्वीपस्यापरेण पश्चिमायां दिशि उदधौ लवणसमुद्रे 'तत्तियं' यावत्प्रमाणं पृथुत्वे तावत्प्रमाणं गत्वा द्वादश योजनसहस्राणि अवगाह्येत्यर्थः, अत्रान्तरे सुस्थितस्य लवणाधिपतेः संबन्धी गौतमद्वीपो नाम आवासद्वीपः, स च द्वादशयोजनसहस्रपृथुलः, उपलक्षणमेतत्, आयामतोऽपि द्वादशयोजनसहस्रप्रमाणः ॥ ३५ ॥

सम्प्रत्यस्य परिधिमाह—

सत्तत्तीस सहस्सा, अडयाला नव सया य से परिही ।
लवणंतेण जलाउ, समूसिउ जोयणस्सद्धं ॥ ३६ ॥

व्याख्या–सप्तत्रिंशद्योजनसहस्राणि नव शतानि अष्टाचत्वारिंशदधिकानि ३७९४८ 'से' तस्य गौतमद्वीपस्य परिधिः । तथा लवणान्तेन लवणसमुद्रदिशि जलात् समुच्छ्रित ऊर्ध्वं निःसृतो योजनस्यार्धं द्वे गव्यूते ॥ ३६ ॥

सम्प्रति जम्बूद्वीपदिशि समुच्छ्रयपरिमाणमाह—

जंबूद्दीवंतेणं, अडसीइ जोयणाणि उव्विद्धो ।
पणनउई नागाण य, दुगुणिय वीसं च दुकोसं ॥ ३७ ॥

व्याख्या–जम्बूद्वीपान्तेन जम्बूद्वीपदिशि अष्टाशीतियोजनानि उद्वेधो जलादूर्ध्वं निःसृतः पञ्चनवति-

भागानां च योजनस्य द्विगुणितां विंशतिं चत्वारिंशतमित्यर्थः द्वौ च कोशौ ८८ $\frac{४०}{९५}$ २ ॥ ३७ ॥

सम्प्रति करणवक्तव्यतोपक्षेपमाह—

रविससिगोयमदीवा—णंतरदीवाण चेव सव्वेसिं ।
वेलंधराणुवेलं—धराण सव्वेसि करणमिमं ॥ ३८ ॥

व्याख्या—रविशशिगौतमद्वीपानां सर्वेषामन्तरद्वीपानां च तथा सर्वेषां वेलन्धरानुवेलन्धराणां संबन्धिनां गोस्तूपादीनामरुणप्रभपर्यवसानानामावासपर्वतानामवगाहादिविषयमिदं वक्ष्यमाणं करणम् ॥ ३८ ॥

तत्र प्रथमतो रविशशिगौतमद्वीपानामवगाहादिविषयं करणमाह—

उगाहिऊण लवणं, जो वित्थारो उ जस्स दीवस्स ।
तहियं जो उस्सेहो, उदगस्स उ दोहि तं विभए ॥ ३९ ॥
जं हवइ भागलद्धं, सव्वेसिं अद्धजोयणं च भवे ।
अब्भिंतरम्मि पासे, समूसिया ते जलंताओ ॥ ४० ॥

व्याख्या—जम्बूद्वीपवेदिकान्ताल्लवणसमुद्रमवगाह्य यस्य द्वीपस्य यो यत्प्रमाणो विस्तारस्तत्र विस्तारान्ते लवणदिशि य उत्सेध उच्चत्वं जलस्य तमुत्सेधं द्वाभ्यां विभजेत्, विभक्ते च सति यल्लभ्यते तत्

तथाऽर्धयोजनं च सर्वेषां द्वीपानां करणादुपरि प्रक्षेपणीयं भवति तद्भागलब्धमर्धयोजनसहितं ते गौतमादयो द्वीपा अभ्यन्तरे पार्श्वे जम्बूद्वीपदिशि जलान्ताज्जलपर्यन्तादूर्ध्वं समुच्छ्रिता भवन्ति । तत्र गौतमद्वीपो लवणसमुद्रे जम्बूद्वीपवेदिकान्तादारभ्य द्वादशयोजनसहस्रेभ्यः परो व्यवस्थितः, ततो द्वादश सहस्राणि ध्रियन्ते १२००० । गौतमस्य च द्वीपस्य विष्कम्भो द्वादश योजनसहस्राणि १२०००, ततस्तान्यपि मील्यन्ते, जातानि चतुर्विंशतिसहस्राणि २४००० । तथा यदि पञ्चनवतियोजनसहस्रपर्यन्ते सप्त शतानि जलवृद्धिः प्राप्यते ततश्चतुर्विंशतियोजनसहस्रपर्यन्ते कियती प्राप्यते इति त्रैराशिककर्मावतारः, तत्र राशित्रयस्थापना—९५०००।७००।२४०००। अत्र लाघवार्थमाद्यन्तयो राश्योः शून्यापवर्तनं ९५।२४। मध्यस्य च सप्तशतप्रमाणस्य राशेरन्ते(न्त्ये)न चतुर्विंशतिरूपेण राशिना गुणनं क्रियते, जातानि षोडश सहस्राणि अष्टौ शतानि १६८००, एषामादिराशिना पञ्चनवतिलक्षणेन भागो ह्रियते, लब्धं षट्सप्तत्यधिकं योजनशतमशीतिश्च पञ्चनवतिभागा योजनस्य १७६ $\frac{८०}{९५}$, एतावती लवणसमुद्रदिशि समतलभूभागमपेक्ष्योपरि जलवृद्धिः, तस्या द्विकेन भागो ह्रियते, लब्धानि अष्टाशीतियोजनानि चत्वारिंशच्च पञ्चनवतिभागा योजनस्य ८८ $\frac{४०}{९५}$, एतावता हीना प्रागुक्तप्रमाणा जम्बूद्वीपदिशि जलवृद्धिः, गव्यूतद्विकं च लवणसमुद्रदिश्यपि गौतमद्वीपो जलेन मुक्तो वर्तते, तत् गव्यूतद्विकमधिकमत्र प्रक्षिप्यते, ततोऽष्टाशीतियोजनानि चत्वारिंशत् पञ्चनवतिभागा योजनस्य द्वे गव्यूते इति जम्बूद्वीपदिशि गौतमद्वीपो जलादुपरि प्रकट इति । एवं रविशशिद्वीपानामपि वक्ष्यमाणानां जम्बूद्वीपदिशि जलादुपरि प्रक-

दत्वे भावयितव्यम् । तेषामपि जम्बूद्वीपवेदिकान्ताल्लवणसमुद्रे द्वादश योजनसहस्राण्यवगाह्य द्वादश-योजनसहस्रप्रमाणविष्कम्भतयाऽवस्थानात् ॥ ३९–४० ॥

सम्प्रत्यमेवार्थं करणान्तरमाह—

विरथारं सत्तगुणं, नव सय पन्नास भइयमुस्सेहं ।

सङ्गाउयमाइल्लं, लावणदीवाण जाणाहि ॥ ४१ ॥

व्याख्या—गौतमादीनां द्वीपानां विस्तारो द्वादशयोजनसहस्रप्रमाणस्तं सप्तगुणं कुर्यात्, द्वादशसहस्राणां सप्तभिर्गुणने जातानि चतुरशीतिसहस्राणि ८४००० । ततो नवभिः शतैः पञ्चाशदधिकैरेतेषां भागो ह्रियते, शून्यं च शून्येन पात्यते, लब्धान्यष्टाशीतिर्योजनानि चत्वारिंशच्च पञ्चनवतिभागा योजनस्य । एतावन्तं सद्विगव्यूतं गव्यूतद्वयसहितमुत्सेधमादिमन्तं जम्बूद्वीपदिशि लवणे लवणसमुद्रे भवा लावणा गौतमादयो द्वीपास्तेषां जानीहि ॥ ४१ ॥

सम्प्रति वेलन्धरानुवेलन्धरपर्वतेषु जलवृद्धेरानयनाय त्रैराशिकमाह—

पणनउइसहस्सेहिं, सत्त सया उदगवुड्ढि जइ होइ ।

बायालसहस्सेहिं, दगवुड्ढी नगाण का होइ ॥ ४२ ॥

व्याख्या—यदि पञ्चनवतिसहस्रैः पञ्चनवतिसहस्रपर्यन्ते सप्त शतान्युदकवृद्धिर्भवति तदा द्विचत्वारिंश-

त्सहस्रैर्द्विचत्वारिंशत्सहस्रपर्यन्ते का वृद्धिर्भवति ? राशित्रयस्थापना—९५०००।७००।४२०००। तत्राद्यन्त-राश्योः पञ्चनवतिसहस्रद्विचत्वारिंशत्सहस्ररूपयोर्लाघवार्थं शून्यापवर्तनं क्रियते, ततो मध्यराशेः सप्तशत-लक्षणस्य ७०० अन्तेन द्विचत्वारिंशद्रूपेण ४२ राशिना गुणने जातानि एकोनत्रिंशत्सहस्राणि चत्वारि शतानि २९४०० । ततः प्रथमेन राशिना पञ्चनवतिलक्षणेन भागो ह्रियते, लब्धानि त्रीणि शतानि नवोत्तराणि ३०९ योजनानां पञ्चचत्वारिंशच्च पञ्चनवतिभागा योजनस्य $\frac{45}{95}$, एतावती समतलभूभागादूर्ध्वं गोस्तू-पादीनां जम्बूद्वीपदिशि जलवृद्धिः । तथा यदि पञ्चनवतियोजनसहस्रपर्यन्ते दश शतानि योजनानामव-गाहो लभ्यते ततो द्विचत्वारिंशद्योजनसहस्रपर्यन्ते कियानवगाहः ? राशित्रयस्थापना—९५००० । १००० । ४२००० । तत्राद्यन्तयोः पञ्चनवतिसहस्रद्विचत्वारिंशत्सहस्ररूपयो राश्योः शून्यत्रयापवर्तना मध्यस्य च दशशतलक्षणस्य राशेरन्तेन द्विचत्वारिंशद्रूपेण राशिना गुणनाज्जातानि द्विचत्वारिंशत्सह-स्राणि ४२००० । तेषामाद्येन पञ्चनवतिलक्षणेन राशिना भागो ह्रियते, लब्धानि चतुःशतानि द्विचत्वा-रिंशदधिकानि योजनानां दश (च) पञ्चनवतिभागा योजनस्य ४४२ $\frac{10}{95}$, एतावान् गोस्तूपादीनां समीपे जम्बूद्वीपदिशि समतलं भूभागमपेक्ष्यावगाहः ॥ ४२ ॥

एतदेवाह—

दगवुड्ढि तिसय नवहिय, पणयाला पंचनउइभागा य ।
दस पणनउइभागा, चउसय बायाल उंगाहो ॥ ४३ ॥

व्याख्या—गोस्तूपादीनां नगानां समीपे जम्बूद्वीपदिशि समभागादूर्ध्वमुदकवृद्धिस्त्रीणि शतानि नवाधिकानि योजनानां पञ्चचत्वारिंशच्च पञ्चनवतिभागा योजनस्य ३०९ $\frac{४५}{९५}$ । तथा समतलभूभागमधिकृत्यावगाहश्चत्वारि शतानि द्विचत्वारिंशदधिकानि योजनानां दश च पञ्चनवतिभागा योजनस्य ४४२ $\frac{१०}{९५}$ ॥ ४३ ॥

सम्प्रत्येतेषामेव गोस्तूपादीनां जलोपरि समुच्छ्रयानयनाय करणमाह—

उन्नयं विसोहइत्ता, लवणगिरीणुस्सयाहितो सेसं ।
उणसयरि नव सया वि य, दुवीस पणनउइभागा य ॥ ४४ ॥
जंबूदीवंतेणं, एवइयं ऊसिया जलंताउ ।
उदहिंतेण नव सए, तिसठसत्तत्तरीभागा ॥ ४५ ॥

व्याख्या—उन्नयजलवृद्धिरवगाहश्च एतदुन्नयं लवणगिरीणां गोस्तूपादीनामुच्छ्रयाउच्छ्रयपरिमाणात् विशोध्य यच्छेषं नव शतानि एकोनसप्तत्यधिकानि योजनानां द्वाविंशति(४०)प्रमाणाश्च पञ्चनवतिभागा योजनस्य, एतावज्जम्बूद्वीपान्तेन जम्बूद्वीपदिशि गोस्तूपादयो लवणपर्वता जलान्ताज्जलस्योपरि समुच्छ्रिताः । तथाहि—गोस्तूपादीनामुच्छ्रयपरिमाणं सप्तदशशतयोजनानि एकविंशत्यधिकानि १७२१, जलवृद्धिर्जम्बूद्वीपदिशि त्रीणि योजनशतानि नवोत्तराणि पञ्चचत्वारिंशच्च पञ्चनवतिभागाः ३०९ $\frac{४५}{९५}$, अवगाहश्चत्वारि

योजनशतानि द्विचत्वारिंशदधिकानि दश च पञ्चनवतिभागा योजनस्य ४४२ $\frac{१०}{९५}$। अनयोश्च जलवृद्ध्यवगाहपरिमाणयोरेकत्र मीलने जातानि सप्त शतानि एकपञ्चाशदधिकानि योजनानां पञ्चपञ्चाशच्च पञ्चनवतिभागा योजनस्य ७५१ $\frac{५५}{९५}$, एतावत्प्रागुक्तादेकविंशत्यधिकसप्तदशशतरूपादुच्छ्रयपरिमाणादपनीयते, अपनीते च सति स्थितानि शेषाणि नव शतानि एकोनसप्तत्यधिकानि योजनानां चत्वारिंशच्च पञ्चनवतिभागा योजनस्य ९६९ $\frac{४०}{९५}$, एतावज्जम्बूद्वीपदिशि गोस्तूपादयो जलादुपरि समुच्छ्रिताः। तदभ्यन्तेन लवणसमुद्रदिशि पुनर्जलस्योपरि समुच्छ्रिता नव योजनशतानि त्रिपष्ट्यधिकानि सप्तसप्ततिश्च पञ्चनवतिभागाः योजस्य ९६३ $\frac{७७}{९५}$ ॥ ४४–४५ ॥

सम्प्रत्येतद्भावनार्थमेवाह—

अउणत्तरे नव सए, चत्तालीस पणनउइभागा य ।<br>
उंगाहियं गिरीणं, वित्थारो सत्त सय सठी ॥ ४६ ॥<br>
पणनउइभाग असिई, सवन्नए विसत्तरी सहस्साइं ।<br>
दो य सया आसीया, लऊं तेरासिएण इमं ॥ ४७ ॥<br>
किंचूणा अरूवन्ना, पणनउइभागा जोयणा पंच ।<br>
पुरिमनगस्स य सुऊे, एयम्मि उ पक्खिमो होइ ॥४८॥

व्याख्या—गिरीणां गोस्तूपादीनां शिखरस्याधोऽवतरणेन एकोनसप्ततानि एकोनसप्तत्यधिकानि नव योजनशतानि चत्वारिंशतं च योजनस्य पञ्चनवतिभागानवगाह्यात्रान्तरे गिरीणां विस्तारः सप्त योजनशतानि षष्टानि षष्ट्यधिकानि अशीतिश्च पञ्चनवतिभागा योजनस्य ७६० $\frac{८०}{९५}$ । तत एष विस्तारः सवर्ण्यते एकरूपः क्रियते, किमुक्तं भवति ? योजनानि भङ्क्त्वा सामस्त्येन पञ्चनवतिभागाः क्रियन्ते, तत्र योजनराशिः पञ्चनवत्या गुण्यते, गुणयित्वा च तत्रोपरितनाऽशीतिः पञ्चनवतिभागाः प्रक्षिप्यन्ते, ततो राशिरेवंरूपः—द्विसप्ततिसहस्राणि द्वे शते अशीत्यधिके ७२२८० । ततस्त्रैराशिककर्मावतारः—यदि पञ्चनवतिसहस्रपर्यन्ते सप्त योजनशतानि ७०० जलवृद्धौ प्राप्यन्ते, ततो द्विसप्ततिसहस्राणि द्वे शते अशीत्यधिके ७२२८० इत्येवंसङ्ख्याकानां पञ्चनवतिभागानामन्ते किं प्राप्यते ? तत्राद्यन्तयो राश्योः शून्यमेकैकं लाघवार्थं पात्यते, आदिमध्ययोस्तु शून्यद्वयं, स्थापना—९५।७।७२२८। अत्रान्तेन राशिना मध्यराशेः सप्तकस्य गुणना क्रियते, जातानि पञ्चाशत्सहस्राणि पञ्च शतानि षण्णवत्यधिकानि ५०५९६ । आदिराशिः पञ्चनवतिलक्षणः छेदः ततः स योजनानयनार्थं पञ्चनवत्या गुण्यते, जातानि नव सहस्राणि पञ्चविंशत्यधिकानि ९०२५, अनेन राशिना भागो ह्रियते, हृते च भागे लब्धानि पञ्च योजनानि, शेषमुद्धरति चतुःपञ्चाशच्छतानि एकसप्तत्यधिकानि ५ $\frac{५४७१}{९०२५}$, अयं च राशिः स्तोक इति भागं न प्रयच्छति, ततः पञ्चनवतिभागानयनाय छेदराशिः पञ्चनवतिरूपः क्रियते, भागे हृते लब्धाः सप्तपञ्चाशत्पञ्चनवतिभागाः, शेषमुद्धरति षट्पञ्चाशत्, ततोऽर्धाधिक्येन किञ्चिदूनो भागो विवक्ष्यते इति किञ्चिदूना अष्टापञ्चाश-

त्पञ्चनवतिभागाः, एतावन्नैराशिकेन लब्धम्। तथा चाह-लब्धं नैराशिकेन करणेन इदं वक्ष्यमाणं,
तदेवाह-किञ्चिदूना अष्टापञ्चाशत्पञ्चनवतिभागा योजनस्य पञ्च योजनानि ५ ५८/९५। एतस्मिन् पूर्वनगस्य
पूर्वोक्तनगसमुच्छ्रयपरिमाणस्य नव योजनशतानि एकोनसप्तत्यधिकानि चत्वारिंशच्च पञ्चनवतिभागा योजनस्य
९६९ ४०/९५ इत्येवंरूपस्य मध्यात् शुद्धे शोधिते पश्चिमः पाश्चात्यो लवणसमुद्रदिशीत्यर्थः जलस्योपरि समु-
च्छ्रयो भवति, स च नव शतानि त्रिषष्ट्यधिकानि योजनानां सप्तसप्ततिश्च पञ्चनवतिभागा योजनस्य
९६३ ७७/९५। तदेवं रविशशिगौतमद्वीपानां गोस्तूपादीनां च वेलन्धरानुवेलन्धरावासपर्वतानामवगाहा-
दिपरिमाणविषयाणि करणानि उक्तानि ॥ ४६-४७-४८ ॥

सम्प्रति गौतमद्वीपवक्तव्यतामाह—

गोयमदीवस्सुवरिं, भोमिज्जं कीलवासनामंतु।
बासट्ठि जोयणाइं, समूसियं जोयणद्धं तु ॥ ४९ ॥
तस्सद्धं विच्छिन्नं, तस्सुवरि सुट्ठियस्स सयणिज्जं।

व्याख्या—गौतमद्वीपस्य द्वादशयोजनसहस्रप्रमाणायामविष्कम्भस्य बहुसमरमणीये भूमिभागे मध्य-
देशे भौमेयमावसथं क्रीडावासनामकमस्ति, तच्च द्वाषष्टियोजनानि द्वे च गव्यूते उच्चैस्त्वेन, तस्योच्च-
त्वस्यार्धं विस्तीर्णं सक्रोशान्येकत्रिंशद्योजनानि विस्तीर्णमित्यर्थः। अनेकस्तम्भशतसंनिविष्टम्। तस्य च
क्रीडावासनाम्नो भौमेयस्यावसथस्यान्ते बहुसमरमणीये भूमिभागे मध्यदेशे महत्येका मणिमयी पीठिका,

सा च योजनमायामविष्कम्भाभ्यामर्धयोजनं वाहल्यतः, तस्याश्च मणिपीठिकाया उपरि महदेकं सुस्थितस्य लवणाधिपतेर्योग्यं शयनीयम्, लवणाधिपतिश्च सुस्थितनामा देवः पल्योपमस्थितिकः चतुर्णामिन्द्रसामानिकसहस्राणां चतसृणामग्रमहिषीणां सपरिवाराणां तिसृणां पर्षदां ससानामनीकानां सप्तानामनीकाधिपतीनां षोडशानामात्मरक्षकदेवसहस्राणामन्येषां च सुस्थिताभिधराजधानीवास्तव्यानां वहूनां देवानां देवीनां चाधिपत्यं परिपालयति । सुस्थिताभिधा च राजधानी सुस्थितस्य लवणाधिपतेर्गौतमद्वीपस्यापरेण तिर्यगसङ्ख्येयान् द्वीपसमुद्रानतिक्रम्यापरस्मिन् लवणसमुद्रेऽवसेया ॥

सम्प्रति सूर्यद्वीपवक्तव्यतामतिदेशत आह—

**दीवु व्व लावणब्भिं-तराण एमेव रविदीवा ॥ ५० ॥**

व्याख्या—एवमेव गौतमद्वीप इव यौ द्वौ जम्बूद्वीपसत्कौ रवी यौ च लावणावभ्यन्तरौ लवणसमुद्रस्य शिखाया अभ्यन्तरचारिणौ द्वौ रवी, एतेषां चतुर्णामपि रवीणां संवन्धिनो ये द्वीपा रविद्वीपा इति विश्रुतास्ते वक्तव्याः। इयमत्र भावना—गौतमद्वीप इव मन्दरपर्वतस्य पश्चिमदिशि वेदिकान्तात्परतो लवणसमुद्रं द्वादश योजनसहस्राणि अवगाह्यात्रान्तरे द्वयोर्जम्बूद्वीपसत्कयोः सूर्ययोर्द्वयोश्च लवणसमुद्रशिखाया अभ्यन्तरचारिणोः सूर्ययोः सत्काश्चत्वारो द्वीपाः, ते च प्रत्येकमायामविष्कम्भाभ्यां द्वादशयोजनसहस्रप्रमाणा एकैकया पद्मवरवेदिकया एकैकेन च वनखण्डेन समन्ततः परिक्षिप्ताः, एकैकस्य च द्वीपस्य मध्ये वहुसमरमणीये भूमिभागे एकैकः प्रासादावतंसकः । गौतमद्वीपे भौमेयमावसथम्, एषु तु प्रासा-

दावतंसका इति नानात्वम्, एतच्चाग्रे वक्ष्यति । तेऽपि च प्रासादावतंसकाः प्रत्येकं सार्धानि द्वाषष्टियोजनानि उच्चैस्त्वेन, सक्रोशानि एकत्रिंशद्योजनानि आयामविष्कम्भाभ्याम्। एकैकस्य च प्रासादावतंसकस्य मध्ये महत्येका मणिमयी पीठिका । ताश्च प्रत्येकं योजनप्रमाणायामविष्कम्भा द्विगव्यूतप्रमाणबाहल्याः । एकैकस्याश्च मणिपीठिकाया उपरि स्वस्वाधिपतिसूर्ययोग्यं सपरिवारं सिंहासनम् । सूर्याश्च प्रत्येकं वर्षसहस्राधिकैकपल्योपमस्थितयः चतुर्णामिन्द्रसामानिकसहस्राणां चतसृणामग्रमहिषीणां सपरिवाराणां तिसृणां पर्षदां सप्तानामनीकानां सप्तानामनीकाधिपतीनां षोडशानामारक्षकदेवसहस्राणामन्येषां च स्वस्वसूर्याभिधराजधानीवास्तव्यानां ज्योतिष्काणां देवानां देवीनां चाधिपतयः । चतसृणां चाग्रमहिषीणामिमानि सूर्यप्रज्ञप्त्यादिषु नामान्युक्तानि, तद्यथा—एका सूर्यप्रभा, द्वितीयाऽऽतपा, तृतीयाऽर्चिर्माला, चतुर्थी प्रभङ्करा। उक्तं च—"सूरस्स णं भंते जोइसिंदस्स जोइसरन्नो कइ अग्गमहिसीउ पन्नत्ताउ ? गोयमा ! चत्तारि अग्गमहिसीउ पन्नत्ताउ, तं जहा–सूरप्पभा, आयवा, अच्चिमाली, पहंकरा"। एकैकाऽपि च यदा सूर्यः परिचारणाभिमुखो भवति, तदा चत्वारि चत्वारि आत्मसमानरूपाणि देवीसहस्राणि विकुर्वते । उक्तं च–"तत्थ णं एगमेगाए देवीए चत्तारि चत्तारि देवीसाहस्सीउ परिवारो पन्नत्तो, पभू णं ताउ एगमेगा देवी अन्नाइं चत्तारि चत्तारि देवीसहस्साइं परिवारं विकुव्वित्तए, एवमेव सपुव्वावरेणं सोलस देविसहस्सा" इति । जम्बूद्वीपप्रकाशिनोश्च द्वयोः सूर्ययो राजधान्यौ स्वस्वद्वीपस्य पश्चिमदिशि तिर्यगसङ्ख्येयान्

१ बहुवचन चिन्त्यम्.

द्वीपसमुद्रान् व्यतिक्रम्यापरस्मिन् जम्बूद्वीपे द्वादशयोजनसहस्रेभ्यः परतो यथास्थानं वेदितव्ये, लवणाभ्यन्तरप्रकाशिनोस्तु द्वयोः सूर्ययोरपरस्मिन् लवणसमुद्रे ॥ ५० ॥

सम्प्रत्यतिदेशेनैव चन्द्रद्वीपवक्तव्यतामाह—

एमेव चंददीवा, नवरं पुव्वेण वेइयंताउ ।
दीविच्चय चंदाणं, अब्भिंतरलावणाणं च ॥ ५१ ॥

व्याख्या—एवमेव गौतमद्वीप इव द्वयोर्द्वयोर्जम्बूद्वीपसत्कयोश्चन्द्रयोर्द्वयोश्चान्तरयोर्लावणयोर्लवणशिखाभ्यन्तरचारिणोः सत्काश्चत्वारश्चन्द्रद्वीपाश्चन्द्राभिधा द्वीपा वक्तव्याः । नवरं ते जम्बूद्वीपवेदिकान्तात्पूर्वस्यां दिशि द्वादशयोजनसहस्रेभ्यः परतो वेदितव्याः । अत्र या काचन वक्तव्यता साऽनन्तरोक्तेषु रविद्वीपेष्विवाविशेषेण प्रतिपत्तव्या, नवरं चन्द्राणां स्थितिः पल्योपमवर्षलक्षाधिकम् । अग्रमहिषीणां चामूनि नामानि, तद्यथा—एका चन्द्रप्रभा, द्वितीया ज्योत्स्नाभा, तृतीयाऽर्चिर्माली (ला), चतुर्थी प्रभङ्करा । उक्तं च—"कइ णं भंते जोइसिंदस्स जोइसरन्नो कइ अग्गमहिसीउ पन्नत्ताउ? गोयमा! चत्तारि अग्गमहिसीउ पन्नत्ताउ, तं जहा—चंदप्पभा, जोसिणाहा, अच्चिमाली, पहंकरा" इति । शेषं तथैव । राजधान्यावपि जम्बूद्वीपसत्कयोर्द्वयोश्चन्द्रमसोः स्वस्वद्वीपात्पूर्वतोऽपरस्मिन् जम्बूद्वीपे लवणाभ्यन्तरवर्तिनोस्तु द्वयोश्चन्द्रमसोर्द्वे राजधान्यौ स्वस्वद्वीपात्पूर्वतोऽपरस्मिन् लवणसमुद्रे ॥ ५१ ॥

बाहिर लावणगाण वि, धाइयसंका उ बारससहस्से ।
उगाहिय रविदीवा, पुव्वेणेमेव चंदाणं ॥ ५२ ॥

व्याख्या—बाह्ययोर्लावणिकयोर्लवणसमुद्रशिखाबहिश्चारिणोर्लवणसमुद्रसत्कयोर्द्वयोः सूर्ययोर्धातकीखण्डद्वीपवेदिकान्तादर्वाग्द्वादश योजनसहस्राण्यवगाह्यात्रान्तरे मन्दरपर्वतस्य पश्चिमदिशि द्वौ द्वीपौ, तौ च प्रागुक्तयोर्द्वयो रविद्वीपवत् ( पयोरिव ) अविशेषेण प्रतिपत्तव्यौ । एवमेव रविद्वीपवन्मन्दरपर्वतस्य पूर्वेण लवणसमुद्रशिखाबहिश्चारिणोर्लवणसमुद्रसत्कयोर्द्वयोश्चन्द्रमसोः सत्कौ द्वौ चन्द्राभिधौ द्वीपौ धातकीखण्डद्वीपवेदिकान्तादर्वाग्द्वादश योजनसहस्राण्यवगाह्यात्रान्तरे प्रतिपत्तव्यौ, तौ च प्रागुक्तचन्द्रद्वीपसमानवक्तव्यताकाववसेयौ ॥ ५२ ॥

धाइयसंडब्भिंतर, रविदीवा बारसहस्स लवणजलं ।
उगाहिउ रविदीवा, पुव्वेणेमेव चंदाणं ॥ ५३ ॥

व्याख्या—धातकीखण्डद्वीपस्याभ्यन्तरचारिणो येऽभ्यन्तरं चरन्ति षड् रवयस्तेषामपि द्वीपा लवणसमुद्रे धातकीखण्डवेदिकान्तादर्वाग्द्वादश योजनसहस्राणि लवणसमुद्रमवगाह्यात्रान्तरे मन्दरपर्वतस्य पश्चिमदिशि प्रतिपत्तव्याः । एवमेव रविद्वीपा इव धातकीखण्डद्वीपाभ्यन्तरचारिणां चन्द्राणां द्वीपा मन्दरपर्वतस्य पूर्वतो धातकीखण्डद्वीपवेदिकान्तादर्वाक् लवणसमुद्रं द्वादश योजनसहस्राणि अवगाह्या-

त्रान्तरेऽवसेयाः । अत्रापि रविवक्तव्यता प्रागुक्तरविवद्भावनीया, चन्द्रवक्तव्यता प्रागुक्तचन्द्रवत् ॥५३॥

सम्प्रत्येतेषु चन्द्रसूर्यद्वीपेषु प्रासादांस्तत्परिमाणं चाह—

जोयणविसट्ठि अद्धं, च ऊसिया वित्थरेण तस्सऽद्धं ।
एएसि मज्झयारे, पासाया चंदसूराणं ॥ ५४ ॥

व्याख्या—एतेषामनन्तरोक्तानां चन्द्रसूर्यद्वीपानां मध्यकारे मध्ये चन्द्रसूर्याणां योग्याः प्रासादावतंसका भवन्ति । एष गौतमद्वीपाद्विशेषः । ते च प्रासादाः प्रत्येकं सार्धानि द्वाषष्टियोजनानि उच्छ्रिताः, तस्योच्छ्रयस्यार्धं सक्रोशानि एकत्रिंशद्योजनानीत्यर्थः विस्तारेण वेदितव्याः ॥ ५४ ॥

सम्प्रत्यन्तरद्वीपवक्तव्यतामाह—

चुल्लहिमवंत पुव्वा-वरेण विदिसासु सागरं तिसए ।
गंतूणंतरदीवा, तिन्नि सए होंति विच्छिन्ना ॥ ५५ ॥

व्याख्या—क्षुल्लहिमवति पूर्वस्यामपरस्यां च दिशि वेदिकान्तात् परतः प्रत्येकं द्वे द्वे दंष्ट्रे विदिगभिमुखे विनिर्गते, तद्यथा—पूर्वस्यां दिश्येका उत्तरपूर्वाभिमुखी द्वितीया दक्षिणपूर्वाभिमुखी, अपरस्यां दिश्येका दक्षिणापराभिमुखी अपराऽपरोत्तराभिमुखी, एवंभूतासु चतसृषु विदिगभिमुखीषु दंष्ट्रासु प्रत्येकं त्रीणि त्रीणि योजनशतानि सागरं लवणसमुद्रं गत्वाऽतिक्रम्यात्रान्तरे विदिक्षु प्रत्येकमे-

कैकभावेन चत्वारोऽन्तरद्वीपा भवन्ति, ते च त्रीणि योजनशतानि प्रत्येकं विस्तीर्णाः, प्रत्येकमेव च पञ्चधनुःशतप्रमाणविष्कम्भतया द्विगव्यूतोच्छ्रितया पद्मवरवेदिकया वनखण्डेन च सर्वतः परिक्षिप्ताः ॥५५॥

सम्प्रत्येतेषामेव चतुर्णामन्तरद्वीपानां परिधीन् नामानि चाह—

अउणापन्न नव सए, किंचूणे परिहि तेसिमे नामा ।
एगोरुय आभासिय, वेसाणी चेव लंगूलो ॥ ५६ ॥

व्याख्या—एकोनपञ्चाशानि एकोनपञ्चाशदधिकानि नव शतानि ९४९ किञ्चिदूनानि तेषां चतुर्णामन्तरद्वीपानां प्रत्येकं परिधिः । नामानि पुनरिमानि, तद्यथा—उत्तरपूर्वस्यामेकोरुकः, दक्षिणपूर्वस्यामाभाषिकः, दक्षिणापरस्यां वैषाणिकः, अपरोत्तरस्यां लाङ्गूलिकः । एवं द्वितीयादिचतुष्केष्वप्ययं क्रमो भावनीयः ॥ ५६ ॥

एएसिं दीवाणं, परउ चत्तारि जोयणसयाइं ।
उगाहिऊण लवणं, सपडिदिसिं चउसयपमाणा ॥ ५७ ॥
चत्तारंतरदीवा, हयगयगोकन्नसक्कुलीकन्ना

व्याख्या—एतेषामनन्तरोक्तानां चतुर्णां द्वीपानां परतः प्रत्येकं चत्वारि चत्वारि योजनशतानि लवण-

समुद्रमवगाह्यात्रान्तरे 'सपडिदिसिं ति' स्वप्रतिदिशि स्वस्वविदिशि चत्वारश्चतुर्योजनशतप्रमाणायामवि-ष्कम्भा अन्तरद्वीपाः, ते च किंनामान इत्याह—'हयगयगोकन्नसक्कुलीकन्ना' इति, अत्र कर्णशब्दो हयगजगोशब्दानां प्रत्येकमभिसंबध्यते हयकर्णो गजकर्णो गोकर्णः शष्कुलीकर्ण इति । इयं चात्र भावना—एकोरुकस्य परतो हयकर्णः, आभाषिकस्य परतो गजकर्णः, वैषाणिकस्य परतो गोकर्णः, लाङ्गूलिकस्य परतः शष्कुलीकर्ण इति । एते च हयकर्णादय एकोरुकादीनामीशानादिकोणाश्रयेण चतुर्भिर्योजनशतैर्व्यवस्थिताः । एवं येषां येषां चतुर्णा-मन्तरद्वीपानां पूर्वेभ्यः पूर्वेभ्यश्चतुर्भ्यो द्वीपेभ्यो यावत्प्रमाणमन्तरं तेषां द्वीपानां जम्बूद्वीपवेदिकान्ता-व्यवस्थिताः, ते च जम्बूद्वीपवेदिकान्तादप्यारभ्य दपि तावत्प्रमाणमन्तरमवसेयम् ॥

शेषानन्तरद्वीपानतिदेशत आह—

एवं पंच सयाइं, छस्सत्त य अठ नव चेव ॥ ५८ ॥
उग्गाहिऊण लवणं, विक्खंभोगाहसरिसया भणिया ।
चउरो चउरो दीवा, इमेहिं नामेहिं नायव्वा ॥ ५९ ॥

व्याख्या—एवं पूर्वोक्तेन प्रकारेण पञ्च षट् सप्त अष्टौ नव च योजनशतानि लवणसमुद्रमवगाह्य प्रत्येकं चत्वारश्चत्वारो द्वीपा भणितास्तीर्थंकरगणधरैः । कथंभूता भणिता इत्याह—विष्कम्भावगाहस-

हशा विष्कम्भे विष्कम्भविषयेऽवगाहसमानाः । किमुक्तं भवति ? ये चत्वारो द्वीपाः पूर्वानन्तरद्वीपचतुष्टयापेक्षया यावत्प्रमाणं लवणसमुद्रमवगाह्य स्थितास्ते विष्कम्भतोऽपि तावत्प्रमाणाः, तद्यथा—ये पूर्वस्मात् द्वीपचतुष्टयात परतः पञ्च योजनशतानि लवणसमुद्रमवगाह्य स्थितास्ते पञ्चयोजनशतायामविष्कम्भाः । ये च तेभ्योऽपि परतः षट् योजनशतानि लवणसमुद्रमवगाह्य स्थितास्ते षड्योजनशतायामविष्कम्भा इत्यादि । ते चैभिर्वक्ष्यमाणस्वरूपैर्नामभिर्ज्ञातव्याः ॥ ५८–५९ ॥

तान्येवाह—

आयंसमिंढगमुहा, अओमुहा गोमुहा य चउरो य ।
आसमुहा हत्थिमुहा, सीहमुहा चेव वग्घमुहा ॥ ६० ॥
तत्तो य आसकन्ना, हरिकन्नाकन्नकन्नपाउरणा ।
उक्कमुहा मेहमुहा, विज्जुमुहा विज्जुदंता य ॥ ६१ ॥
घणदंत लट्ठदंता, निगूढदंताय य सुद्धदंता य ।

व्याख्या—अमूनि नामानि सुगमानि । नवरमियमत्र भावना—हयकर्णादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिषु विदिक्षु प्रत्येकं पञ्च पञ्च योजनशतानि व्यतिक्रम्य पञ्चयोजनशतायामवि-

ष्कम्भाः पूर्वोक्तप्रमाणपद्मवरवेदिकावनखण्डमण्डितबाह्यप्रदेशा आदर्शमुखमेण्ढमुखायोमुखगोमुखनामानश्चत्वारो द्वीपाः, तद्यथा—हयकर्णस्य परत आदर्शमुखः, गजकर्णस्य परतो मेण्ढमुखः, गोकर्णस्य परतोऽयोमुखः, शष्कुलीकर्णस्य परतो गोमुख इति । एवमग्रेऽपि भावना कार्या । तत एतेषामप्यादर्शमुखादीनां चतुर्णां द्वीपानां परतो भूयोऽपि यथाक्रमं पूर्वोत्तरादिषु विदिक्षु प्रत्येकं षट् षड् योजनशतान्यतिक्रम्यात्रान्तरे षड्योजनशतायामविष्कम्भा यथोक्तप्रमाणपद्मवरवेदिकावनखण्डमण्डितपरिसरा अश्वमुखहस्तिमुखसिंहमुखव्याघ्रमुखनामानश्चत्वारो द्वीपाः । तत एतेषामप्यश्वमुखादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिषु विदिक्षु प्रत्येकं सप्त सप्त योजनशतान्यतिक्रम्यात्रान्तरे सप्तयोजनशतप्रमाणायामविष्कम्भा यथोक्तप्रमाणपद्मवरवेदिकावनखण्डसमवगूढा अश्वकर्णहरिकर्णाकर्णकर्णप्रावरणनामानश्चत्वारो द्वीपाः । तत एतेषामपि अश्वकर्णादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिषु विदिक्षु प्रत्येकमष्टावष्टौ योजनशतान्यतिक्रम्यात्रान्तरेऽष्टयोजनशतपरिमाणायामविष्कम्भाः पूर्वोक्तप्रमाणपद्मवरवेदिकावनखण्डमण्डितपरिसरा उल्कामुखमेघमुखविद्युन्मुखविद्युद्दन्ताभिधानाश्चत्वारो द्वीपाः । ततोऽमीषामप्युल्कामुखादीनां चतुर्णां द्वीपानां परतो यथाक्रमं पूर्वोत्तरादिषु विदिक्षु प्रत्येकं नवनवयोजनशतान्यतिक्रम्य (अत्रान्तरे) नवयोजनशतायामविष्कम्भा यथोक्तप्रमाणपद्मवरवेदिकावनखण्डपरिक्षिप्ता घनदन्तलष्टदन्तगूढदन्तशुद्धदन्तनामानश्चत्वारो द्वीपाः ।

तदेवं क्षुल्लहिमवति सर्वसङ्ख्ययाऽष्टाविंशतिरन्तरद्वीपा भवन्ति । एवं शिखरिण्यपि द्रष्टव्याः ॥

तथा चाह—

वासहरे सिहरम्मि वि, एवं चिय अठवीसा वि ॥ ६२ ॥

व्याख्या—एवमेव द्वीपा भवन्ति ॥ ६२ ॥

सम्प्रत्येतेषामेव क्षुल्लहिमवति शिखरिणि च वर्षधरपर्वते प्रत्येकमष्टाविंशतिसङ्ख्यानामन्तरद्वीपानां परिधिकरणप्रतिपादनार्थं पूर्वोक्तमेव पृथुत्वादिमानमाह—

तिन्नेव होंति आई, एकुत्तरवड्ढिया नव सयाउं ।
उंगाहिऊण लवणं, तावइयं चेव विछिन्ना ॥ ६३ ॥

व्याख्या—त्रीणि योजनशतानि अवगाहे विस्तारे चान्तरद्वीपानामादिर्भवति । किमुक्तं भवति ? आदिमाश्चत्वारोऽन्तरद्वीपास्त्रीणि योजनशतानि लवणसमुद्रमवगाह्य त्रीणि योजनशतानि विस्तारेण स्थिताः, तत एकोत्तरवृद्धिकानि एकयोजनशतोत्तरवृद्ध्या वर्धितानि योजनशतानि लवणसमुद्रमवगाह्य तावत्प्रमाणविस्तारास्तावदवसेया यावन्नव योजनशतानि लवणसमुद्रमवगाह्य नवयोजनशतप्रमाणविष्कम्भा अन्तिमाश्चत्वारो द्वीपाः । भावना प्रागेवोक्ता । तत्र प्रथमचतुष्के परिधिपरिमाणं प्रागेवोक्तम् ॥ ६३ ॥

सम्प्रति द्वितीयादिचतुष्केषु परिधीनामानयनाय करणमाह—

**पढमचउक्कपरिरया, बीयचउक्कस्स परिरउ अहिउ।**
**सोलसहिएहि तिहिं, जोयणसएहिं ( एमेव ) सेसाणं ॥ ६४ ॥**

व्याख्या—प्रथमचतुष्कपरिरयात् प्रथमानां चतुर्णामन्तरद्वीपानां परिरयपरिमाणात् द्वितीयचतुष्कस्य द्वितीयानां चतुर्णामन्तरद्वीपानां परिरयः परिरयपरिमाणं षोडशाधिकैस्त्रिभिर्योजनशतैरधिको भवति। तथाहि—प्रथमचतुष्कविष्कम्भात् द्वितीयचतुष्कविष्कम्भो योजनशतेनाधिकः, योजनशतस्य च परिरयस्त्रीणि योजनशतानि षोडशोत्तराणि, तद्यथा—शतस्य वर्गो दश सहस्राणि १००००, तेषां दशभिर्गुणने जातं लक्षं १०००००, तस्य वर्गमूलानयने लब्धानि त्रीणि शतानि षोडशोत्तराणि, शेषं व्यक्तम्। तत एतैः प्रथमचतुष्कपरिरयात् द्वितीयचतुष्कपरिरयोऽधिको भवति। एवं शेषाणामपि द्वीपचतुष्काणां परिरयाः पूर्वपूर्वद्वीपचतुष्कपरिरयात्त्रिभिः षोडशोत्तरैर्योजनशतैरधिकाः प्रतिपत्तव्याः। तत्रैकोरुकादीनां चतुर्णां परिरयो नव योजनशतानि एकोनपञ्चाशदधिकानि ९४९, तेषामुपरि त्रिषु योजनशतेषु षोडशोत्तरेषु प्रक्षिप्तेषु द्वितीयानां चतुर्णामन्तरद्वीपानां परिरयो भवति, स च द्वादश योजनशतानि पञ्चषष्ट्यधिकानि १२६५ ॥ ६४ ॥

तथा चाह—

एगोरुयपरिक्खे(खे)वो, नव चेव सयाइ अउणपन्नाइं ।
बारस पन्नट्ठाइं, हयकन्नाणं परिक्खेवो ॥ ६५ ॥

व्याख्या—एकोरुकपरिरय एकोरुकोपलक्षितानां चतुर्णामन्तरद्वीपानां परिरयो नव योजनशतानि एकोनपञ्चाशदधिकानि ९४९। हयकर्णानाम्, अत्र बहुवचनमन्येषां समानविष्कम्भानां त्रयाणामन्तरद्वीपानामुपलक्षणम्, ततोऽयमर्थः—हयकर्णादीनां चतुर्णामन्तरद्वीपानां द्वादश योजनशतानि पञ्चषष्ठ्यधिकानि १२६५। तेषामप्युपरि त्रिषु योजनशतेषु षोडशोत्तरेषु प्रक्षिप्तेषु तृतीयानामादर्शमुखादीनां चतुर्णामन्तरद्वीपानां परिरयो भवति, स च पञ्चदश योजनशतानि एकाशीत्यधिकानि १५८१। तेषामप्युपरि त्रिषु षोडशोत्तरेषु योजनशतेषु प्रक्षिप्तेषु अश्वमुखादीनां चतुर्णामन्तरद्वीपानां परिरयः, स चाष्टादश योजनशतानि सप्तनवत्यधिकानि १८९७ ॥ ६५ ॥

एतदेवाह—

पन्नरसिक्कासीया, आयंसमुहाण परिरओ होइ ।
अट्ठार सत्तणउया, आसमुहाणं परिक्खेवो ॥ ६६ ॥

व्याख्या—सुगमा । नवरं पूर्वार्धे उत्तरार्धे च बहुवचनमन्येषां समानविष्कम्भानां त्रयाणां त्रयाणाम-

न्तरद्वीपानामुपलक्षणम् । तेषामपि सप्तनवत्यधिकानामष्टादशशतानामुपरि त्रिषु योजनशतेषु षोरूशोत्तरेषु प्रक्षिप्तेषु अश्वकर्णादीनां चतुर्णामन्तरद्वीपानां परिरयो भवति, स च द्वाविंशतिर्योजनशतानि त्रयोदशोत्तराणि २२१३ । तेषामप्युपरि त्रिषु योजनशतेषु षोरूशोत्तरेषु प्रक्षिप्तेषु उल्कामुखादीनां चतुर्णामन्तरद्वीपानां परिरयः, स च पञ्चविंशतिर्योजनशतानि एकोनत्रिंशदधिकानि २५२९ ॥ ६६ ॥

एतदेवाह—

बावीसं तेराइं, परिखेवो होइ आसकन्नाणं ।
पणवीस अउणतीसा, उक्कमुहाणं परिक्खेवो ॥ ६७ ॥

व्याख्या—सुगमा । नवरमत्रापि पूर्वार्धे उत्तरार्धे च बहुवचनमन्येषां समानविष्कम्भानां त्रयाणां त्रयाणामुपलक्षणम् । तथा तेषामप्येकोनत्रिंशदधिकानां पञ्चविंशतियोजनशतानामुपरि त्रिषु षोरूशोत्तरेषु योजनशतेषु प्रक्षिप्तेषु घनदन्तादीनां चतुर्णामन्तरद्वीपानां परिरयो भवति, स चाष्टाविंशतियोजनशतानि पञ्चचत्वारिंशदधिकानि २८४५ ॥ ६७ ॥

तथा चाह—

दो चेव सहस्साइं, अठेव सया हवंति पणयाला ।
घणदंतगदीवाणं, परिखेवो होइ बोधव्वो ॥ ६८ ॥

व्याख्या—सुगमा । नवरं बहुवचनं लष्टदन्तगूढदन्तशुद्धदन्तानामुपलक्षणम् ॥ ६८ ॥

साम्प्रतमन्तरद्वीपचतुष्कसप्तकस्य गौतमद्वीपस्य च जम्बूद्वीपदिशि जलस्योपरि समुच्छ्रयपरिमाणमाह–

अड्डाइज्जा य दुवे, अद्धुठा अद्धपंचमा चेव ।
दो चेव अद्ध ब सत्तद्ध, सत्तमा होइ एक्को य ॥ ६९ ॥
एगूणिया य नवई, जोयणमद्धेण होइ ऊणाउं ।
जंबूद्दीवंतेणं, दीवाणं होइ उस्सेहो ॥ ७० ॥
वीसा नउइ पन्नठि, चत्त पन्नरस पंचसीया य ।
सठी चत्ता चेव य, गोयम दीवस्स नागाणं ॥ ७१ ॥

व्याख्या—इह द्वाभ्यां गाथाभ्यां योजनपरिमाणमुक्तं, तृतीयया गाथया यथाक्रमं पञ्चनवतिभागपरिमाणं, तत्राद्ये द्वे द्वीपचतुष्के । किमुक्तं भवति ? प्रथमं द्वितीयं च द्वीपचतुष्कमिति, जम्बूद्वीपदिशि अर्धतृतीयानि योजनानि जलस्योपरि समुच्छ्रिते । तत्र प्रथमे चतुष्केऽर्धतृतीयानां योजनानामुपरि विंशतिः पञ्चनवतिभागा योजनस्य, द्वितीये चतुष्के नवतिः पञ्चनवतिभागाः । तथाहि—प्रथमं द्वीपचतुष्कं जम्बूद्वीपवेदिकान्तात्त्रिभिर्योजनशतैर्व्यवस्थितं त्रियोजनशतायामविष्कम्भं च । तत्र त्रीणि

योजनशतानि द्वीपादर्वाक् त्रीणि ( योजनशतानि ) द्वीपविष्कम्भे, उभयेषामेकत्र मीलने जातानि षट् शतानि । ततस्त्रैराशिककर्मावतारः—यदि पञ्चनवतियोजनसहस्रपर्यन्ते जलवृद्धिः सप्त . योजनशतानि तर्हि षड्योजनशतपर्यन्ते का जलवृद्धिः ? राशित्रयस्थापना—९५०००।७००।६००। अत्राद्यन्तयो राश्योः शून्यद्विकस्यापवर्तना, आदिमध्ययोश्चैकैकस्य शून्यस्य ९५।७०।६। तत्र मध्यराशेः सप्ततिलक्षणस्यान्तेन षड्रूपेण राशिना गुणनं, जातानि चत्वारि शतानि विंशत्यधिकानि ४२० । तत एषामाद्येन पञ्चनवतिलक्षणेन राशिना भागहरणं, लब्धानि चत्वारि योजनानि चत्वारिंशच्च पञ्चनवतिभागा योजनस्य ४ ४०/९५, एतावती लवणदिशि प्रथमद्वीपचतुष्के प्रत्येकं समतलं भूभागमपेक्ष्य जलवृद्धिः । उपरि च ते चत्वारो द्वीपास्तस्यां लवणदिशि प्रत्येकं क्रोशद्विकं सप्रकाशाः, ततो जलवृद्धेर्द्विकेन भागो ह्रियते, लब्धे द्वे योजने विंशतिः पञ्चनवतिभागा योजनस्य, एतावता हीना जम्बूद्वीपदिशि जलवृद्धिः क्रोशद्विकं च लवणदिश्यपि सप्रकाशम्, अतस्तदधिकमिह प्रक्षिप्यते, तत आगतं जम्बूद्वीपदिशि जलस्योपरि समुच्छ्रयपरिमाणमर्धतृतीयानि योजनानि विंशतिश्च पञ्चनवतिभागा योजनस्य यो० २ क्रो० २ २०/९५ ॥

तथा द्वितीयं द्वीपचतुष्कं जम्बूद्वीपवेदिकान्तात् परतश्चतुर्भिर्योजनशतैर्व्यवस्थितं चतुर्योजनशतायामविष्कम्भं च । ततश्चत्वारि योजनशतानि द्वीपादर्वाक् चत्वारि द्वीपविष्कम्भे इति मिलितान्यष्टौ शतानि, ततस्त्रैराशिकं—यदि पञ्चनवतियोजनसहस्रपर्यन्ते सप्त शतानि जलवृद्धिस्ततोऽष्टयोजनशतपर्यन्ते का वृद्धिः ? राशित्रयस्थापना—९५०००।७००।८००। अत्राद्यन्तयो राश्योः शून्यद्विकापवर्तना, आदि-



मध्ययोरेकैकस्य शून्यस्य, ९५।७०।८। तत्र मध्यराशेरन्त्येन राशिनाऽष्टकलक्षणेन गुणना, जातानि पञ्च शतानि षष्ठ्यधिकानि ५६०, तेषामाद्येन पञ्चनवतिलक्षणेन राशिना भागहारः, लब्धानि पञ्च योजनानि पञ्चाशीतिश्च पञ्चनवतिभागा योजनस्य ५ $\frac{८५}{९५}$, एतावती लवणदिशि जलवृद्धिः, क्रोशद्विकं च जलस्योपरि तत्र द्वीपानां सप्रकाशं, ततो जलवृद्धेर्द्विकेन भागहारः, लब्धानि अर्धतृतीयानि योजनानि सार्धाश्च द्विचत्वारिंशत्सङ्ख्याः पञ्चनवतिभागाः, एतावता हीना जलवृद्धिः जम्बूद्वीपदिशि क्रोशद्विकं च लवण-दिश्यपि सप्रकाशमिति तदधिकमिह प्रक्षिप्यते, क्रोशद्विके च पञ्चनवतिभागाः सार्धा सप्तचत्वारिंशत्, ततस्सार्धा सप्तचत्वारिंशत् सार्धा च द्विचत्वारिंशत् एकत्र मीलिता, जाता नवतिः, तत आगतं द्वितीयद्वीपचतुष्कस्य जम्बूद्वीपदिशि जलस्योपरि समुच्छ्रयपरिमाणमर्धतृतीयानि योजनानि नवतिश्च पञ्चनवतिभागा योजनस्य यो० २ क्रो० २ $\frac{९०}{९५}$ ॥

तृतीये द्वीपचतुष्के जम्बूद्वीपदिशि जलस्योपरि समुच्छ्रयपरिमाणमर्धचतुर्थानि योजनानि पञ्चषष्टिश्च पञ्चनवतिभागा योजनस्य । तथाहि—तृतीयं द्वीपचतुष्कं जम्बूद्वीपवेदिकान्तात् परतः पञ्च-भिर्योजनशतैर्व्यवस्थितं पञ्चयोजनशतायामविष्कम्भं च ततो द्वीपादर्वागपि पञ्च योजनशतानि द्वीप-विष्कम्भे च पञ्च योजनशतानीति मिलितानि, जातानि दश योजनशतानि, ततस्त्रैराशिकं—यदि पञ्चनवतियोजनसहस्रपर्यन्ते सप्त शतानि जलवृद्धिस्ततो दशयोजनशतपर्यन्ते का वृद्धिः? राशि-त्रयस्थापना—९५०००।७००।१०००। अत्राद्यन्तयो राश्योः शून्यत्रयस्यापवर्तना ९५।७००।१। ततो



मध्यस्य सप्तशतरूपस्य राशेरन्त्येनैकलक्षणेन राशिना गुणनं, जातानि सप्त शतानि, तेषामाद्येन पञ्चनवतिलक्षणेन राशिना भागहारे लब्धानि सप्त योजनानि, पञ्चत्रिंशच्च पञ्चनवतिभागा योजनस्य, एतावती लवणदिशि तृतीयद्वीपचतुष्के जलवृद्धिः, उपरि क्रोशद्वयं सप्रकाशं, ततो जलवृद्धेर्द्विकेन भागो ह्रियते, लब्धानि अर्धचतुर्थानि योजनानि सार्धाश्च सप्तदश पञ्चनवतिभागाः, एतावता हीना जलवृद्धिर्जम्बूद्वीपदिशि, क्रोशद्विकं लवणदिश्यपि सप्रकाशमिति तदधिकमिह प्रक्षिप्यते, क्रोशद्विके च पञ्चनवतिभागाः सार्धा सप्तचत्वारिंशत्, ततः सार्धा सप्तचत्वारिंशत् सार्धाश्च सप्तदश एकत्र मिलिता जाता पञ्चषष्टिः, तत आगतं तृतीये द्वीपचतुष्के जम्बूद्वीपदिशि जलस्योपरि समुच्छ्रयपरिमाणमर्धचतुर्थानि योजनानि पञ्चषष्टिश्च पञ्चनवतिभागा योजनस्य यो० ३ क्रो० २ $\frac{६५}{९५}$ ॥

चतुर्थे द्वीपचतुष्के जम्बूद्वीपदिशि जलस्योपरि समुच्छ्रयोऽर्धपञ्चमानि योजनानि चत्वारिंशच्च पञ्चनवतिभागा योजनस्य । तथाहि—चतुर्थं द्वीपचतुष्कं जम्बूद्वीपवेदिकान्तात् परतः षड्भिर्योजनशतैर्व्यवस्थितं षड्योजनशतायामविष्कम्भं च । ततो द्वीपादर्वागपि षड् योजनशतानि द्वीपविष्कंभे च ( षड् योजनशतानि ) इत्येकत्र मिलितानि जातानि द्वादश शतानि । ततस्त्रैराशिकं—यदि पञ्चनवतियोजनसहस्रपर्यन्ते सप्त शतानि जलवृद्धिस्ततो द्वादशयोजनशतपर्यन्ते का वृद्धिः ? राशित्रयस्थापना—९५०००।७००।१२००। अत्राद्यन्तयोः राश्योः शून्यद्विकस्यापवर्तना आदिमध्ययोश्चैकैकस्य शून्यस्य, स्थापना—९५।७०।१२। तत्र मध्यस्य सप्ततिलक्षणस्य राशेरन्त्येन द्वादशरूपेण राशिना गुणनं, जातान्यष्टौ

शतानि चत्वारिंशदधिकानि ८४०, एतेषामाद्येन पञ्चनवतिलक्षणेन राशिना भागो ह्रियते, लब्धान्यष्टौ योजनानि अशीतिश्च पञ्चनवतिभागा योजनस्य, एतावती लवणदिशि जलवृद्धिः, क्रोशद्विकं सप्रकाशं, ततो जलवृद्धेर्द्विकेन भागहरणं, लब्धानि चत्वारि योजनानि चत्वारिंशच्च पञ्चनवतिभागाः, एतावता हीना जम्बूद्वीपदिशि जलवृद्धिः, क्रोशद्विकं च लवणदिश्यपि सप्रकाशम्, अतस्तदधिकमिह प्रक्षिप्यते, तत आगतमर्धपञ्चमानि योजनानि चत्वारिंशच्च पञ्चनवतिभागा योजनस्य यो० ४ क्रो० २ $\frac{४०}{९५}$ ॥

तथा द्वे पञ्चमषष्ठरूपे द्वीपचतुष्के जम्बूद्वीपदिशि जलस्योपरि समुच्छ्रिते अर्धषष्ठानि अर्धपष्ठानि योजनानि यथाक्रमं पञ्चदश पञ्चाशीतिश्च पञ्चनवतिभागा योजनस्य । तथाहि—पञ्चमं द्वीपचतुष्कं (जम्बू-)द्वीपवेदिकान्तात्परतः सप्तभिर्योजनशतैर्व्यवस्थितं सप्तयोजनशतायामविष्कम्भं च । ततो द्वीपादर्वागपि सप्त योजनशतानि द्वीपविष्कम्भे च ( सप्त योजनशतानि ) इति मिलितानि चतुर्दश शतानि । ततस्त्रैराशिकं—यदि पञ्चनवतियोजनसहस्रपर्यन्ते सप्त शतानि जलवृद्धिस्ततश्चतुर्दशयोजनशतपर्यन्ते का जलवृद्धिः ? राशित्रयस्थापना—९५०००।७००।१४००। अत्राद्यन्तयो राश्योः शून्यद्विकस्यापवर्तना, आदिमध्ययोश्चैकैकस्य शून्यस्य ९५।७०।१४। ततो मध्यस्य सप्ततिलक्षणस्य राशेरन्त्येन चतुर्दशलक्षणेन राशिना गुणनं, जातानि नव शतानि अशीत्यधिकानि ९८०, एतेपामाद्येन पञ्चनवतिरूपेण राशिना भागहारः, लब्धानि दश योजनानि त्रिंशच्च पञ्चनवतिभागा योजनस्य, एतावती लवणदिशि जलवृद्धिः, जलस्य चोपरि तत्र सप्रकाशं क्रोशद्वयं, ततो जलवृद्धेर्द्विकेन भागो ह्रियते, लब्धानि पञ्च योजनानि पञ्चदश

च पञ्चनवतिभागा योजनस्य, एतावता हीना जम्बूद्वीपदिशि जलवृद्धिः, क्रोशद्विकं च लवणदिश्यपि सप्रकाशमिति तदधिकमिह प्रक्षिप्यते, तत आगतं पञ्चमे द्वीपचतुष्के जम्बूद्वीपदिशि जलस्योपरि समुच्छ्रयपरिमाणमर्धपष्ठानि योजनानि पञ्चदश पञ्चनवतिभागा योजनस्य यो० ५ क्रो० २ $\frac{१५}{९५}$ ॥

तथा षष्ठं द्वीपचतुष्कं जम्बूद्वीपवेदिकान्तात्परतोऽष्टाभिर्योजनशतैर्व्यवस्थितमष्टयोजनशतप्रमाणायामविष्कम्भं च, ततो द्वीपादर्वागप्यष्टौ योजनशतानि द्वीपविष्कम्भे चाष्टौ योजनशतानीत्युभयमीलने जातानि षोडश शतानि, ततस्त्रैराशिकं—यदि पञ्चनवतियोजनसहस्रपर्यन्ते सप्त योजनशतानि जलवृद्धिस्ततः षोडशयोजनशतपर्यन्ते का जलवृद्धिः ? राशित्रयस्थापना—९५०००।७००।१६००। तत्राद्यन्तयो राश्योः शून्यद्विकस्यापवर्तना, आदिमध्ययोश्चैकैकस्य शून्यस्य ९५।७०।१६। ततो मध्यस्य सप्ततिलक्षणस्य राशेरन्त्येन षोडशरूपेण राशिना गुणनं, जातानि एकादश शतानि विंशत्यधिकानि ११२०, एतेषामाद्येन पञ्चनवतिलक्षणेन राशिना भागो ह्रियते, लब्धान्येकादश योजनानि पञ्चसप्ततिश्च पञ्चनवतिभागा योजनस्य, एतावती लवणदिशि जलवृद्धिः, क्रोशद्विकं च जलस्योपरि सप्रकाशं, ततो जलवृद्धेर्द्विकेन भागहारे लब्धानि सार्धानि पञ्च योजनानि सार्धा च सप्तत्रिंशत् पञ्चनवतिभागा योजनस्य, एतावता हीना जम्बूद्वीपदिशि जलवृद्धिः, क्रोशद्विकं च लवणदिश्यपि सप्रकाशमिति तदधिकमिह प्रक्षिप्यते, क्रोशद्विके च सार्धा सप्तचत्वारिंशत् पञ्चनवतिभागाः, ततः सार्धा सप्तचत्वारिंशत् सार्धा

पञ्चाशीतिश्च पञ्चनवतिभागा सप्तत्रिंशच्च एकत्र मिलिता पञ्चाशीतिः आगतानि अर्धषष्ठानि योजनानि योजनस्य यो० ५ क्रो० २ $\frac{८५}{९५}$ ॥

तथा एकं सप्तमं द्वीपचतुष्कं जलस्योपरि जम्बूद्वीपदिशि सप्रकाशमर्धसप्तमानि योजनानि पष्टिश्च पञ्चनवतिभागा योजनस्य। तथाहि—सप्तमं द्वीपचतुष्कं जम्बूद्वीपवेदिकान्तात्परतो नवभिर्योजनशतै-र्व्यवस्थितं नवयोजनशतायामविष्कम्भं च ततो द्वीपादर्वागपि नव योजनशतानि द्वीपविष्कम्भे च नव योजनशतानीत्युभयमीलने जातान्यष्टादश शतानि, ततस्त्रैराशिकं—यदि पञ्चनवतियोजनसहस्रपर्यन्ते सप्त योजनशतानि जलवृद्धिस्ततोऽष्टादशयोजनशतपर्यन्ते का जलवृद्धिः? राशित्रयस्थापना—९५०००। ७००।१८००। तत्राद्यन्तयो राश्योः शून्यद्विकस्यापवर्तना, आदिमध्ययोश्चैकैकस्य शून्यस्य ९५।७०।१८। ततो मध्यस्य सप्ततिलक्षणस्य राशेरन्त्येनाष्टादशकरूपेण राशिना गुणनं, जातानि षष्ट्यधिकानि द्वादश शतानि १२६०, एतेषामाद्येन पञ्चनवतिलक्षणेन राशिना भागो ह्रियते, लब्धानि त्रयोदश योजनानि पञ्चविंशतिश्च पञ्चनवतिभागा योजनस्य, एतावती लवणदिशि जलवृद्धिः, क्रोशद्विकं च जलस्योपरि सप्रकाशं, ततो जलवृद्धेर्द्विकेन भागहरणं, लब्धानि अर्धसप्तमानि योजनानि साधाश्च द्वादश पञ्चनव-तिभागा योजनस्य, एतावता हीना जम्बूद्वीपदिशि जलवृद्धिः, क्रोशद्विकं च लवणदिश्यपि सप्रकाश-मिति तदधिकमिह प्रक्षिप्यते, क्रोशद्विके च साधाः सप्तचत्वारिंशत्पञ्चनवतिभागाः, ततः साधा सप्त-

चत्वारिंशत् सार्धाश्च द्वादश एकत्र मिलिता जाता षष्टिः, आगतानि अर्धसप्तमानि योजनानि षष्टिश्च पञ्चनवतिभागा योजनस्य यो० ६ क्रो० २ $\frac{60}{95}$ ॥

तथा गौतमद्वीपस्य जम्बूद्वीपदिशि जलस्योपरि समुत्सेध एकोना नवतिरर्धेनोना योजनानां सार्धान्यष्टाशीतियोंजनानीत्यर्थः चत्वारिंशच्च पञ्चनवतिभागा योजनस्य । तथाहि—जम्बूद्वीपवेदिकान्तात् द्वादशभिर्योजनसहस्रैर्व्यवस्थितो गौतमद्वीपो विष्कम्भोऽपि च तस्य द्वादश योजनसहस्राणि, ततो मिलितानि जातानि चतुर्विंशतिसहस्राणि । ततस्त्रैराशिकं—यदि पञ्चनवतियोजनसहस्रपर्यन्ते सप्त शतानि जलवृद्धिस्ततश्चतुर्विंशतियोजनसहस्रपर्यन्ते का जलवृद्धिः ? राशित्रयस्थापना—९५०००।७००।२४०००। अत्राद्यन्तयो राश्योः शून्यत्रयस्यापवर्तना ९५।७००।२४। ततो मध्यस्य सप्तशतलक्षणस्यान्त्येन चतुर्विंशतिरूपेण राशिना गुणनं, जातानि षोडश सहस्राणि अष्ट शतानि १६८००, तेषामाद्येन पञ्चनवतिलक्षणेन राशिना भागहारः, लब्धं षट्सप्तत्यधिकं योजनशतम्, अशीतिश्च पञ्चनवतिभागा योजनस्य, एतावती लवणदिशि गौतमद्वीपस्य जलवृद्धिः । क्रोशद्विकं च जलस्योपरि सप्रकाशं, ततो जलवृद्धेर्द्विं न भागो ह्रियते, लब्धान्यष्टाशीतियोजनानि चत्वारिंशच्च पञ्चनवतिभागा योजनस्य, एतावता र्द्ध जम्बूद्वीपदिशि जलवृद्धिः, क्रोशद्विकं च लवणदिश्यपि सप्रकाशमिति तदधिकमिह प्रक्षिप्यते, तत तं सार्धान्यष्टाशीतियोंजनानि चत्वारिंशच्च पञ्चनवतिभागा योजनस्य यो० ८८ क्रो० २ $\frac{40}{95}$ ॥

इह प्राक् रविशशिगौतमद्वीपानां जलस्योपरि समुत्सेधानयनाय करणमेव केवलमुक्तं, न (तु) समुत्सेधपरिमाणं, तत इह गौतमद्वीपस्य साक्षात्समुच्छ्रयपरिमाणमुक्तम्, एतदनुसारेण रविशशिद्वीपानामपि ज्ञातव्यं, समानायामविष्कम्भावगाहत्वात्समानकरणत्वाच्च । तदेवमुक्तं मेरोर्दक्षिणतो वर्तमानानामष्टाविंशतिसङ्ख्यानामन्तरद्वीपानां जलस्योपरि समुच्छ्रयपरिमाणम् ॥ ६९–७०–७१ ॥

साम्प्रतमुत्तरतो वर्तमानानामष्टाविंशतिसङ्ख्यानामतिदेशेनाह—

जावइय दक्खिणाओ, उत्तरपासे विवत्तिया चेव ।
चुल्लसिहरम्मि लवणे, विदिसासु अओ परं नत्थि ॥ ७२ ॥

व्याख्या—यावत्प्रमाणं दक्षिणतो मेरोर्दक्षिणस्यां दिशि अन्तरद्वीपानां जलस्योपरि समुत्सेधपरिमाणमुक्तं तावदेव तावत्प्रमाणमेव उत्तरतो मेरोरुत्तरस्यां दिशि अन्तरद्वीपानां जलस्योपरि समुच्छ्रयपरिमाणमवसेयम् । एते चान्तरद्वीपा लवणसमुद्रे क्षुल्लहिमवति शिखरिणि च वर्षधरपर्वते विदिक्षु पूर्वोत्तरादिरूपासु सन्ति, अतोऽस्मात्स्थानात्परं परत्रान्यत्र क्वापि कालोदादौ न सन्ति ॥ ७२ ॥

सम्प्रत्येतेष्वेवान्तर्द्वीपेषु नरवक्तव्यतामाह—

अंतरदीवेसु नरा, धणुसय अट्ठुस्सिया सया मुइया ।
पालंति मिहुणधम्मं, पल्लस्स असंखभागाउ ॥ ७३ ॥

चउसट्ठीपिट्ठकरं—डयाण मणुयाण तेसिमाहारो ।
भत्तस्स चउत्थस्स य, उणसीइ दिणाणि पालणया ॥ ७४ ॥

व्याख्या—षट्पञ्चाशत्सङ्ख्येष्वन्तरद्वीपेषु नरा मनुष्या अष्टौ धनुःशतानि उच्छ्रिता उच्चाः, तथा सदा सर्वकालं मुदिताः प्रमुदिता रोगशोकाद्युपद्रवक्लेशस्याप्यभावात्, तेऽपि हि हैमवतादिवास्तव्यमनुष्या इव कल्पद्रुमसंपाद्यभोगोपभोगाः प्रबलपुण्योपचयभाजः, ततो न कोऽपि तेषामपि रोगशोकाद्युपद्रवः संभवति, नवरमत्र कल्पद्रुमफलरसास्वादादिपर्यायानधिकृत्यानन्तगुणहीनं द्रष्टव्यम् । तथा ते नराः पालयन्ति मिथुनधर्मं युगलधार्मिकत्वं हैमवतादिमनुष्यवत्, तेषां च नराणामायुः पल्यस्य पल्योपमस्यासङ्ख्येयो भागः, तथा पृष्ठकरण्डकानां चतुःषष्टिर्मनुष्याणां भवति, आहारोऽपि च तेषां चतुर्थभक्तस्यातिक्रमे एकोपवासातिक्रमे इत्यर्थः, तेषां च मनुष्याणां स्वापत्यपालना एकोनाशीतिदिनानि ॥७३–७४॥

सम्प्रति लवणसमुद्रेऽवगाहमाह—

पंचाणउई लवणे, गंतूणं जोयणाणि उभउऽवि ।
जोयणमेगं लवणो, उंगाहेणं मुणेयव्वो ॥ ७५ ॥

व्याख्या—लवणे लवणसमुद्रे उभयतोऽपि जम्बूद्वीपवेदिकान्ताद्धातकीखण्डद्वीपाच्च प्रत्येकं पञ्च-

नवतिं पञ्चनवतिं योजनानि गत्वाऽतिक्रम्य योजनमेकं लवणसमुद्रोऽवगाहेन समतलभू-भागमधिकृत्योण्डत्वेन वेदितव्यः। तथाहि—यदि पञ्चनवतियोजनसहस्रपर्यन्ते योजनसहस्रमवगाहस्ततः पञ्चनवतियोजनपर्यन्ते कोऽवगाहः ? तत्र राशित्रयस्थापना—९५०००।१०००।९५। अत्रादिमध्ययो राश्योः शून्यत्रयस्यापवर्तना ९५।१।९५। ततो मध्यस्य राशेरेकरूपस्यान्त्येन पञ्चनवतिलक्षणेन राशिना गुणना-जाता पञ्चनवतिः, तत आद्येन राशिना पञ्चनवतिलक्षणेन विभज्यते, लब्धमेकं योजनमिति ॥ ७५ ॥

तथा—

पंचाणउइं सहस्से, गंतूणं जोयणाणि उभओऽवि ।
जोयणसहस्समेगं, लवणोगाहो होइ ॥ ७६ ॥

व्याख्या—उभयतोऽपि जम्बूद्वीपवेदिकान्ताद्धातकीखण्डाच्च द्वीपात् प्रत्येकं पञ्चनवतिं पञ्चनवतिं योजनसहस्राणि गत्वाऽतिक्रम्यात्रान्तरे लवणो लवणसमुद्रोऽवगाहेनोण्डत्वेन भवति ज्ञातव्यो योजनसहस्रमेकम्। तथाहि—यदि पञ्चनवतियोजनपर्यन्ते योजनमवगाहस्ततः पञ्चनवतियोजनसहस्रपर्यन्ते कोऽवगाहः ? तत्र राशित्रयस्थापना—९५।१।९५०००। अत्र मध्यराशेरेकरूपस्यान्त्येन राशिना पञ्चनवतिसहस्ररूपेण गुणने जातानि पञ्चनवतिसहस्राणि ९५०००। तेषामाद्येन राशिना पञ्चनवतिलक्षणेन भागो ह्रियते, लब्धमेकं योजनसहस्रं १०००। तदेवमुक्तो जघन्य उत्कृष्टश्चावगाहः, मध्यमस्तु स्वयमभ्यूह्यः ॥ ७६ ॥

सम्प्रति लवणोदधावेवोच्चत्वमाह—

पंचाणउइं लवणे, गंतूणं जोयणाणि उभओऽवि ।
उस्सेहेणं लवणो, सोलस किल जोयणे होइ ॥ ७७ ॥

व्याख्या—उभयतो जम्बूद्वीपवेदिकान्ताद्धातकीखण्डाच्च प्रत्येकं लवणे लवणसमुद्रे पञ्चनवतिं पञ्चनवतिं योजनानि गत्वाऽतिक्रम्योत्सेधेन समतलभूभागमपेक्ष्य तत ऊर्ध्वं जलोच्चत्वेन लवणो लवणसमुद्रः षोडश योजनानि भवति । इह षोडशसहस्रप्रमाणायाः शिखायाः शिरसि उभयोश्च वेदिकान्तयोर्मूले दवरिकायां दत्तायां यदपान्तराले किमपि जलरहितमाकाशं तदपि कर्ण(रण)गत्या तदाभाव्यमिति सजलविवक्षितत्वात् विवक्षितमुच्चमानमुच्चत्वपरिमाणमवसेयम् । यथा मन्दरपर्वतस्य एकादशभागपरिहाणिः । तथाहि—न मन्दरपर्वतस्य सर्वत्र प्रतिनियता एकादशभागपरिहाणिः, किं तु क्वापि कियती, केवलं मूलादारभ्य शिखरं यावद्दवरिकायां दत्तायां यदपान्तराले क्वापि कियदाकाशं तत्सर्वं कर्णगत्या मेरोराभाव्यमिति मेरुतया परिकल्प्य गणितज्ञाः सर्वत्र एकादशभागपरिहाणिं परिवर्णयन्ति, तद्वदिदमपि यथोक्तमुच्चत्वपरिमाणं भावनीयम् । अत्र चेयं त्रैराशिकगणिते भावना—यदि पञ्चनवतियोजनसहस्रातिक्रमे षोडश योजनसहस्राणि जलोत्सेधस्ततः पञ्चनवतियोजनातिक्रमे क उत्सेधः? राशित्रयस्थापना—९५०००।१६०००।९५। अत्रादिमध्ययो राश्योः शून्यत्रिकस्यापवर्तना ९५।१६।९५। ततो मध्य-

राशेः षोडशलक्षणस्यान्त्येन पञ्चनवतिलक्षणेन गुणने जातानि पञ्चदश शतानि विंशत्यधिकानि १५२०, एषामादिराशिना पञ्चनवतिलक्षणेन भागे हृते लब्धानि षोडश योजनानि ॥ ७७ ॥

तथा—

पंचाणउइ सहस्से, गंतूणं जोयणाणि उभउऽवि ।
उस्सेहेणं लवणो, सोलससाहस्सिउ भणिउ ॥ ७८ ॥

व्याख्या—उभयतो जम्बूद्वीपवेदिकान्ताद्धातकीखण्डाच्च प्रत्येकं पञ्चनवतियोजनसहस्राणि गत्वाऽतिक्रम्यात्रान्तरे लवणो लवणसमुद्र उत्सेधमधिकृत्य षोडशसाहस्रिकः षोडशसहस्रप्रमाणो भणितस्तीर्थंकरगणधरैः । तथाहि—यदि पञ्चनवतियोजनपर्यन्ते षोडश योजनान्युत्सेधस्ततः पञ्चनवतियोजनसहस्रपर्यन्ते क उत्सेधः ? तत्र राशित्रयस्थापना—९५।१६।९५०००। अत्र मध्यस्य राशेः षोडशरूपस्यान्त्येन राशिना पञ्चनवतिसहस्ररूपेण गुणने जातानि पञ्चदश लक्षा विंशतिसहस्राणि १५२००००, तेषामाद्येन राशिना पञ्चनवतिलक्षणेन भागे ह्रियते, लब्धानि षोडश योजनसहस्राणि १६००० । तदेवमुक्तो जघन्य उत्कृष्टश्चोत्सेधः, मध्यमस्तु स्वयमभ्यूह्यः ॥ ७८ ॥

सम्प्रति लवणसमुद्रस्य प्रतरपरिमाणमाह—

वित्थाराउ सोहिय, दस य सहस्साइ सेस अद्धम्मि ।

ते चेव पक्खिविता, लवणसमुद्दस्स सा कोमी ॥ ७ए ॥

लक्खं पंच सहस्सा, कोमीए तीइ संगुणेऊणं ।
लवणस्स मज्झपरिहि, ताहे पयरं इमं होइ ॥ ७० ॥

व्याख्या—विस्तारात् लवणसमुद्रसत्कविस्तारपरिमाणाद्दश सहस्राणि शोधयित्वा शेषस्यार्धं तान्येव दश सहस्राणि प्राक् शोधितानि भूयः प्रक्षिप्यन्ते, प्रक्षिप्य च यो राशिर्जात उपलभ्यते स कोटिरिति व्यवह्रियते, सा च कोटिः प्रमाणतो लक्षमेकं पञ्च सहस्राणि । तथाहि—लवणसमुद्रस्य विस्तारो द्वे योजनलक्षे ताभ्यां दश सहस्राण्यपनीयन्ते, अपनीतेषु च तेषु जातं शेषं नवतिसहस्राधिकं लक्षं, तस्यार्धं पञ्चनवतिसहस्राणि, तानि दशसहस्रयुतानि क्रियन्ते, आगतं पञ्च सहस्राणि लक्षं (च) १०५०००, तया एवंरूपया कोट्या लवणस्य लवणसमुद्रस्य मध्यपरिधिं मध्यभागवर्तिनं परिरयं संगुणय, तत इदं वक्ष्यमाणं प्रतरं प्रतरपरिमाणं भवति ॥ ७ए–७० ॥

तदेवाह—

नवनउई कोमिसया, एगठी कोमि लक्ख सत्तरस ।
पन्नरस सहस्साणि य, पयरं लवणस्स निद्दिठं ॥ ७१ ॥

व्याख्या—नवनवतिकोटिशतानि एकषष्टिकोटयः सप्तदश लक्षाः पञ्चदश सहस्राणि एए६११७१५०००

लवणस्य लवणसमुद्रस्य प्रतरं निर्दिष्टं तीर्थंकरगणधरैः । तथाहि—लवणसमुद्रमध्यपरिधिर्नव लक्षा अष्टाचत्वारिंशत्सहस्राणि षट् शतानि त्र्यशीत्यधिकानि ९४८६८३, एतच्च मध्यपरिधिपरिमाणं "अडयालीस सहस्सा" इत्यादिकया गाथया प्रागेव प्रतिपादितं, तच्च पञ्चसहस्राधिकलक्षप्रमाणया कोट्या गुण्यते, ततो यथोक्तं प्रतरपरिमाणं भवति ॥ ८१ ॥

सम्प्रति घनगणितमाह—

जोयणसहस्स सोलस, लवणसिहाऽहोगया सहस्सेगं ।
पयरं सत्तरस सह—स्स संगुणं लवणघणगणियं ॥ ८२ ॥

व्याख्या—लवणसमुद्रे समतलभूभागादूर्ध्वशिखा षोडश योजनसहस्राणि तथाऽधोगता भूमौ प्रविष्टा योजनसहस्रमेकं, तत् एकत्र मीलने जातानि सप्तदश सहस्राणि, तत एतैः सप्तदशसहस्रैः प्रागुक्तं प्रतरपरिमाणं ९९६११७१५००० गुण्यते, गुणिते च तस्मिन् लवणसमुद्रस्य घनगणितमागच्छति ॥ ८२ ॥

तच्चेदम्—

सोलस कोडाकोडी, तेणउइ कोडिसयसहस्साइं ।
उयालीस सहस्सा, नव कोडिसया य पन्नरसा ॥ ८३ ॥
पन्नास सयसहस्सा, जोयणाणं भवे अणूणाइं ।

लवणसमुद्दस्सेहिं, जोयणसंखाइ घनगणियं ॥ ७४ ॥

व्याख्या—षोडश कोटीकोट्यः त्रिनवतिः कोटिशतसहस्राणि एकोनचत्वारिंशत्कोटिसहस्राणि नव कोटिशतानि पञ्चदशकोट्यधिकानि पञ्चाशल्लक्षाणि योजनानामन्यूनानि १६९३९९१५५००००००, एतावद्योजनसङ्ख्यया लवणसमुद्रस्य घनगणितम् । आह—कथमेतावत्प्रमाणं लवणसमुद्रस्य घनगणितं भवति ? न हि सर्वत्र तस्य सप्तदशयोजनसहस्रप्रमाणः समुच्छ्रयः, किं तु मध्यभागे एव दशसहस्रपरिमाणपृथुत्वे, ततः कथं यथोक्तं गणितमुपपद्यते ? सत्यमेतत्, केवलं लवणशिखायाः शिरसि उभयोश्च वेदिकान्तयोरुपरि दवरिकायामेकान्तऋजुरूपायां दीयमानायां यदपान्तराले जलशून्यं क्षेत्रं तदपि कर्णगत्या तदाभाव्यमिति सजलं विवक्ष्यते । अत्रार्थे च दृष्टान्तः प्रागुक्त एव मन्दरपर्वतः, ततो यथोक्तं घनगणितमुच्यमानं न विरुध्यते । न चैतत्स्वमनीषिकाविजृम्भितं, किं त्वाचार्येणैव स्वविरचितायां विशेषणवत्यामेतद्विचारप्रक्रमेऽभिहितम्—"एयं उभयवेइयंताउ सोलससहस्सुस्सेह कन्नगइए जं लवणसमुद्दाभवं जलसुन्नंपि खित्तं तस्स गणियं, जहा मंदरपव्वयस्स एक्कारसभागहाणी कन्नगईए आगासस्स वि तदाभवं (वं) ति काउं भणिया तहा लवणसमुद्दस्स वि" ॥ ७३–७४ ॥

सम्प्रति शिखापरिमाणतो लवणसमुद्रस्य विष्कम्भपरिमाणमाह—

जहिबसि विक्खंभं, ओगाहित्ताण भजयसयगुणियं ।

तं सोलसहि विभत्तं, उवरिमसहियं भवे गणियं ॥ ७५ ॥

व्याख्या—यत्र शिखामस्तकादवगाह्य अधोऽवतीर्य विष्कम्भं ज्ञातुमिच्छसि, यद्यप्येवं व्याप्तिपुरःसर-
मुच्यते तथापि शिखाशिरसोऽवतीर्य समतलभूभाग एवेदं करणं द्रष्टव्यं नान्यत्र करणविभावनादौ एव-
मेवास्याः करणगाथाया भावितत्वात्, ततो लवणशिखातोऽधः षोडशयोजनसहस्राण्यवतीर्य तं षोडशयो-
जनसहस्रलक्षणं राशिमधोऽवतरणेन प्राप्तं नवत्यधिकेन शतेन गुणितं कृत्वा षोडशभिर्विभजेत्, विभक्ते
च सति यल्लभ्यते तत् उपरितनविष्कम्भसहितं शिखाशिरोगतविस्तारप्रमाणसहितं गणितं लवणसमु-
द्रचक्रवालविष्कम्भगणितं भवति । तथाहि–शिखामस्तकात् षोडशयोजनसहस्राण्यवतीर्णः, ततः षोडश
सहस्राणि ध्रियन्ते १६०००, तानि नवत्यधिकेन शतेन गुण्यन्ते, जातानि त्रिंशल्लक्षाणि चत्वारिंशत्सह-
स्राणि ३०४०००० । तत एतेषां षोडशभिर्भागो ह्रियते, लब्धमेकं लक्षं नवतिश्च सहस्राणि १९०००० ।
ततः शिखाशिरोगतविष्कम्भपरिमाणं दशसहस्ररूपं प्रक्षिप्यते १००००, जाते द्वे लक्षे २०००००,
एतावान् लवणसमुद्रे चक्रवालतया विष्कम्भः ॥ ७५ ॥

सम्प्रति बहिःप्रदेशादभ्यन्तरप्रवेशे उत्सेधानयनाय करणमाह—

जत्थिच्छसि उस्सेहं, ओगाहित्ताण लवणसलिलस्स ।
पंचाणउइविभत्ते, सोलसगुणिए गणियमाहु ॥ ७६ ॥

व्याख्या—बहिःप्रदेशादभ्यन्तरलवणसलिलस्य लवणोदसमुद्रस्यावगाह्य यत्र योजनादाववगाढे उत्सेधं समतलभूभागादूर्ध्वं जलस्योच्चत्वं ज्ञातुमिच्छसि तत् अवगाढं योजनादिकं पञ्चनवत्या विभज्यते, विभक्ते च तस्मिन् यल्लभ्यते तत् षोडशभिर्गुण्यते, गुणिते च सति यदागच्छति तदुत्सेधगणितमाहुर्गणितज्ञास्तीर्थकृदादयः तत्र वेदिकान्तात् पञ्चनवतियोजनसहस्राणि अवगाह्य लवणसमुद्रस्योत्सेधो ज्ञातुमिष्टः, ततः पञ्चनवतियोजनसहस्राणि ध्रियन्ते ९५०००, तेषां पञ्चनवत्या भागे हृते लब्धमेकं योजनसहस्रं, तत् षोडशभिर्गुण्यते, जातानि षोडश सहस्राणि, एतावान् पञ्चनवतियोजनसहस्रातिक्रमे उत्सेधः, एवमन्यत्रापि भावनीयमेतत्करणम्, सूत्रस्य व्यापकत्वात्। उक्तं च करणविभावनायाम्—"एएण करणेण जह जह उस्सेहो तह तह आणेयव्वो" इति। केवलमुभयतोऽपि पञ्चनवतियोजनसहस्राणि यावत्, न परतः, परतो दशयोजनसहस्रप्रमाणे सर्वत्रापि समोत्सेधत्वात्, एवं वक्ष्यमाणकरणमपि भावनीयम् ॥ ८६ ॥

सम्प्रति बहिःप्रदेशादभ्यन्तरप्रवेशे उद्वेधानयनाय करणमाह—

जइच्छसि उव्वेहं, ओगाहित्ताण लवणसलिलस्स ।
पंचाणउइ विभत्ते, जं लद्धं सो उ उव्वेहो ॥ ८७ ॥

व्याख्या—बहिःप्रदेशादुभयतोऽपि वेदिकान्तरूपादभ्यन्तरलवणसलिलस्य लवणोदसमुद्रस्यावगाह्य यत्र योजनादावुद्वेधं ज्ञातुमिच्छसि तदतिक्रान्तयोजनादिकं पञ्चनवत्या विभज्यते, विभक्ते च सति यल्ल-

न्यते स तत्र तावानुद्वेधः। तत्र वेदिकान्तात् पञ्चनवतियोजनसहस्राण्यवगाह्योद्वेधो ज्ञातुमिष्टः, ततः पञ्चनवतियोजनसहस्राणि ध्रियन्ते, तेषां पञ्चनवत्या भागे हृते लब्धं योजनसहस्रमेकम्, एतावान् पञ्चनवतियोजनसहस्रपर्यन्ते उभयतोऽप्युद्वेधः। एवमन्यत्रापि भावनीयम् ॥ ८७ ॥

सम्प्रति लवणसमुद्रे चन्द्रसूर्यादीनां सङ्ख्यामाह—

चत्तारि चेव चंदा, चत्तारि य सूरिया लवणतोए।
तारं नक्खत्तसयं, गहाण तिन्नेव बावन्ना ॥ ८८ ॥
दो चेव य सहस्सा, सत्तठी खलु भवे सहस्सा य।
नव य सया लवणजले, तारागणकोडिकोडीणं ॥ ८९ ॥

व्याख्या—लवणतोये लवणसमुद्रे चत्वारश्चन्द्राः चत्वारः सूर्याः (च), ते च जम्बूद्वीपगतचन्द्रसूर्यैः सह समश्रेण्या प्रतिबद्धाः। तद्यथा—द्वौ सूर्यावेकस्य जम्बूद्वीपगतस्य सूर्यस्य समश्रेण्या प्रतिबद्धौ, द्वौ (च) द्वितीयस्य जम्बूद्वीपगतस्य सूर्यस्य। तथा द्वौ चन्द्रमसावेकस्य जम्बूद्वीपगतस्य चन्द्रस्य समश्रेण्या प्रतिबद्धौ, द्वौ (च) द्वितीयस्य (जम्बूद्वीपगतस्य) चन्द्रस्य। तच्चैवम्—यदा जम्बूद्वीपगत एकः सूर्यो मेरोर्दक्षिणतश्चारं चरति तदा लवणसमुद्रेऽपि तेन सह समश्रेण्या प्रतिबद्ध एकः शिखाया अभ्यन्तरं

चारं चरति, द्वितीयस्तेनैव सह समश्रेण्या प्रतिबद्धः शिखायाः परतः । तदैव च यो जम्बूद्वीपे मेरोरुत्तरतश्चारं चरति, तेन सह समश्रेण्या प्रतिबद्धौ लवणसमुद्रे उत्तरत एकः शिखाया अभ्यन्तरं चारं चरति, द्वितीयस्तु तेनैव सह समश्रेण्या प्रतिबद्धः शिखायाः परतः । एवं चन्द्रमसोऽपि जम्बूद्वीपगतचन्द्राभ्यां सह समश्रेणिप्रतिबद्धा भावनीयाः । अत एव जम्बूद्वीप इव लवणसमुद्रेऽपि यदा मेरोर्दक्षिणतो दिवसो भवति तदा मेरोरुत्तरतोऽपि लवणसमुद्रे दिवसः, यदा च मेरोरुत्तरतो लवणसमुद्रे दिवसस्तदा दक्षिणतोऽपि दिवसः, तदा च पूर्वस्यां पश्चिमायां च दिशि लवणसमुद्रे रात्रिः । यदा च मेरोः पूर्वस्यां दिशि लवणसमुद्रे दिवसस्तदा पश्चिमायामपि दिशि दिवसः, यदा च पश्चिमदिशि दिवसस्तदा पूर्वदिश्यपि, तदा च मेरोर्दक्षिणत उत्तरतश्च नियमतो रात्रिः । एवं धातकीखण्डादिष्वपि भावनीयम्, तद्गतानामपि चन्द्रसूर्याणां जम्बूद्वीपगतचन्द्रसूर्यैः सह श्रेण्या व्यवस्थितत्वात् । उक्तं च सूर्यप्रज्ञप्तौ—"जया णं लवणसमुद्दे दाहिणद्धे दिवसे भवइ, तया णं उत्तरद्धेऽवि दिवसे भवइ । जया णं उत्तरद्धे दिवसे भवइ तया णं लवणसमुद्दे दाहिणद्धेऽवि दिवसे भवइ । तया णं लवणसमुद्दे पुरच्छिमपच्चच्छिमे णं राई भवइ । एवं जहा जंबूद्दीवे तहेव । तथा जया णं धायइसंडे दीवे दाहिणद्धे दिवसे भवइ तया णं उत्तरद्धेऽवि दिवसे भवइ, तया णं धायइसंडे दीवे मंदराणं पुरच्छिमपच्चच्छिमे णं राई भवइ । एवं जहा जंबूद्दीवे तहेव । कालोए जहा लवणे तहेव । तथा जया णं अब्भिंतरपुक्खरद्धे दाहिणद्धे दिवसे भवइ तया णं उत्तरद्धेऽवि दिवसे भवइ, तया णं अब्भिंतरपुक्खरद्धे मंदराणं पव्वयाणं पुरच्छिमपच्चच्छिमेणं राई भवइ सेसं जहा

जंबूद्दीवे तहेव"। आह–यदि लवणसमुद्रे षोडशयोजनसहस्रप्रमाणा शिखा ततः कथं चन्द्रसूर्याणां तत्र देशे चारं चरतां गतिविघातो न भवति? उच्यते–इह लवणसमुद्रवर्जेषु शेषेषु द्वीपसमुद्रेषु यानि ज्योतिष्कविमानानि तानि सर्वाण्यपि सामान्यरूपस्फटिकमयानि, (यानि) पुनर्लवणसमुद्रे ज्योतिष्कविमानानि तानि तथाजगत्स्वाभाव्यादुदकस्फाटनस्वभावस्फटिकमयानि। तथा चोक्तं सूर्यप्रज्ञप्तौ–"जोईसियविमाणाइं, सबाइं हवंति फालिहमयाइं। दगफालिहमया पुण, लवणे जे जोइसविमाणा ॥ १ ॥ इति"। ततो न तेषामुदकमध्ये चारं चरतामुदकेन व्याघातो भवति। अन्यच्च शेषेषु द्वीपसमुद्रेषु चन्द्रसूर्यविमानानि अधोलेश्याकानि। यानि पुनर्लवणसमुद्रे तानि तथाजगत्स्वाभाव्यादूर्ध्वलेश्याकानि, तेन शिखायामपि सर्वत्र लवणसमुद्रे प्रकाशो भवति, अयं चार्थः प्रायो बहूनामप्रतीत इति संवादार्थमेतदर्थप्रतिपादकः स्वयमाचार्यविरचितो विशेषणवतीग्रन्थो दर्श्यते–"सोलससाहस्सियाए सिहाए कहं जोइसियविघातो न भवति? तत्थ भन्नइ, जेण सूरपन्नत्तीए भणियं–जोइसियविमाणाइं, सबाइं हवंति फालिहमयाइं। दगफालिहमया पुण, लवणे जे जोइसविमाणा ॥ १ ॥ जं सवदीवसमुद्दे फालियमयाइं, लवणसमुद्दे चेव केवलं दगफालियमयाइं, तत्थ इदमेव कारणं मा उदगेण विघातो भवउ त्ति। जं सूरपन्नत्तीए चेव भणियं—लवणंतो जोइसिया, उड्ढलेसा हवंति नायवा। तेण परं जोइसिया, अहलेसागा मुणेयवा ॥ १ ॥ तं पि उदगमालावभासणत्थमेव लोगट्ठिई एसा" इति। तथा द्वादशं द्वादशोत्तरं लवणसमुद्रे नक्षत्रशतं भवति। तथाहि—एकैकस्य शशिनः परिवारभूतानि नक्षत्राणि अष्टा-

विंशतिः, चत्वारश्च लवणसमुद्रे शशिनः, ततोऽष्टाविंशतिश्चतुर्भिर्गुणिता द्वादशोत्तरं शतं भवति ११२ । एवं ग्रहादिष्वपि भावना कार्या, तत्र ग्रहाणां त्रीणि शतानि द्विपञ्चाशानि द्विपञ्चाशदधिकानि ३५२ । तथा तारागणकोटीकोटीनां द्वे लक्षे सप्तषष्टिसहस्राणि नव च शतानि भवन्ति २६७९०० ००००००००००००० ॥ ८८–८९ ॥

सम्प्रत्यधिकारोपसंहारमाह—

लवणोयही सम्मत्तो, खित्तसमासस्स बीयअहिगारो ।
गाहापरिमाणेणं, नायव्वो एस नवईउ ॥ ९० ॥

व्याख्या—क्षेत्रसमासस्य क्षेत्रसमासाभिधस्य प्रकरणस्य द्वितीयो लवणोदधिर्नामाधिकारः समाप्तः समाप्तिं गतः, स च गाथापरिमाणेन ज्ञातव्यो नवतिको नवतिपरिमाणः ॥ ९० ॥

॥ इति मलयगिरिविरचितायां क्षेत्रसमासटीकायां द्वितीयो लवणोदधिनामाऽधिकारः समाप्तः ॥

## ॥ अथ तृतीयो धातकीखण्डनामाधिकारः ॥ ३ ॥

तदेवमुक्ता लवणवक्तव्यता, सम्प्रति तदनन्तरत्वाद्धातकीखण्डवक्तव्यतामाह—

चत्तारि सयसहस्सा, धाइयसंडस्स होइ विक्खंभो ।
चत्तारि य से दारा, विजयाईया मुणेयव्वा ॥ १ ॥

व्याख्या—धातकीखण्डेन वक्ष्यमाणस्वरूपेणोपलक्षितो द्वीपो धातकीखण्डः, तस्य च धातकीखण्डस्य द्वीपस्य चक्रवालतया विष्कम्भः चत्वारि शतसहस्राणि ज्ञातव्यानि । तथा 'से' तस्य धातकीखण्डद्वीपस्य विजयादीनि विजयवैजयन्तजयन्तापराजितसंज्ञानि चत्वारि द्वाराणि ज्ञातव्यानि । तद्यथा—पूर्वस्यां दिशि विजयं, दक्षिणस्यां वैजयन्तम्, अपरस्यां जयन्तम्, उत्तरस्यामपराजितम् । अमीषां च द्वाराणां पृथुत्वादिप्रमाणं जम्बूद्वीपद्वाराणामिव वेदितव्यम् । येऽपि च विजयादीनां द्वाराणामधिपतयो विजयादयो देवास्तेऽपि विजयादिवदविशेषेण वक्तव्याः, नवरमेतेषां राजधान्योऽपरस्मिन् धातकीखण्डे प्रतिपत्तव्याः । तथा चोक्तमस्मिन्नेव विचारप्रक्रमे जीवाभिगमे—"नवरिं रायहाणी अन्नम्मि धायइसंडे दीवे" इति ॥ १ ॥

धातकीखण्डस्य द्वीपस्य परिरयपरिमाणमाह—

इंयालीसं लक्खा, दस य सहस्साइं जोयणाणं तु ।
नव य सया एगठ्ठा, किंचूणा परिरउ होइ (तस्स) ॥ २ ॥

व्याख्या—तस्य धातकीखण्डस्य द्वीपस्य परिरयः परिरयपरिमाणं योजनानामेकचत्वारिंशल्लक्षा दश सहस्राणि नव शतानि एकषष्ठ्यधिकानि किञ्चिन्न्यूनानि ४११०९६१ । तथाहि—जम्बूद्वीपस्य विष्कम्भो योजनलक्षं १०००००। लवणस्योभयतो द्वे द्वे योजनलक्षे मिलिताश्चतस्रो लक्षाः । धातकीखण्डस्योभयतश्चतस्रश्चतस्रो लक्षा मिलिता अष्टौ लक्षाः । सर्वसङ्ख्यया जातास्त्रयोदश लक्षाः १३००००० । ततोऽस्य राशेर्वर्गो जातः एककः षट्कः नवकः शून्यानि च दश १६९०००००००००० । भूयो दशभिर्गुणने जातान्येकादश शून्यानि १६९००००००००००० । एतेषां वर्गमूलानयने लब्धान्येकचत्वारिंशल्लतसहस्राणि दश सहस्राणि नव शतानि एकषष्ठ्यधिकानि ॥ ४११०९६१ ॥ २ ॥

सम्प्रति द्वाराणां परस्परमन्तरमाह—

पणतीसा सत्त सया, सत्तावीसा सहस्स दस लक्खा ।
धायइसंडे दारं-तरं तु अवरं च कोसतिगं ॥ ३ ॥

व्याख्या—धातकीखण्डे द्वीपे द्वाराणां परस्परमन्तरं दश लक्षाः सप्तविंशतिसहस्राणि सप्त शतानि पञ्चत्रिंशानि पञ्चत्रिंशदधिकानि योजनानां त्रीणि च गव्यूतानि । तथाहि—एकैकस्य द्वारस्य सद्वारशाखाकस्य जम्बूद्वीपद्वारस्येव पृथुत्वं सार्धानि चत्वारि योजनानि, ततश्चतुर्णां द्वाराणामेकत्र पृथुत्वपरिमाणमीलने जातान्यष्टादश योजनानि, तानि अनन्तरोक्तात् परिरयपरिमाणात् ४११०९६१ शोध्यन्ते, शोधितेषु च जातं शेषमिदम्—एकचत्वारिंशल्लक्षा दश सहस्राणि नव शतानि त्रिचत्वारिंशदधिकानि ४११०९४३ । एतेषां चतुर्भिर्भागे हृते लब्धं यथोक्तं द्वाराणां परस्परमन्तरपरिमाणं १०२७७३५ क्रो० ३ ॥ ३ ॥

सम्प्रति धातकीखण्डे याविषुकाराख्यौ द्वौ पर्वतौ पूर्वार्धपश्चिमार्धविभागकारिणौ तयोरुच्चत्वादिकमानमाह—

पंचसयजोयणुच्चा, सहस्समेगं तु होंति विछिन्ना ।
कालोययलवणजले, पुठा ते दाहिणुत्तरउ ॥ ४ ॥
दो उसुयारनगवरा, धायइसंडस्स मझयारठिया ।
तेहि उहा निद्दिस्सइ, पुव्वद्धं पछिमद्धं च ॥ ५ ॥

व्याख्या—धातकीखण्डस्य मध्यभागे दक्षिणोत्तरतो दक्षिणोत्तरदिग्भाविनौ द्वाविषुकाराख्यौ नगवरौ । तद्यथा—एको दक्षिणदिग्भागे एक उत्तरदिग्भागे । तौ च किंविशिष्टावित्याह—कालोदलवणजले स्पृष्टौ इहत्यं प्रज्ञापकमपेक्ष्यार्वाग्भागेन लवणजलं परभागेन कालोदजलं स्पृष्टौ स्पृष्टवन्तौ । तथा तौ प्रत्येकं प्रत्येकं पञ्च योजनशतानि ५०० उच्चौ, सहस्रमेकं विस्तीर्णौ, ताभ्यां च द्वाभ्यामिषुकारपर्वताभ्यां धातकीखण्ड-द्वीपो द्विधा निर्दिश्यते, तद्यथा—एकं पूर्वार्धमपरं पश्चिमार्धं, तत्र यज्जम्बूद्वीपगतं मन्दरपर्वतमपेक्ष्य पूर्वस्यां दिशि वर्तते तत् पूर्वार्धम्, अपरमपरार्धम् ॥ ४–५ ॥

सम्प्रत्यनयोरेव पूर्वार्धापरार्धयोर्मध्ये मेर्वादिवक्तव्यतामाह—

पुव्वद्धस्स य मज्झे, मेरू तस्सेव दाहिणुत्तरओ ।
वासाइं तिन्नि तिन्नि य, विदेहवासं च मज्झम्मि ॥ ६ ॥

व्याख्या—पूर्वार्धस्य चशब्दात् पश्चिमार्धस्य मध्यभागे प्रत्येकमेकैको मेरुः । तस्य चैकैकस्य मेरोः प्रत्येकं दक्षिणत उत्तरतश्च त्रीणि त्रीणि वर्षाणि क्षेत्राणि हरिवर्षरम्यकादीनि, मध्ये चोभयत्रापि विदेहवर्षम्, इहत्यं प्रज्ञापकमपेक्ष्य यो दक्षिणस्यां दिशि इषुकाराख्यः पर्वतस्तस्य पूर्वतः प्रथमं भरतक्षेत्रं १, ततो हिमवन्तं २, ततोऽपि परतो हरिवर्षं ३, ततो महाविदेहक्षेत्रं ४, ततो रम्यकं ५, ततो हैरण्यवतं ६, तत ऐरा-वतं ७ । तत उत्तरदिग्वर्ती द्वितीय इषुकारपर्वतः, तथाऽस्यैव दक्षिणदिग्भाविन इषुकारपर्वतस्य पश्चिम-

दिशि प्रथमं भरतक्षेत्रं १, ततो हैमवतं २, ततो हरिवर्षं ३, ततो महाविदेहवर्षं ४, ततोऽपि परतो रम्यकं ५, ततोऽपि हैरण्यवतं ६, तत ऐरावतं ७, ततः स एव प्रागुक्त उत्तरदिग्भावी इषुकारः पर्वतः ॥६॥

सम्प्रति भरतादिक्षेत्राणामेव संस्थानमाह—

अरविवरसंठियाइं, चउलक्खा आययाइं खित्ताइं ।
अंतो संखित्ताइं, रुंदतराइं कमेण पुणो ॥ ७ ॥

व्याख्या—क्षेत्राणि भरतादीनि अरविवरसंस्थितानि अरकाश्चक्रावयवास्तेषां विवराणि अन्तराणि तद्वत्संस्थितानि, तथाहि—चक्रनाभिस्थानीयौ जम्बूद्वीपलवणोदधी अरकस्थानीया वर्षधरपर्वताः, ततो यानि वर्षधराणामपान्तरालवर्तीनि वर्षाणि तान्यरकविवराणीव प्रतिभान्ति । तानि च प्रत्येकं चतस्रो लक्षा आयतानि दीर्घाणि । तथाऽरविवराणीव अन्तर्लवणदिशि विष्कम्भमधिकृत्य संक्षिप्तानि संकीर्णानि, तदनन्तरं पुनः क्रमेण मात्रया मात्रया रुन्दतराणि विस्तीर्णतराणि ॥ ७ ॥

सम्प्रत्यमीषामेव भरतादीनां क्षेत्राणां मुखमध्यबहिर्विष्कम्भेषु मध्ये प्रथमतो मुखविष्कम्भानयनाय करणमाह—

जंबूद्दीवा दुगुणा, वासहरा हुंति धायईसंडे ।
उसुयारा साहस्सा, ते मिलिया हुंतिमे खित्तं ॥ ८ ॥

व्याख्या—जम्बूद्वीपात् जम्बूद्वीपसत्केभ्यो वर्षधरपर्वतेभ्यो हिमवदादिभ्यो धातकीखण्डे वर्षधरा हिमवदादयः पृथुत्वे द्विगुणा भवन्ति, इषुकारौ च द्वावपि प्रत्येकं पृथुत्वमधिकृत्य साहस्रौ योजनसहस्रप्रमाणौ, ततस्ते वर्षधरा इषुकारौ ( च ) यदा बुद्ध्या एकत्र मील्यन्ते तदा इदं वक्ष्यमाणस्वरूपं वर्षधरेषुकारावष्टब्धक्षेत्रप्रमाणं भवति ॥ ८ ॥

तदेवाह—

एगं च सयसहस्सं, हवंति अठत्तरी सहस्सा य ।

अठ सया बायाला,

व्याख्या—एकं शतसहस्रं, अष्टसप्ततिः सहस्राणि, अष्टौ शतानि, द्विचत्वारिंशदधिकानि १७८८४२। तथाहि—जम्बूद्वीपे हिमवच्छिखरिणोः पृथुत्वं प्रत्येकं दश योजनशतानि द्विपञ्चाशदधिकानि कलाश्चैकोनविंशतिभागरूपा द्वादश १०५२ क० १२। महाहिमवद्रुक्मिणोः प्रत्येकं द्विचत्वारिंशच्छतानि दशोत्तराणि योजनानां दश च कलाः ४२१० क० १०। निषधनीलवतोः प्रत्येकं षोडश सहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि योजनानां द्वे च कले १६८४२ क० २। एतदपेक्षया द्विगुणविष्कम्भा धातकीखण्डे हिमवदादयः पूर्वार्धेऽपरार्धे च। तत्र पूर्वार्धे हिमवच्छिखरिणोः प्रत्येकं पृथुत्वमेकविंशतियोजनशतानि पञ्चोत्तराणि कलाश्च पञ्च २१०५ क० ५। महाहिमवद्रुक्मिणोः प्रत्येकं चतुरशीतिशतानि एकत्रिंशदधि-

कानि योजनानामेकश्चैकोनविंशतिजागः ८४२१ $\frac{१}{१९}$ । निषधनीलवतोः प्रत्येकं त्रयस्त्रिंशद्योजनसहस्राणि षट् शतानि चतुरशीत्यधिकानि चतस्रश्च कलाः ३३६८४ $\frac{४}{१९}$ । एतेषामेकत्र मीलने जातानि चतुश्चत्वारिंशत्सहस्राणि द्वे शते दशोत्तरे योजनानां कलाश्च दश ४४२१० $\frac{१०}{१९}$ । एतत् द्वाभ्यां गुण्यते, जातानि अष्टाशीतिः सहस्राणि चत्वारि शतानि एकविंशत्यधिकानि योजनानां कला चैका त्यक्ता ८८४२१, एतच्च परिमाणं हिमवदादीनां पश्चिमार्धेऽपि प्राप्यते, तत उजयमीलने जातमेकं लक्षं षट्सप्ततिसहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि १७६८४२ । इषुकारद्वयस्य च पृथुत्वपरिमाणं द्वे योजनसहस्रे, ततस्ते अपि मील्येते, जातमेकं लक्षमष्टसप्ततिसहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि १७८८४२ ॥

ततः किमित्याह—

वासविहीणं तु जं खित्तं ॥ ए ॥

लवणस्स परिहिसुद्धं, एयं धुवरासि धायईसंडे ।
लक्खा चोद्दस बावीस, सयाइं सत्तणउई य ॥ १० ॥

व्याख्या—एतदनन्तरोक्तं क्षेत्रपरिमाणं वर्षविहीनं जरतादिक्षेत्रपृथुत्वविहीनं यत्क्षेत्रपरिमाणं तदव-

गन्तव्यम्, एतल्लवणस्य लवणसमुद्रस्य परिधिः परिधिपरिमाणात् पञ्चदश लक्षा एकाशीतिः सहस्राणि शतमेकमेकोनचत्वारिंशदधिकं १५८११३९ इत्येवंरूपाल्लुप्तमतीतं क्रियते स्फेट्यत इत्यर्थः ततः शेषमेतदुद्धरति चतुर्दश लक्षा द्वाविंशतिशतानि सप्तनवत्यधिकानि १४०२२९७, एष धातकीखण्डे भरतादीनां मुखविष्कम्भानयने ध्रुवराशिर्वेदितव्यः ॥ १० ॥

ततः किमित्याह—

जावंतावेहिगुणा, एसो भइओ य दुसयबारेहिं ।
अब्भिंतरविक्खंभो, धायइसंडस्स भरहाई ॥ ११ ॥

व्याख्या—एषोऽनन्तरोक्तो ध्रुवराशिर्यावत्तावद्भिर्गुणकारैर्गुण्यते यावत्तावन्तो नाम ईप्सितभरतादिक्षेत्रसत्का एकचतुरादिका वक्ष्यमाणा गुणाकाराः ततस्तैर्गुणिता द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भक्तः सन् धातकीखण्डस्य द्वीपस्य सत्कानां भरतादीनां क्षेत्राणामभ्यन्तरं लवणदिशि विष्कम्भो भवति ॥ ११ ॥

तत्रेप्सितभरतादिक्षेत्रसत्कान् यावत्तावत्संज्ञकान् गुणकारान् कथयति—

जावंता वास भरहे, एक्को चत्तारि हुंति हेमवए ।
सोलस हरिवासम्मी, महाविदेहम्मि चउसठी ॥ १२ ॥

व्याख्या—ये प्राग् यावत्तावन्तो गुणकारा उक्तास्ते अमी, तद्यथा—भरते भरतक्षेत्रेऽभ्यन्तरविष्कम्भानयनाय गुणकार एको, हैमवते चत्वारो, हरिवर्षे षोडश, एते च सर्वेऽप्येकत्र मीलिता एकविंशतिः, तथैव ऐरवते गुणकार एक, ऐरण्यवते चत्वारः, रम्यके षोडश, एतेऽप्येकत्र मीलिता एकविंशतिः। उभयमीलने जाता द्विचत्वारिंशत् ४२। महाविदेहे गुणकारश्चतुःषष्टिः ६४। सर्वमीलने जातं षडुत्तरं शतं १०६। एतत्पूर्वमेर्वपेक्षया। एवं पश्चिममेर्वपेक्षया षडुत्तरं शतमित्येकत्र मीलने जाते द्वे शते द्वादशोत्तरे २१२। एतत्पूर्वोक्तस्य द्वादशोत्तरद्विशतलक्षणस्य भागहारराशेरुत्पत्तौ कारणम्॥ १२॥

तदेवं भरतादिक्षेत्राणामभ्यन्तरविष्कम्भानयनोपायमभिधाय सम्प्रति भरतक्षेत्रेऽभ्यन्तरविष्कम्भमानमाह—

भरहे मुहविक्खंभो, छावट्ठि सयाइं चोद्दसहियाइं।
अउणत्तीसं च सयं, बारस हिय दुसयभागाणं॥ १३॥

व्याख्या—भरते भरतक्षेत्रे मुखविष्कम्भोऽभ्यन्तरविष्कम्भः षट्षष्टिः शतानि चतुर्दशाधिकानि योजनानामेकोनत्रिंशं च शतं द्वादशोत्तरद्विशतभागानां योजनस्य। तथाहि—चतुर्दशलक्षादिकः पूर्वोक्तो ध्रुवराशिर्ध्रियते १४०२२९७। ततो यावत्तावता एकेन च गुणितं तदेव भवति, ततो द्वाभ्यां द्वादशोत्तराभ्यां भागो ह्रियते, लब्धं यथोक्तं भरतक्षेत्रे मुखविष्कम्भपरिमाणं ६६१४ $\frac{129}{212}$॥ १३॥

अधुना हैमवते मुखविष्कम्भपरिमाणमाह—

छव्वीसं तु सहस्सा, चत्तारि सयाइं अट्ठपन्नाइं ।
बाणउइ चेव अंसा, मुहविक्खंभो उ हेमवए ॥ १४ ॥

व्याख्या—हैमवतक्षेत्रे मुखविष्कम्भः षड्विंशतिः सहस्राणि चत्वारि शतानि अष्टपञ्चाशदधिकानि योजनानां द्वानवतिश्चैवांशा द्वादशोत्तरद्विशतभागा योजनस्य। तथाहि—ध्रुवराशिः १४०२२९७ यावत्तावद्भिश्चतुर्भिर्गुण्यते, ततो जातः पञ्चकः षट्कः शून्यं नवकः एककः अष्टकः अष्टकः ५६०९१८८, एतेषां द्वादशोत्तरेण शतद्वयेन भागो ह्रियते, ततो लब्धं यथोक्तं हैमवते मुखविष्कम्भपरिमाणं २६४५८ $\frac{९२}{२१२}$ ॥ १४ ॥

अधुना हरिवर्षे मुखविष्कम्भपरिमाणमाह—

एगं च सयसहस्सं, अट्ठावन्ना सया य तित्तीसा ।
अंससयं छप्पन्नं, मुहविक्खंभो हरिवासे ॥ १५ ॥

व्याख्या—हरिवर्षक्षेत्रे मुखविष्कम्भ एकं शतसहस्रं लक्षमष्टापञ्चाशच्छतानि त्रयस्त्रिंशानि त्रयस्त्रिंशदधिकानि योजनानामंशानां च शतं षट्पञ्चाशदधिकं द्वादशोत्तरद्विशतभागानाम् । तथाहि—ध्रुवराशिः १४०२२९७ षोडशभिर्गुण्यते, जातो द्विकः द्विकः चतुष्कः त्रिकः षट्कः सप्तकः पञ्चकः द्विकः २२४३६७५२, एतेषां द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागे हृते लब्धं यथोक्तं हरिवर्षे मुखविष्क-

म्भपरिमाणं १०५८३३ $\frac{१५९}{२१२}$ । यच्चेदं भरतहैमवतहरिवर्षेषु मुखविष्कम्भपरिमाणमुक्तं तदेव क्रमेणैरावतहैरण्यवतरम्यकेष्वपि मुखविष्कम्भपरिमाणं वेदितव्यम् ॥ १५ ॥

सम्प्रति महाविदेहक्षेत्रे मुखविष्कम्भमानमाह—

चत्तारि सयसहस्सा, तेवीस सहस्स ति सय चउतीसा ।
दो चेव य अंससया, मुहविक्खंभो विदेहस्स ॥ १६ ॥

व्याख्या—विदेहक्षेत्रस्य मुखविष्कम्भश्चत्वारि लक्षाणि त्रयोविंशतिः सहस्राणि त्रीणि शतानि चतुस्त्रिंशदधिकानि योजनानां द्वे च शते अंशानां द्वादशोत्तरद्विशतभागानाम् । तथाहि—ध्रुवराशिः १४०२२९७ चतुःषष्ट्या गुण्यते, जातः अष्टकः नवकः सप्तकः चतुष्कः सप्तकः शून्यं शून्यमष्टकः ८९७४७००८ । एतेषां द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागे हृते लब्धं यथोक्तं विदेहमुखविष्कम्भपरिमाणम् ४२३३३४ $\frac{२००}{२१२}$ ॥ १६ ॥

सम्प्रति मध्यविष्कम्भानयनाय ध्रुवराश्यन्तरमाह—

तं चेव य सोहेज्जा, मज्झे जो होई परिरउ तम्हा ।
सो मज्झे ध्रुवरासी, धायइसंडस्स दीवस्स ॥ १७ ॥

व्याख्या—तदेव वर्षविहीनक्षेत्रपरिमाणं धातकीखण्डस्य द्वीपस्य मध्ये यः परिरयः परिरयपरिमाणं भवति तस्मात् शोधयेत्, शोधिते च सति तस्मिन् यदवशिष्यते स धातकीखण्डस्य द्वीपस्य मध्ये भरतादीनां क्षेत्राणां मध्यविष्कम्भानयनाय ध्रुवराशिर्वेदितव्यः ॥ १७ ॥

तत्र मध्यपरिरयपरिमाणमाह—

अट्ठावीसं लक्खा, सहस्स छायाल चेव पन्नासा ।

मज्झम्मि परिरओ से, धायइसंडस्स दीवस्स ॥ १८ ॥

व्याख्या—से तस्य धातकीखण्डस्य मध्ये परिरयः परिरयपरिमाणमष्टाविंशतिर्लक्षाः षट्चत्वारिंशत्सहस्राणि पञ्चाशानि पञ्चाशदधिकानि २८४६०५० । तथाहि—लवणसमुद्रस्य परिधिः पञ्चदश लक्षा एकाशीतिः सहस्राणि एकं शतमेकोनचत्वारिंशदधिकं १५८११३९, धातकीखण्डपरिधिः एकचत्वारिंशल्लक्षा दश सहस्राणि नव शतान्येकषष्ट्यधिकानि ४११०९६१, अनयोरेकत्र मीलने जाताः षट्पञ्चाशल्लक्षा द्विनवतिसहस्राणि शतोत्तराणि ५६९२१००, एतेषामर्धे लब्धं यथोक्तं धातकीखण्डमध्ये परिरयपरिमाणं २८४६०५० । एतस्माच्च पूर्वोक्तं वर्षविहीनक्षेत्रपरिमाणं १७८८४२ शोधयेत्, शोधिते च तस्मिन् जातं शेषं षड्विंशतिर्लक्षाः सप्तषष्टिः सहस्राणि द्वे शते अष्टोत्तरे २६६७२०८ योजनानाम्, एष मध्यभागे ध्रुवराशिः ॥ १८ ॥

साम्प्रतमधिकारोपसंहारमाह—

धायइसंडो दीवो, खित्तसमासस्स तइय अहिगारो ।
गाहापरिमाणेणं, नायव्वो एगसीईउ ॥ ८१ ॥

व्याख्या—क्षेत्रसमासस्य क्षेत्रसमासाभिधानस्य धातकीखण्डो द्वीप इतिनामा तृतीयोऽधिकारः समाप्तः । स च गाथापरिमाणेन एकाशीतिरेकाशीतिसङ्ख्यो ज्ञातव्यः ॥ ८१ ॥

इति श्रीमलयगिरिविरचितायां क्षेत्रसमासटीकायां तृतीयो धातकीखण्डद्वीप नामाऽधिकारः समाप्तः ॥ ३ ॥

## अथ चतुर्थोऽधिकारः

तदेवमुक्ता धातकीखण्डद्वीपवक्तव्यता । साम्प्रतमेतदनन्तरं कालोदवक्तव्यतामाह—

अट्ठेव सयसहस्सा, कालोउ चक्कवालउ रुंदो ।
जोयणसहस्समेगं, उंगाहेणं मुणेयव्वो ॥ १ ॥

व्याख्या—कालं कृष्णं माषराशिनिभमुदकं यस्मिन् स कालोदः, "उदकस्योदः" (सिद्धहेम ३-

२–१०४ ) इत्युदकशब्दस्योदन्नावः । यदिवा कालोदसमुद्रस्य द्वावधिपती, तद्यथा–कालो महाकालश्च, ततः कालमहाकालयोः संबन्ध्युदकमस्मिन्निति कालोदः, उदकशब्दस्योदन्नावः प्राग्वत् । उक्तं च जीवाभिगमे—"से केणट्ठेणं भंते एवं वुच्चइ कालोदे समुद्दे २ इति? गोयमा! कालोयस्स णं समुद्दस्स उदगे आसले मासले पेसले काले पगईए उदगरसे कालमहाकाला य एत्थ दुवे देवा जाव पलिओवमट्ठिईया परिवसंति, से एएणट्ठेणं गोयमा! कालोए एवं वुच्चइ कालोए समुद्दे" इति । स च कालोदसमुद्रश्चक्रवालतया रुन्दो विस्तीर्णः अष्टौ योजनशतसहस्राणि ८००००० । अवगाहेनोण्डत्वेन पुनः सर्वत्रापि योजनसहस्रमेकम् १००० ॥ १ ॥

सम्प्रत्यस्य परिधिमाह—

**इगनउइ सयसहस्सा, हवंति तह सत्तरी सहस्सा य ।**
**छच्च सया पंचहिया, कालोयहिपरिरउ एसो ॥ २ ॥**

व्याख्या—एष कालोदधेः कालोदसमुद्रस्य परिरय एकनवतिलक्षाः सप्ततिसहस्राणि षट् शतानि पञ्चाधिकानि ९१७०६०५ । तथाहि—कालोदसमुद्रस्यैकतोऽष्टौ लक्षा, अपरतोऽप्यष्टौ लक्षा, धातकीखण्डस्यैकतश्चतस्रो लक्षा अपरतोऽपि चतस्रः, लवणोदस्यैकतो द्वे लक्षे अपरतोऽपीति चतस्रः, एका लक्षा जम्बूद्वीपस्येति सर्वसङ्ख्ययैकोनत्रिंशल्लक्षाः २९०००००, तस्य वर्गो विधीयते, जातोऽष्टकः चतुष्कः एककः शून्यानि दश

सम्प्रति विदेहमध्यविष्कम्भमानमाह—

अठेव सयसहस्सा, एगावन्ना सया य चउणउया ।
चुलसीयं अंससयं, विदेहमझम्मि विक्खंभो ॥ २३ ॥

व्याख्या—विदेहक्षेत्रे मध्यविष्कम्भोऽष्टौ शतसहस्राणि एकपञ्चाशच्छतानि चतुर्नवत्यधिकानि योजनानाम्, अंशानां च शतं चतुरशीतं चतुरशीत्यधिकं, तथाहि—ध्रुवराशिः २६६७२०८ चतुःषष्ट्या गुण्यते, जात एककः सप्तकः शून्यं सप्तकः शून्यं एककः त्रिकः एककः द्विकः १७०७०१३१२ । एतेषां द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागे हृते लब्धं यथोक्तं विदेहविष्कम्भपरिमाणम् ८०५१९४ ॥ २३ ॥

सम्प्रति बहिर्विष्कम्भानयनाय ध्रुवराश्यन्तरमाह—

तं चेव य सोहिज्जा, धायइसंडस्स परिरयाहिंतो ।
सो बाहिं धुवरासी, भरहाइसु धायईसंडे ॥ २४ ॥

व्याख्या—तदेव पूर्वोक्तं वर्षविहीनक्षेत्रपरिमाणं धातकीखण्डस्य सत्कात् परिरयात् परिरयपरिमाणाच्छोधयेत्, शोधिते च तस्मिन् यदवशिष्यते धातकीखण्डे भरतादिक्षेत्रेषु बहिर्विष्कम्भानयनाय स ध्रुवराशिः ॥ २४ ॥

तमेवाह—

उणवीसहियं च सयं, बत्तीस सहस्स लक्ख ऊयालं ।

धायइसंडस्सेसो, धुवरासी बाहिविक्खंभो ॥ २५ ॥

व्याख्या—धातकीखण्डस्य भरतादिषु क्षेत्रेषु बहिर्विष्कम्भानयनविधावेष ध्रुवराशिर्वेदितव्यः, यदुत एकोनचत्वारिंशल्लक्षा द्वात्रिंशत्सहस्राणि शतं चैकोनविंशत्यधिकम् । तथाहि—धातकीखण्डस्य परिधिरेकचत्वारिंशल्लक्षादिप्रमाण ४११०९६१, एतस्मात् प्रागुक्तं वर्षविहीनक्षेत्रपरिमाणं १७८८४२ शोध्यते, शोधिते तस्मिन् यथोक्तं बहिर्ध्रुवराशिपरिमाणं भवति ३९३२११९ ॥ २५ ॥

सम्प्रति भरतक्षेत्रे बहिर्विष्कम्भपरिमाणमाह—

अट्ठार सयसहस्सा, पंचेव सया हवंति सीयाला ।

पणपन्नं अंससयं, बाहिरउ भरहविक्खंभो ॥ २६ ॥

व्याख्या—बाह्यो बहिर्भूतः कालोददिशीत्यर्थः, धातकीखण्डे भरतक्षेत्रे विष्कम्भोऽष्टादश सहस्राणि पञ्च शतानि सप्तचत्वारिंशदधिकानि योजनानाम्, अंशानां च शतं पञ्चपञ्चाशदधिकम् । तथाहि—
क्षे. ३८ ध्रुवराशिः ३९३२११९ एकेन गुण्यते, एकेन च गुणितं तदेव भवति, ततो द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धं यथोक्तं भरतक्षेत्रे बहिर्विष्कम्भपरिमाणम् १८५४७ $\frac{१५५}{२१२}$ ॥ २६ ॥

सम्प्रति हैमवते बहिर्विष्कम्भपरिमाणमाह—

चउहत्तरी सहस्सा, नउय सयं चेव जोयणाण भवे ।

छन्नउयं अंससयं, हेमवए बाहिविक्खंभो ॥ २७ ॥

व्याख्या—हैमवते क्षेत्रे बहिर्विष्कम्भः चतुःसप्ततिर्योजनसहस्राणि शतं चैकं नवत्यधिकं, तथांऽशानां शतं षण्णवतं, तथाहि—ध्रुवराशिः ३८३२११९ चतुर्भिर्गुण्यते, ततो जात एककः पञ्चकः सप्तकः द्विकः अष्टकः चतुष्कः सप्तकः षट्कः १५७२८४७६ । एतेषां द्वादशोत्तरेण शतत्रयेन भागहरणं, ततो लब्धं यथोक्तं हैमवते बहिर्विष्कम्भपरिमाणम् ७४१९० $\frac{१९६}{२१२}$ ॥ २७ ॥

अधुना हरिवर्षे बहिर्विष्कम्भमानमाह—

तेवठा सत्त सया, छन्नउइ सहस्स दो सयसहस्सा ।

अडयाल अंससयं, हरिवासे बाहिविक्खंभो ॥ २८ ॥

व्याख्या—हरिवर्षे बहिर्विष्कम्भो द्वे लक्षे षण्णवतिसहस्राणि सप्त शतानि त्रिषष्ट्यधिकानि योजनानाम्, अंशानां च शतमष्टाचत्वारिंशदधिकम् । तथाहि—ध्रुवराशिः ३८३२११९ षोडशभिर्गुण्यते, जातः षट्कः द्विकः नवकः एककः त्रिकः नवकः शून्यं चतुष्कः ६२९१३९०४, एतेषां द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागे हृते लब्धं यथोक्तं हरिवर्षे बहिर्विष्कम्भमानम् २९६७६३ $\frac{१४८}{२१२}$ । यच्चेदं भरत-

हैमवतहरिवर्षेषु बहिर्विष्कम्भपरिमाणमुक्तं तदेव क्रमेणैरावतहैरण्यवतरम्यकानामवगन्तव्यम् ॥ २८ ॥

सम्प्रति महाविदेहक्षेत्रे बहिर्विष्कम्भमानमाह—

इक्कारस लक्खाइं, सत्तासीया सहस्स चउप्पन्ना ।
अट्ठं अंससयं, बाहिरउ विदेहविक्खंभो ॥ २९ ॥

व्याख्या—विदेहक्षेत्रे बाह्यो विष्कम्भ एकादश लक्षाः सप्ताशीतिः सहस्राणि चतुःपञ्चाशदधिकानि योजनानाम्, अंशानां च शतमष्टषष्टमष्टषष्ट्यधिकम् । तथाहि—ध्रुवराशिः ३९३२११९ चतुःषष्ट्या गुण्यते, जातो द्विकः पञ्चकः एककः षट्कः पञ्चकः पञ्चकः षट्कः एककः षट्कः २५१६५५६१६, एतेषां द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धं यथोक्तं विदेहक्षेत्रबहिर्विष्कम्भपरिमाणम् ११८७०५४ $\frac{१६८}{२१२}$ ॥ २९ ॥

सम्प्रति भरतरहितशेषक्षेत्राणां विष्कम्भानयनाय विध्यन्तरमाह—

चउगुणिय भरहवासो, हेमवए तं चउगुणं तइए ।
हरिवासं चउगुणियं, महाविदेहस्स विक्खंभो ॥ ३० ॥

व्याख्या—भरतक्षेत्रस्यान्तर्भागे मध्यभागे बहिर्भागे च यो व्यासो विष्कम्भः स चतुर्गुणितः सन् हैमवते यथाक्रममन्तर्मध्यबहिर्व्यासपरिमाणं भवति । तदपि च चतुर्भिर्गुणितं सत्तृतीये हरिवर्षक्षेत्रे

यथाक्रममन्तर्मध्यबहिर्विष्कम्भमानं भवति । तदपि च हरिवर्षमन्तर्मध्यबहिर्विष्कम्भपरिमाणं चतुर्गुणितं सन्महाविदेहे यथाक्रममन्तर्मध्यबहिर्विष्कम्भो भवति ॥ ३० ॥

सम्प्रत्यैरावतादीनामन्तर्मध्यबहिर्विष्कम्भपरिमाणमतिदेशेनाह—

जह विक्खंभो दाहिण-दिसाए तह उत्तरेऽवि वासतिए ।
जह पुव्वद्धे सत्तउ, तह अवरद्धेऽवि वासाइं ॥ ३१ ॥

व्याख्या—यथा पूर्वार्धे मेरोर्दक्षिणस्यां दिशि भरतहैमवतहरिवर्षाणामन्तर्मध्यबहिर्विष्कम्भपरिमाणमुक्तं तथा उत्तरदिश्यपि वर्षत्रिके ऐरावतहैरण्यवतरम्यकरूपे यथाक्रमं द्रष्टव्यम्, भरतैरावतादीनां समानविष्कम्भपरिमाणत्वात्, एतच्च प्रागेव भणितम् । यथा पूर्वार्धे सप्त क्षेत्राणि भरतादीन्युक्तानि तथाऽपरार्धेऽपि सप्त भरतादीनि वर्षाणि क्षेत्राणि यथोक्तपरिमाणानि अवसेयानि ॥ ३१ ॥

सम्प्रति हिमवदादिगिरिविष्कम्भानयनार्थमुपायमाह—

बायाला अठ सया, सहस्स अठत्तरी सयसहस्सं ।
वासविहूणं खित्तं, धायइसंडम्मि दीवम्मि ॥ ३२ ॥

व्याख्या—धातकीखण्डे द्वीपे वर्षविहीनं क्षेत्रमेकं शतसहस्रमष्टसप्ततिः सहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि १७८८४२, एतावच्च वर्षविहीनं क्षेत्रपरिमाणं प्रागेव भावितम् ॥ ३२ ॥

ततः किमित्याह—

एयं डुसहस्सूणं, इछासंगुणियं चउरसीजइयं ।
वासो वासहराणं, जावंताविक्कचउसोला ॥ ३३ ॥

व्याख्या—एतदनन्तरोक्तं वर्षविहीनं क्षेत्रपरिमाणं दिसहस्रोनमिषुकारद्वयगतयोजनसहस्रद्वयहीनं क्रियते, कृत्वा च तद् इछया एकचतुःषोडशरूपया संगुणयते, ततश्चतुरशीत्या जज्यते, जक्ते च सति यल्लज्यते तद्वर्षधराणां हिमवदादीनां व्यासो विष्कम्जो जवति । 'इछासंगुणियं' इत्युक्तं, ततो यावत्तावत्संज्ञकान् गुणकारानाह—'एक्कचउसोल त्ति' हिमवति एको गुणकारः, महाहिमवति चत्वारः, षोडश निषधे । एते चैकत्र मीलिता एकविंशतिः, एवं द्वितीयस्यामपि पर्वतत्रये एकविंशतिः, उजयमीलने जाता दिचत्वारिंशत्, एषा पूर्वार्धे एवमपरार्धेऽपीत्युजयमीलने चतुरशीतिः, एतज्ञागहारराशेरुत्पत्तौ करणम् ॥ ३३ ॥

सम्प्रति हिमवति विष्कम्जमाह—

इगवीस सया पणहिय, बावीसं चउरसी य जागो य ।
चुल्लहिमवंतवासो, धायइसंडम्मि दीवम्मि ॥ ३४ ॥

व्याख्या—धातकीखण्डद्वीपे क्षुल्लहिमवति व्यासो विष्कम्ज एकविंशतिशतानि पञ्चाधिकानि योज-

नानां द्वाविंशतिश्चतुरशीतिभागा योजनस्य । तथाहि—ध्रुवराशिः १७६८४२ एकेन गुण्यते, एकेन च गुणितं तदेव भवति, ततश्चतुरशीत्या भागो ह्रियते, लब्धं यथोक्तं हिमवति व्यासपरिमाणं २१०५ $\frac{२२}{८४}$ ॥ ३४ ॥

अधुना महाहिमवति विष्कम्भपरिमाणमाह—

इगवीसा चुलसीई, सया उ चत्तारि चेव अंसा उ ।
वासो महाहिमवए, धायइसंडम्मि दीवम्मि ॥ ३५ ॥

व्याख्या—धातकीखण्डे द्वीपे व्यासो विष्कम्भो महाहिमवति चतुरशीतिशतानि एकविंशत्यधिकानि योजनानाम्, अंशाश्चतुरशीतिभागरूपा योजनस्य चत्वारः तथाहि—ध्रुवराशिः १७६८४२ चतुर्भिर्गुण्यते, जातः सप्तकः शून्यं सप्तकः त्रिकः षट्कः अष्टकः ७०७३६८, एषां चतुरशीत्या भागे हृते लब्धं यथोक्तं महाहिमवद्विष्कम्भपरिमाणम् ८४२१ $\frac{४}{८४}$ ॥ ३५ ॥

सम्प्रति निषधविष्कम्भमानमाह—

तित्तीसं च सहस्सा, छच्चेव सया हवंति चुलसीया ।
सोलस चेव य अंसा, विक्खंभो होइ निसहस्स ॥ ३६ ॥

व्याख्या—निषधस्य वर्षधरपर्वतस्य विष्कम्भो भवति त्रयस्त्रिंशत्सहस्राणि षट् शतानि चतुरशीतानि चतुरशीत्यधिकानि योजनानाम्, अंशाश्चतुरशीतिभागरूपाः षोडश । तथाहि—ध्रुवराशिः १७६८४२ षोडशभिर्गुण्यते, जातो द्विकः अष्टकः द्विकः नवकः चतुष्कः सप्तकः द्विकः २८२९४७२, एतेषां चतुरशीत्या भागे हृते लब्धं यथोक्तं निषधविष्कम्भपरिमाणम् ३३६८४ $\frac{१६}{८४}$ ॥ ३६ ॥

शेषवर्षधराणामतिदेशेन विष्कम्भमानमाह—

जह विक्खंभो दाहिण–दिसाइ तह उत्तरेऽवि तिण्ह गिरि ।
छ पुव्वद्धे जह तह, अवरद्धे पव्वया छ ॥ ३७ ॥

व्याख्या—यथा ते पूर्वार्धे मन्दरपर्वतस्य दक्षिणस्यां दिशि हिमवन्महाहिमवन्निषधानां विष्कम्भा भणितास्तथा उत्तरस्यामपि दिशि त्रयाणां शिखरिरुक्मिनीलाख्यानां गिरीणां क्रमेण विष्कम्भा वेदितव्याः, हिमवदादिभिः सह शिखर्यादीनां समानविष्कम्भत्वात् । तथा पूर्वार्धे यथा षट् वर्षधरपर्वतास्तथाऽपरार्धेऽपि षट् पर्वताः, ते च पूर्वार्धगतषट्पर्वता इवाविशेषेणावगन्तव्याः ॥ ३७ ॥

सम्प्रति वर्षधराणां पृथुत्वानुवादेन वर्षधरवक्षस्कारगिरिवक्तव्यतामाह—

वासहरगिरी वक्खा–रपव्वया पुव्वपच्छिमद्धेसु ।
जंबूद्दीवगदुगुणा, वित्थरओ उस्सए तुल्ला ॥ ३८ ॥

व्याख्या—धातकीखण्डे पूर्वार्धे पश्चिमार्धे च ये वर्षधरा हिमवदादयः षट् षट्, ये च वक्षस्काराश्चित्रादयः षोडश षोडश, ये च वक्षस्कारा एव विद्युत्प्रभादयो गजदन्ताश्चत्वारश्चत्वारः, ते सर्वे जम्बूद्वीपगतहिमवदादिवर्षधरचित्रादिवक्षस्कारगजदन्ताकारविद्युत्प्रभाद्यपेक्षया द्विगुणविस्ताराः प्रतिपत्तव्याः। तद्यथा—जम्बूद्वीपे हिमवच्छिखरिणोर्विष्कम्भः पृथग्दशयोजनशतानि द्विपञ्चाशदधिकानि योजनानां द्वा॰ श॰ च कलाः १०५२ $\frac{12}{19}$। महाहिमवद्रुक्मिणोः पृथग्द्विचत्वारिंशच्छतानि दशोत्तराणि योजनानां दश च कलाः ४२१० क॰ १०। निषधनीलवतोः पृथक् षोडश योजनसहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि द्वे च कले १६८४२ क॰ २। धातकीखण्डे पुनः पूर्वार्धेऽपरार्धे च पृथक् हिमवच्छिखरिणोः प्रत्येकमेकविंशतिर्योजनशतानि पञ्चोत्तराणि कलाश्च पञ्च २१०५ क॰ ५। महाहिमवद्रुक्मिणोश्चतुरशीतिर्योजनशतानि एकविंशत्यधिकानि कला चैका ८४२१ क॰ १। निषधनीलवतोस्त्रयस्त्रिंशद्योजनसहस्राणि षट् शतानि चतुरशीत्यधिकानि कलाश्चतस्रः ३३६८४ क॰ ४। तथा जम्बूद्वीपे चित्रादीनां षोडशानां वक्षस्कारपर्वतानां विष्कम्भः पृथक् पञ्च योजनशतानि ५००। धातकीखण्डे पुनस्तेषां पूर्वार्धेऽपरार्धे च पृथग्योजनसहस्रम् (१०००)। तथा जम्बूद्वीपे चतुर्णां विद्युत्प्रभादीनां गजदन्ताकृतीनां विष्कम्भः पृथक् निषधनीलवत्समीपे पञ्च योजनशतानि ५००। धातकीखण्डे पूर्वार्धेऽपरार्धे च पृथक् तेषां योजनसहस्रम् १०००। मेरुसमीपे पुनरुभयोरपि द्वीपयोस्तेषां पृथुत्वमङ्गुलासङ्ख्येयभागः। 'उस्सए तुल्ल त्ति' उच्छ्रये चिन्त्यमाने पुनर्धातकीखण्डेऽमी सर्वेऽपि वर्षधरवक्षस्कारपर्वता जम्बूद्वीपवर्षधरवक्ष-

स्कारपर्वतैस्तुल्याः । तथाहि—जम्बूद्वीप इव धातकीखण्डेऽपि पूर्वार्धेऽपरार्धे च पृथक् हिमवतः शिखरिणश्चोच्चत्वपरिमाणं योजनशतं, महाहिमवतो रुक्मिणश्च द्वे द्वे योजनशते, निषधस्य नीलस्य च चत्वारि चत्वारि योजनशतानि । चित्रादीनां षोडशानां वक्षस्काराणां वर्षधरसमीपे चत्वारि चत्वारि योजनशतानि ४००, शीताशीतोदासमीपे पञ्च योजनशतानि ५०० । तथा विद्युत्प्रभादीनां चतुर्णां गजदन्ताकृतीनां पर्वतानां वर्षधरसमीपे चत्वारि चत्वारि योजनशतानि ४००, मेरुसमीपे पञ्च पञ्च योजनशतानि ५०० ॥ ३८ ॥

सम्प्रति ह्रदादिपरिमाणमतिदेशेनाह—

वासहरकुरुसु दहा, नईण कुंडाइ तेसु जे दीवा ।
उव्वेहुस्सयतुल्ला, विक्खंभायामओ दुगुणा ॥ ३९ ॥

व्याख्या—धातकीखण्डे पूर्वार्धेऽपरार्धे च ये वर्षधरेषु हिमवदादिषु कुरुषु देवकुरुषु उत्तरकुरुषु च ह्रदाः पद्मह्रदादयः, यानि च नदीनां गङ्गासिन्धुप्रभृतीनां कुण्डानि, तेषु च कुंडेषु ये द्वीपा गङ्गाद्वीपादयः, एतानि सर्वाण्यपि जम्बूद्वीपगतैर्ह्रदादिभिः सह उद्वेधोच्चत्वाभ्यां तुल्यानि, विष्कम्भायामाभ्यां तु जम्बूद्वीपगतपद्मह्रदाद्यपेक्षया द्विगुणानि । तथाहि—जम्बूद्वीप इव धातकीखण्डे पूर्वार्धेऽपरार्धे च प्रत्येकं पद्मह्रदादीनां ह्रदानां गङ्गाप्रपातकुण्डादीनां कुण्डानामुद्वेधः सर्वेषामपि पृथक् पृथक् दश योजनानि

१० । येऽपि च गङ्गाप्रपातकुण्डादिषु गङ्गाद्वीपादयो द्वीपास्तेऽपि प्रत्येकमुच्छ्रयेण जलमध्ये दश योजनानि, जलादूर्ध्वं च द्वौ द्वौ क्रोशाविति ॥ सम्प्रति ह्रदकुण्डद्वीपा विष्कम्भायामाभ्यां द्विगुणा भाव्यन्ते– जम्बूद्वीपे पद्मपुण्डरीकह्रदयोः पृथग्विष्कम्भः पञ्च योजनशतानि ५०० आयामो योजनसहस्रम् १०००, धातकीखण्डे पूर्वार्धेऽपरार्धे च पृथग्विष्कम्भो योजनसहस्रं १०००, दैर्घ्ये द्वे योजनसहस्रे २००० । तथा जम्बूद्वीपे महापद्ममहापुण्डरीकयोः पृथग्विष्कम्भो योजनसहस्रं १०००, आयामो द्वे योजनसहस्रे २०००, धातकीखण्डे पुनः पूर्वार्द्धेऽपरार्द्धे च पृथग्विष्कम्भो द्वे द्वे योजनसहस्रे २०००, आयामश्चत्वारि चत्वारि योजनसहस्राणि ४००० । तथा जम्बूद्वीपे तिगिञ्छिकेसरिणोः पृथग्विष्कम्भो द्वे योजनसहस्रे २०००, आयामश्चत्वारि योजनसहस्राणि ४०००, धातकीखण्डे पुनः पूर्वार्धेऽपरार्धे च पृथग्विष्कम्भश्चत्वारि चत्वारि योजनसहस्राणि ४०००, आयामोऽष्टावष्टौ योजनसहस्राणि ८००० । तथा जम्बूद्वीपे देवकुरूत्तरकुरुसत्केषु ह्रदेषु विष्कम्भः पञ्च पञ्च योजनशतानि ५००, आयामो योजनसहस्रम् १०००, धातकीखण्डे पूर्वार्धेऽपरार्धे च पृथग्विष्कम्भो योजनसहस्रम् १०००, आयामो द्वे योजनसहस्रे २०००, तथा ये द्वे भरतक्षेत्रे गङ्गासिन्धुसंबन्धिनी कुण्डे यानि च शीताया महानद्या उत्तरेष्वष्टसु विजयेषु, शीतोदाया महानद्या दक्षिणेष्वष्टसु विजयेषु प्रत्येकं द्वयद्वयभावेन द्वात्रिंशद्गङ्गासिन्धुकुण्डानि, यानि च शीताया महानद्या दक्षिणेष्वष्टसु विजयेषु, शीतोदायाश्च महानद्या उत्तरेष्वष्टसु विजयेषु प्रत्येकं द्वयद्वयभावेन द्वात्रिंशद्रक्तारक्तवतीकुण्डानि, ये च द्वे ऐरावतक्षेत्रे रक्तारक्तवतीसम्बन्धिनी कुण्डे,

एतेषां सर्वेषामपि सर्वसङ्ख्ययाऽष्टषष्टिसङ्ख्यानां कुण्डानां जम्बूद्वीपे प्रत्येकमायामो विष्कम्भश्च षष्टियोजनानि ६० । धातकीखण्डे पुनः प्रत्येकमेतेषामायामो विष्कम्भश्च विंशत्युत्तरं योजनशतम् १२० । तथा ये द्वे हैमवतक्षेत्रे रोहितांशारोहिताप्रपातकुण्डे, ये च द्वे हैरण्यवते क्षेत्रे सुवर्णकूलारूप्यकूलाप्रपातकुण्डे, यानि च विजयान्तर्वर्तिनीनां गाहावत्यादीनां द्वादशानां नदीनां कुण्डानि द्वादशसङ्ख्यानि, एतेषां षोडशानामपि कुण्डानां जम्बूद्वीपे आयामो विष्कम्भश्च पृथग्विंशत्युत्तरयोजनशतप्रमाणः १२० । धातकीखण्डे तु पूर्वार्धेऽपरार्धे च प्रत्येकममीषामायामो विष्कम्भश्च पृथग्द्वे योजनशते चत्वारिंशदधिके २४० । तथा जम्बूद्वीपे हरिवर्षे हरिकान्ताहरिसलिलाप्रपातकुण्डयो रम्यकक्षेत्रे नारीकान्तानरकान्ताप्रपातकुण्डयोः प्रत्येकमायामो विष्कम्भश्च योजनानां द्वे शते चत्वारिंशदधिके २४० । धातकीखण्डे पुनः पूर्वार्धेऽपरार्धे च प्रत्येकममीषां चतुर्णामपि कुण्डानामायामो विष्कम्भश्च चत्वारि चत्वारि योजनशतानि अशीत्यधिकानि ४८० । तथा जम्बूद्वीपे विदेहक्षेत्रे शीताशीतोदाप्रपातकुण्डयोः प्रत्येकमायामो विष्कम्भश्च पृथक् चत्वारि चत्वारि योजनशतान्यशीत्यधिकानि ४८० । धातकीखण्डे तु पूर्वार्धेऽपरार्धे च प्रत्येकमनयोर्द्वयोः कुण्डयोरायामो विष्कम्भश्च पृथक् नव योजनशतानि षष्ट्यधिकानि ९६० । तथा जम्बूद्वीपे गङ्गासिन्धुरक्तारक्तवतीप्रपातकुण्डगतानां द्वीपानामष्टषष्टिसङ्ख्यानां पृथगायामो विष्कम्भश्चाष्टावष्टौ योजनानि । धातकीखण्डे तु पूर्वार्धेऽपरार्धे च प्रत्येकं तेषामष्टषष्टिसङ्ख्यानां द्वीपानामायामो विष्कम्भश्च षोडश योजनानि । तथा जम्बूद्वीपे रोहितांशारोहितासुवर्णकूलारूप्यकूलाप्रपातकुण्डगतानां

द्वीपानां विजयान्तर्वर्तिगाहावत्यादिद्वादशनदीकुण्डगतानां च द्वादशानां द्वीपानां सर्वसङ्ख्यया षोडश-द्वीपानां प्रत्येकमायामो विष्कम्भश्च पृथक् षोडश योजनानि । धातकीखण्डे तु पूर्वार्धेऽपरार्धे च प्रत्येकं तेषां षोडशानां द्वीपानामायामो विष्कम्भश्च पृथक् द्वात्रिंशत् द्वात्रिंशत् योजनानि ३२ । तथा जम्बूद्वीपे हरिकान्ताहरिसलिलानारीकान्तानरकान्ताप्रपातकुण्डगतानां चतुर्णां द्वीपानां प्रत्येकमायामो विष्कम्भश्च द्वात्रिंशत् द्वात्रिंशत् योजनानि ३२ । धातकीखण्डे पूर्वार्धेऽपरार्धे च प्रत्येकं चतुर्णामप्यमीषां द्वीपानामायामो विष्कम्भश्च पृथक् चतुःषष्टिः चतुःषष्टियोजनानि ६४ । तथा जम्बूद्वीपे शीताशीतोदाप्रपातकुण्डगतयोर्द्वीपयोः प्रत्येकमायामो विष्कम्भश्च चतुःषष्टिः चतुःषष्टियोजनानि ६४ । धातकीखण्डे तु पूर्वार्धेऽपरार्धे च प्रत्येकं तयोर्द्वीपयोरायामो विष्कम्भश्च पृथक् अष्टाविंशत्यधिकं योजनशतम् १२८ ॥ ३९ ॥

सम्प्रति नद्यादिप्रमाणमतिदेशेनाह—

**सव्वाउ वि नईउ, विक्खंभोव्वेहदुगुणमाणाउ ।**
**सीयासीउयाणं, वणाणि दुगुणाणि विक्खंभे ॥ ४० ॥**

व्याख्या—धातकीखण्डे द्वीपे सर्वा अपि नद्यो जम्बूद्वीपगतनद्यपेक्षया विष्कम्भे उद्वेधे च द्विगुणमाना द्विगुणप्रमाणाः । तथाहि—जम्बूद्वीपे गङ्गासिन्धुरक्तारक्तवतीसंज्ञकानामष्टषष्टिसङ्ख्यानां प्रत्येकं

प्रवाहविष्कम्भः षड् योजनानि सक्रोशानि यो० ६ क्रो० १। समुद्रप्रवेशे सार्धानि द्वाषष्टियोजनानि यो० ६२ क्रो० २। प्रवाहे उद्वेधः क्रोशार्धमेकम्। समुद्रप्रवेशे पञ्च गव्यूतानि ५। धातकीखण्डे तु पूर्वार्धेऽपरार्धे च प्रत्येकममूषामष्टषष्टिसङ्ख्यानामपि नदीनां प्रवाहविष्कम्भो द्वादश योजनानि सार्धानि यो० १२ क्रो० २। समुद्रप्रवेशे पञ्चविंशं योजनशतम् १२५। प्रवाहे उण्डत्वं गव्यूतमेकम् क्रो० १। समुद्रप्रवेशेऽर्धतृतीयानि योजनानि यो० २ क्रो० २। तथा जम्बूद्वीपे रोहितांशारोहितासुवर्णकूलारूप्यकूलानां गाहावत्यादीनां च द्वादशानां विजयांतर्वर्त्तिनीनां नदीनां सर्वसंख्यया षोडशनदीनां प्रत्येकं प्रवाहे विष्कंभः सार्द्धानि द्वादश योजनानि यो० १२ क्रो० २। समुद्रप्रवेशे पंचविशं योजनशतं १२५। प्रवाहे उंडत्वं गव्यूतमेकं क्रो० १। समुद्रप्रवेशेऽर्द्धतृतीयानि योजनानि यो० २ क्रो० २। धातकीखण्डे तु पूर्वार्धेऽपरार्धे च पृथक् अमूषां षोडशानामपि नदीनां प्रवाहे विष्कम्भः पञ्चविंशतिर्योजनानि २५। समुद्रप्रवेशे द्वे शते पञ्चाशदधिके २५०। प्रवाहे उण्डत्वं द्वे गव्यूते क्रो० २। समुद्रप्रवेशे पञ्च योजनानि ५। तथा जम्बूद्वीपे हरिकान्ताहरिसलिलानारीकान्तानरकान्तानां नदीनां प्रवाहे विष्कम्भः पञ्चविंशतिर्योजनानि २५। समुद्रप्रवेशेऽर्धतृतीयानि योजनशतानि २५०। प्रवाहे उण्डत्वं द्वे गव्यूते क्रो० २। समुद्रप्रवेशे पञ्च योजनानि ५। धातकीखण्डे तु पूर्वार्धेऽपरार्धे च प्रत्येकममूषां चतसृणामपि नदीनां पृथक् प्रवाहे विष्कम्भः पञ्चाशद्योजनानि ५०। समुद्रप्रवेशे पञ्च योजनशतानि ५००। उण्डत्वं प्रवहे योजनमेकम् १। समुद्रप्रवेशे दश योजनानि १०। तथा जम्बूद्वीपे शीताशीतोदयोः प्रत्येकं प्रवहे

विष्कम्भः पञ्चाशद्योजनानि ५० । समुद्रप्रवेशे पञ्च योजनशतानि ५०० । प्रवहे उण्डत्वमेकं योजनम् १ । समुद्रप्रवेशे दश योजनानि १० । धातकीखण्डे तु पूर्वार्धेऽपरार्धे च प्रत्येकमनयोर्नद्योः पृथक् प्रवहे विष्कम्भो योजनशतम् १०० । समुद्रप्रवेशे योजनसहस्रम् १००० । प्रवहे उण्डत्वं द्वे योजने २ । समुद्रप्रवेशे विंशतिर्योजनानि २० । तथा शीताशीतोदयोरुभयकूले समुद्रप्रवेशे यानि वनानि तान्यपि विष्कम्भे चिन्त्यमाने जम्बूद्वीपगतशीताशीतोदयोरुभयकूलभाविवनापेक्षया द्विगुणानि द्विगुणप्रमाणानि । तथाहि—जम्बूद्वीपे वनविष्कम्भो निषधनीलसमीपे योजनस्यैक एकोनविंशतिभागः, शीताशीतोदासमीपे योजनानामेकोनत्रिंशच्छतानि द्वाविंशत्यधिकानि २९२२ । धातकीखण्डे तु पूर्वार्धेऽपरार्धे च प्रत्येकं वनानां विष्कम्भो निषधनीलसमीपे द्वौ योजनगतावेकोनविंशतिभागौ २, शीताशीतोदासमीपे योजनानामष्टापञ्चाशच्छतानि चतुश्चत्वारिंशदधिकानि ५८४४ ॥ ४० ॥

तथा—

कंचणगजमगसुरकुरु-नगा य वेयड्ढ दीहवट्टा य ।
विक्खंभोवेहसमु-स्सएण जह जंबूदीवि व ॥ ४१ ॥

व्याख्या—देवकुरुषूत्तरकुरुषु च ह्रदोभयपार्श्ववर्तिनो ये काञ्चनगिरयो, यौ चोत्तरकुरुषु यमकसंज्ञौ पर्वतौ, यौ च सुरकुरुषु देवकुरुषु नगौ चित्रविचित्राख्यौ, ये च दीर्घवैताढ्या भरतक्षेत्रादिसम्बन्धिनो, ये च

वृत्तवैताढ्याः शब्दापात्यादयः, एते सर्वेऽपि विष्कम्भोद्वेधसमुच्छ्रयेण यथा जम्बूद्वीपसत्का उक्तास्तथा धातकीखण्डेऽपि पूर्वार्धेऽपरार्धे च प्रत्येकमवगन्तव्याः । तद्यथा—जम्बूद्वीप इव धातकीखण्डेऽपि पूर्वार्धेऽपरार्धे च काञ्चनगिरीणां प्रत्येकमुच्चत्वं योजनशतम् १००, मूले विष्कम्भो योजनशतम् १००, मध्ये पञ्चसप्ततियोजनानि ७५, शिरसि पञ्चाशद्योजनानि ५०, भूमौ निमग्नत्वं पञ्चविंशतियोजनानि २५ । तथा मूले परिधिस्त्रीणि योजनशतानि षोडशोत्तराणि ३१६, मध्ये द्वे शते सप्तत्रिंशदधिके २३७, शिरसि शतमष्टपञ्चाशदधिकम् १५८ । अन्तरे तु विशेषः, तथाहि—जम्बूद्वीपे काञ्चनगिरयो भूप्रदेशे परस्परं संबद्धाः । अत्र धातकीखण्डे एकादशोत्तरं योजनानां शतमेकश्च नवभागो योजनस्य १११ $\frac{1}{9}$ । तथाहि—ह्रदानां दैर्घ्यं द्वे योजनसहस्रे २००० काञ्चनगिरिदशकस्य च पृथुत्वं योजनसहस्रम् १००० । ततः सहस्रद्वयादेकस्मिन् सहस्रेऽपनीते शेषमवतिष्ठते सहस्रं, दशानां चान्तराणि नव, ततः सहस्रस्य नवभिर्भागे हृते लब्धं योजनानामेकादशोत्तरं शतमेकश्च नवभागो योजनस्य । तथा जम्बूद्वीप इव धातकीखण्डे पूर्वार्धेऽपरार्धे च प्रत्येकमुत्तरकुरुषु यमकपर्वतयोर्देवकुरुषु चित्रविचित्रकूटयोः पर्वतयोः पृथगुच्चत्वं योजनसहस्रं १०००, मूले विष्कम्भो योजनसहस्रं १०००, मध्ये सप्त शतानि पञ्चाशदधिकानि ७५०, उपरि पञ्च शतानि ५०० । तथा मूले परिधिरेकत्रिंशद्योजनशतानि द्विषष्ट्यधिकानि ३१६२, मध्ये त्रयोविंशतिशतानि द्विसप्तत्यधिकानि २३७२, शिरसि पञ्चदश शतानि एकाशीत्यधिकानि १५८१ । तथा भरतादिषु दीर्घवैताढ्यानां भूतले विष्कम्भः पञ्चाशद्योजनानि ५० । ततो दशयोजनानामुपरि विष्कम्भ-

स्त्रिंशद्योजनानि, दशयोजनानामुपरि विष्कम्भो दश योजनानि १० । ततः पञ्चयोजनानामप्युपरि विष्कम्भो दश योजनानि १०, भूमौ निमग्नास्तु षड् योजनानि सक्रोशानि यो० ६ क्रो० १ । वृत्तवैताढ्यानां शब्दापात्यादीनामुच्चत्वं योजनसहस्रं १०००, विष्कम्भो योजनसहस्रं १०००, परिधिरेकत्रिंशद्योजनशतानि द्वाषष्ट्यधिकानि ३१६२, भूमावपि निमग्ना द्वे योजनशते पञ्चाशदधिके २५० ॥४१॥

सम्प्रति कुरुविष्कम्भानयनाय करणमाह—

चउणउइ सए मेरु, विदेहमज्झा विसोहइत्ताणं ।
सेसस्स य जं अद्धं, सो विक्खंभो कुरूणं तु ॥ ४२ ॥

व्याख्या—धातकीखण्डे पूर्वार्धेऽपरार्धे च प्रत्येकं मेरुर्भूतलप्रदेशे पृथुत्वेन चतुर्नवतियोजनशतानि, ततो मेरुं मेरुविष्कम्भं चतुर्नवतियोजनशतानि विदेहमध्याद्विदेहमध्यविष्कम्भादष्टौ लक्षा एकपञ्चाशच्छतानि चतुर्नवत्यधिकानि ८०५१९४ चतुरशीत्यधिकं च शतं द्वादशोत्तरद्विशतभागानां योजनस्य $\frac{१८४}{२१२}$ इत्येवंपरिमाणाच्छोध्यते, शोधिते च सति यत् शेषमवतिष्ठते सप्त लक्षाः पञ्चनवतिः सहस्राणि सप्त शतानि चतुर्नवत्यधिकानि योजनानां चतुरशीत्यधिकं च शतं द्वादशोत्तरद्विशतभागानां योजनस्य ७९५७९४ $\frac{१८४}{२१२}$, तस्य शेषस्यार्धे यल्लब्धं त्रीणि लक्षाणि सप्तनवतिसहस्राणि अष्टौ शतानि सप्तनवत्यधिकानि योजनानां द्विनवतिश्च द्वादशोत्तरद्विशतभागानां योजनस्य ३९७८९७, $\frac{९२}{२१२}$ । स विष्कम्भः कुरूणां देवकुरूणामुत्तरकुरूणां च ज्ञातव्यः ॥ ४२ ॥

तथा चाह—

सत्ताणवइ सहस्सा, सत्ताणउयाइ अठ य सयाइं ।
तिन्नेव य लक्खाइं, कुरूण भागा उ बाणउई ॥ ४३ ॥

व्याख्या—सुगमा ॥ ४३ ॥

सम्प्रति नीलवर्षधरस्य यमकपर्वतयुगलस्य यदन्तरमेकं, यानि च यमकपर्वतयुगलह्रदपञ्चकयोरन्तराणि पञ्च, यच्च पञ्चमह्रदवक्षस्कारपर्वतयोरन्तरम्(एकम्), एतेषां सप्तानामन्तराणां परिमाणानयनाय करणमाह—

हरया य दुसाहस्सा, जमगाण सहस्स सोहय कुरूउ ।
सेसस्स सत्तभागं, अंतरमो जाण सव्वेसिं ॥ ४४ ॥

व्याख्या—ह्रदाः पञ्चापि प्रत्येकं द्विसहस्रा द्विसहस्रयोजनप्रमाणाः, यमकपर्वतयोः सहस्रं, ततो ह्रदपञ्चकयमकपर्वतपरिमाणमेकत्र मीलितं सत् यद्भवति तत् कुरुभ्यः कुरुविष्कम्भात् प्रागुक्तात् शोधय, शोधिते च तस्मिन् शेषस्य सप्तभिर्भागे हृते यल्लभ्यते तत् जानीहि सर्वेषामन्तरम् ॥ ४४ ॥

तदेवाह—

पणपन्न सहस्साइं, दो चेव सयाइं एगसयराइं ।
दोसु वि कुरुसु एयं, हरयनगाणंतरं होइ ॥ ४५ ॥

व्याख्या—कुरुषु देवकुरुषूत्तरकुरुषु च प्रत्येकं ह्रदानां नगानां च परस्परमन्तरं पञ्चपञ्चाशद्योजनसहस्राणि द्वे शते एकसप्तत्यधिके, तथाहि—कुरुविष्कम्भस्तिस्रो लक्षाः सप्तनवतिः सहस्राणि अष्टौ शतानि सप्तनवत्यधिकानि ३९७८९७, यमकदैर्घ्यं योजनसहस्रं, ह्रदपञ्चकदैर्घ्यं दश योजनसहस्राणि, मिलितानि एकादश योजनसहस्राणि ११०००, एतान्यनन्तरोक्तात् कुरुविष्कम्भाच्छोध्यन्ते, शोधितेषु शेषमवतिष्ठते तिस्रो लक्षाः षडशीतिसहस्राणि अष्टौ शतानि सप्तनवत्यधिकानि ३८६८९७, एतेषां सप्तभिर्भागे हृते लब्धं यथोक्तं ह्रदनगानां परस्परमन्तरपरिमाणं ५५२७१ । एतेन किमुक्तं भवति ? नीलवर्षधरयमकपर्वतद्वयह्रदपञ्चकवक्षस्काराणां परस्परमन्तरं तुल्यपरिमाणमिति ॥ ४५ ॥

सम्प्रति भद्रशालवनदैर्घ्यमानमाह—

**लक्खो सत्त सहस्सा, अडणासीई य अट्ठ य सयाइं ।**
**वासो उ भद्दसाले, पुव्वेणमेव अवरेणं ॥ ४६ ॥**

व्याख्या—धातकीखण्डे पूर्वार्धेऽपरार्धे च प्रत्येकं मेरोः पूर्वेण पूर्वस्यां दिशि भद्रशाले भद्रशालवनस्य व्यासो दैर्घ्यमेका लक्षा सप्त सहस्राणि अष्टौ शतानि एकोनाशीत्यधिकानि १०७८७९ । एवमेव यथोक्तपरिमाणमेव पूर्वार्धेऽपरार्धे च प्रत्येकं मेरोरपरेणापरस्यां दिशि भद्रशालवनस्य दैर्घ्यमवसेयम् १०७८७९ ॥ ४६ ॥

सम्प्रति कुरुजीवानयनाय करणमाह—

आयामेणं दुगुणा, मंदरसहिया दुसेलविक्खंभं ।
सोहित्ता जं सेसं, तं कुरुजीवं वियाणाहि ॥ ४७ ॥

व्याख्या—भद्दशालवनपरिमाणात् आयामेन आयाममधिकृत्यानन्तरमुक्तात् द्विगुणात् द्विगुणीकृतात् पश्चिमदिश्यपि भद्दशालवनस्यायामेन तावत्परिमाणत्वात् तथा मन्दरेण मन्दरपृथुत्वेन सहितात् द्विशैलविष्कम्भं गजदन्ताकृतिपर्वतद्वयविस्तारं शोधयित्वा यच्छेषमुपलभ्यते तत् कुरुजीवा देवकुरूणामुत्तरकुरूणां च प्रत्येकं जीवापरिमाणं जानीहि ॥ ४७ ॥

तदेवाह—

अडवन्नसयं तेवी–ससहस्सा दो य लक्ख जीवा उ ।

व्याख्या—द्वे लक्षे त्रयोविंशतिसहस्राणि अष्टपञ्चाशदधिकं शतं २२३१५८, एषा कुरूणां जीवा । तथाहि–भद्दशालवनदैर्घ्यपरिमाणमेका लक्षा सप्त सहस्राणि अष्टौ शतानि एकोनाशीत्यधिकानि १०७-८७९, एतत् द्विगुणीक्रियते जाते द्वे लक्षे पञ्चदश सहस्राणि सप्त शतानि अष्टपञ्चाशदधिकानि २१५७५८, एतत् मेरुपृथुत्वपरिमाणेन चतुर्नवतियोजनशतरूपेण सहितं क्रियते, जाते द्वे लक्षे पञ्चविंश-

तिसहस्राणि शतमेकमष्टापञ्चाशदधिकं २२५१५८ । द्वयोश्च गजदन्ताकृत्योः पर्वतयोर्विष्कम्भे द्वे योजनसहस्रे २०००, ते पूर्वस्माद्राशेरपनीयेते, ततो यथोक्तं कुरुजीवापरिमाणं भवति २२३१५८ ॥

सम्प्रति धनुःपृष्ठानयनाय करणमाह—

दोण्ह गिरीणायामो, संखित्तो तं धणु कुरूणं ॥ ४८ ॥

व्याख्या—द्वयोर्गजदन्ताकृत्योः पर्वतयोरायाम एकत्र संक्षिप्तो मीलितः सन् यावान् भवति तत् कुरूणां देवकुरूणामुत्तरकुरूणां च प्रत्येकं धनुःपृष्ठपरिमाणं जानीहि ॥ ४८ ॥

तत्र गिरीणामायामप्रमाणमाह—

लक्खा य तिन्नि दीहा, विज्जुप्पभगंधमायणा दोऽवि ।
छप्पन्नं च सहस्सा, दोन्नि सया सत्तवीसा य ॥ ४९ ॥

व्याख्या—विद्युत्प्रभो देवकुरूणां पश्चिमदिशि, गन्धमादन उत्तरकुरूणां पश्चिमदिशि, एतौ द्वावपि पर्वतौ दैर्घ्ये पृथक् त्रीणि लक्षाणि षट्पञ्चाशत्सहस्राणि द्वे शते सप्तविंशत्यधिके ३५६२२७ ॥ ४९ ॥

तथा—

अट्ठावण्णा दोन्नि सया, उण्णसयरि सहस्स पंच लक्खा य ।

सोमनसमालवंता, दीहा रुंदा दस सयाइं ॥ ५० ॥

व्याख्या—सोमनसो देवकुरूणां पूर्वदिशि, माल्यवान् उत्तरकुरूणां पूर्वदिशि, एतौ द्वावपि पर्वतौ आयामेन पृथक् पञ्च लक्षा एकोनसप्ततिसहस्राणि द्वे शते एकोनषष्ठ्यधिके ५६९२५९, इदं प्रमाणं पूर्वमेरौ द्रष्टव्यम्, पश्चिममेरौ तु यत् विद्युत्प्रभगन्धमादनयोर्दैर्घ्यमुक्तं तत् सोमनसमाल्यवतोः प्रतिपत्तव्यम्, तयोस्तत्र संकीर्णक्षेत्रस्य व्यवस्थितत्वात्। यच्च सोमनसमाल्यवतोर्दैर्घ्यमुक्तं तत् विद्युत्प्रभगन्धमादनयोरवसेयम्, तयोस्तत्र दीर्घक्षेत्रस्थितत्वात्। रुन्दा विस्तीर्णाः पुनश्चत्वारोऽपि वर्षधरसमीपे दश योजनशतानि १००० । तदेवमुक्तं गिरीणामायामपरिमाणम् ॥ ५० ॥

सम्प्रति धनुःपृष्ठपरिमाणमाह—

नव चेव सयसहस्सा, पणवीसं खलु भवे सहस्सा य ।
चारिसया छलसीया, धणुपट्ठाइं कुरूणं तु ॥ ५१ ॥

व्याख्या—कुरूणां देवकुरूणामुत्तरकुरूणां च धनुःपृष्ठमेकैकधनुःपृष्ठं परिमाणतो नव शतसहस्राणि पञ्चविंशतिसहस्राणि चत्वारि शतानि षडशीत्यधिकानि। तथाहि—विद्युत्प्रभस्यायामो यो० ३५६२२७, सोमनसस्य यो० ५६९२५९, अनयोरेकत्र मीलने भवति यथोक्तं देवकुरूणां धनुःपृष्ठपरिमाणं ९२५४८६। एवमुत्तरकुरुषु गन्धमादनमाल्यवदायामपरिमाणमीलने धनुःपृष्ठपरिमाणमुक्तरूपं परिज्ञातव्यम् ॥ ५१ ॥

सम्प्रति भद्रशालवने पृथुत्वानयनाय करणमाह—

पुव्वेण मंदराणं, जो आयामो उ भद्दसालवणे ।
सो अट्ठसीइ विभत्तो, विक्खंभो दाहिणुत्तरओ ॥ ५२ ॥

व्याख्या—मन्दरयोः पूर्वार्धपश्चिमार्धगतयोः प्रत्येकं यः पूर्वेण पूर्वस्यां दिशि, उपलक्षणमेतत्, पश्चिमायां वा दिशि भद्रशालवनस्य य आयाम आयामपरिमाणं तत् अष्टाशीत्या विभक्तं सत् यद्भवति तावान् विष्कम्भो भद्रशालवनस्य दक्षिणत उत्तरतश्च प्रत्येकमवसेयः ॥ ५२ ॥

तमेवाह—

बार सया छव्वीसा, किंचूणा जम्मुईण वित्थारो ।

व्याख्या—याम्योदीच्ययोर्भागयोर्दक्षिणभागे उत्तरभागे चेत्यर्थः भद्रशालवनस्य प्रत्येकं विस्तारो द्वादश योजनशतानि षड्विंशत्यधिकानि किञ्चिन्न्यूनानि नवभिरष्टाशीतिभागैरूनानि १२२५ $\frac{७९}{८८}$ । तथाहि—भद्रशालवनस्य पूर्वस्यामपरस्यां वा दिशि आयामो लक्षमेकं सप्त सहस्राणि अष्टौ शतानि एकोनाशीत्यधिकानि १०७८७९, एतेषामष्टाशीत्या भागे हृते लब्धं यथोक्तं दक्षिणभागे उत्तरभागे च प्रत्येकं विस्तारपरिमाणमिति ॥

सम्प्रति भद्रशालवने एव दैर्घ्यानयनाय करणमाह—

**अट्ठासीइगुणो पुण, एसो पुव्वावरो होइ ॥ ५३ ॥**

व्याख्या—एषोऽनन्तरोक्तविस्तारो विस्तारविषयः सङ्ख्याविशेषोऽष्टाशीत्या गुणितः सन् पूर्वस्यामपरस्यां वा दिशि प्रत्येकमायामो भवति । तथाहि—द्वादश शतानि पञ्चविंशत्यधिकानि अष्टाशीत्या गुण्यन्ते, जातमेकं लक्षं सप्त सहस्राणि अष्टौ शतानि, एकोनाशीतिश्चाष्टाशीतिभागा अष्टाशीत्या गुण्यन्ते, जातानि षट् सहस्राणि नव शतानि द्विपञ्चाशदधिकानि ६९५२, एतेषामष्टाशीत्या भागे हृते लब्धा योजनानामेकोनाशीतिरिति ॥ ५३ ॥

सम्प्रति पूर्वार्धेऽपरार्धे च प्रत्येकमुत्तरकुरुषु धातकीवृक्षवक्तव्यतामाह—

**उत्तरकुराइ धायइ, होइ महाधायई य रुक्खा य ।**
**तेसिं अहिवइ सुदंसण-पियदंसणनामया देवा ॥ ५४ ॥**

व्याख्या—पूर्वार्धे उत्तरकुरुषु नीलवद्गिरिसमीपे धातकीनामा वृक्षो भवति वर्तते, पश्चिमार्धे उत्तरकुरुषु नीलवद्गिरिसमीपे महाधातकी नाम वृक्षः, तयोश्च वृक्षयोरधिपती यथाक्रमं सुदर्शनप्रियदर्शननामानौ द्वौ देवौ, पूर्वार्धे धातक्याः सुदर्शननामा देवोऽधिपतिः, पश्चिमार्धे महाधातक्याः प्रियदर्शननामा देव इति ॥ ५४ ॥

सम्प्रति धातकीवृक्षवक्तव्यतामतिदेशेनाह—

जो भणिओ जंबूए, विही उ सो चेव होइ एएसिं ।
देवकुराए संबलि—रुक्खा जह जंबूदीवम्मि ॥ ५५ ॥

व्याख्या—य एव जम्बूद्वीपे जम्ब्वा वृक्षस्य पीठादिगतो विधिर्भणितः स एवैतयोरपि धातकी-महाधातकीनाम्नोर्वृक्षयोरविशेषेण ज्ञातव्यः । तथा पूर्वार्धेऽपरार्धे च प्रत्येकं देवकुरुषु पृथक् निषध-वर्षधरसमीपे एकैकः शाल्मलीवृक्षः, तावपि जम्बूद्वीपगतशाल्मलीवृक्षवदविशेषेण प्रतिपत्तव्यौ ॥५५॥

सम्प्रति भद्रशालवनवक्तव्याशेषमाह—

अट्ठवन्नसयं पणुवीस, सहस्सा दो य लक्ख मेरुवणं ।
मंदरवक्खारनईहिं, अट्ठहा होंति पविभत्तं ॥ ५६ ॥

व्याख्या—मेरुणा मध्यस्थितेन सहितं वनं मेरुवनं, तच्च दैर्घ्यप्रमाणतो द्वे लक्षे पञ्चविंशतिः सहस्राणि शतमेकमष्टापञ्चाशदधिकं २२५१५८ । तथा दक्षिणतो विस्तरेण द्वादश योजनशतानि पञ्चविंशत्यधिकानि एकोनाशीतिरष्टाशीतिभागा योजनस्य १२२५ $\frac{७९}{८८}$, एतावत्प्रमाणं पृथुत्वेनोत्तरतोऽपि १२२५ $\frac{७९}{८८}$ मेरोः पृथुत्वपरिमाणं चतुर्नवतियोजनशतानि ९४००, एतेषां सर्वेषामपि एकत्र मीलने जातान्येकादश सहस्राणि अष्टौ शतानि एकपञ्चाशदधिकानि योजनानां सप्ततिश्चाष्टाशीतिभागा

योजनस्य ११८५१ $\frac{७०}{८८}$, एवं प्रमाणविस्तारायामं घनं मन्दरवक्षस्कारनदीभिरष्टधा भवति वर्तते प्रविभक्तं, तद्यथा—एकं मेरोः पूर्वतः खण्डं १, द्वितीयं मेरोः पश्चिमदिशि २, तृतीयं विद्युत्प्रभसोमनसमध्ये दक्षिणतः ३, चतुर्थं गन्धमादनमाल्यवन्मध्ये उत्तरतः ४, तत्र दाक्षिणात्यं तृतीयं खण्डं शीतोदया उत्तरतो गच्छन्त्या पूर्वापरविभागेन द्विधा कृतमिति पञ्चमं खण्डं ५, शीतया दक्षिणाभिमुखं गच्छन्त्या पूर्वापरविभागेन द्विधा कृतमिति षष्ठं खण्डं ६, शीतोदया पश्चिमाभिमुखं गच्छन्त्या पश्चिमखण्डं दक्षिणोत्तरविभागेन द्विधा कृतमिति सप्तमं खण्डं ७, शीतया पूर्वतो गच्छन्त्या पूर्वदिग्भावि खण्डं दक्षिणोत्तरप्रविभागेन द्विधा कृतमिति अष्टमं खण्डम् ८ ॥ ५६ ॥

सम्प्रति मेरुवक्तव्यतामाह—

धायइसंडे मेरू, चुलसीइ सहस्स ऊसिया दोऽवि ।
उंगाढा य सहस्सं, तं चिय सिहरम्मि विछिन्ना ॥ ५७ ॥

व्याख्या—धातकीखण्डे द्वौ मेरू, तद्यथा—एकः पूर्वार्धे, एकोऽपरार्धे, तौ च द्वावपि उच्छ्रितौ प्रत्येकं चतुरशीतिर्योजनसहस्राणि ८४०००, द्वावपि चावगाढौ भूमौ निमग्नौ पृथक् योजनसहस्रं १०००, तदेव चैकं सहस्रं शिखर उपरितले विस्तीर्णौ १००० ॥ ५७ ॥

मूले पणनउय सया, चउणउय सया य होइ धरणियले ।

विरकंन्नो चत्तारि य, वणाइ जह जंबूदीवम्मि ॥ ५७ ॥

व्याख्या—मूले जूमिमध्ये विष्कम्नो द्वयोरपि मेर्वोः प्रत्येकं पञ्चनवतियोजनशतानि ९५००, धरणितले चतुर्नवतियोजनशतानि ९४०० । यथा च जम्बूद्वीपे मेरौ चत्वारि वनानि तथा एतयोरपि मेर्वोः प्रत्येकं चत्वारि चत्वारि वनानि द्रष्टव्यानि । तद्यथा—जूमौ जद्रशालवनं, प्रथममेखलायां नन्दनवनं, द्वितीयमेखलायां सौमनसं, शिरसि पण्डकवनमिति ॥ ५७ ॥

सम्प्रत्यधोमुखगमने पृथुत्वानयनाय करणमाह—

जत्थिछसि विरकंनं, मंदरसिहराहि उवइत्ताणं ।
तं दसहिं नइय लद्धं, सहस्ससहियं तु विरकंनं ॥ ५९ ॥

व्याख्या—मन्दरशिखरादवपत्यावतीर्य यत्र विष्कम्नं ज्ञातुमिछसि तत् अवतीर्णं योजनादिकं दशजिर्नज्यते, जक्ते च सति यल्लब्धं तत् सहस्रसहितं तत्र विष्कम्नपरिमाणं जानीहि । तत्रोपरितलाच्चतुरशीतियोजनसहस्राण्यधोऽवतीर्णः, ततश्चतुरशीतिसहस्राणि ध्रियन्ते, तेषां दशजिर्जागे हृते लब्धानि चतुरशीतियोजनशतानि ८४००, तानि सहस्रयुतानि क्रियन्ते, जातानि चतुर्नवतिशतानि ९४००, एतावान् धरणितले विष्कम्नः । एवमन्यत्रापीप्सितप्रदेशे विष्कम्नपरिमाणमानेतव्यम् । यदा तु मूलादूर्ध्वंगमनेन विष्कम्नपरिमाणं ज्ञातुमिष्यते तदा यावदूर्ध्वं गतः तत् ध्रियते, धृत्वा च दशजिर्जागो

ह्रियते, हृते च भागे यल्लभ्यते तत् मूलविष्कम्भाच्छोध्यते, शोधिते च सति यच्छेषमवतिष्ठते तावत्परिमाणस्तत्र प्रदेशे विष्कम्भः, यथा भूतलादूर्ध्वं गतश्चतुरशीतियोजनसहस्राणि, ततश्चतुरशीतिसहस्राणि ध्रियन्ते ८४०००, तेषां दशभिर्भागे हृते लब्धानि चतुरशीतिशतानि ८४००, तानि धरणितलविष्कम्भपरिमाणाच्चतुर्नवतिशतरूपाच्छोध्यन्ते, शोधितेषु च तेषु शेषमवतिष्ठते दश योजनशतानि, एतावान् शिरस्तले विष्कम्भः १०००, एवमन्यत्रापि परिभावनीयम् । एतच्च विष्कम्भानयनाय करणं मेखलाद्याविवक्षया कर्ण ( रण ) गत्या द्रष्टव्यम् ॥ ५९ ॥

सम्प्रति नन्दनवनप्ररूपणामाह—

पंचेव जोयणसए, उड्ढं गंतूण पंचसयपिहुलं ।
नंदणवणं सुमेरुं, परिक्खिवित्ता ठियं रम्मं ॥ ६० ॥

व्याख्या—धरणितलादूर्ध्वं पञ्च योजनशतानि गत्वाऽतिक्रम्यात्रान्तरे सुमेरुं सर्वतः परिक्षिप्य पञ्चशतपृथुलं पञ्चयोजनशतपृथुत्वपरिमाणं स्थितं, तच्च रम्यं रमणीयं देवानामपि प्रमोदहेतुः ॥ ६० ॥

सम्प्रति नन्दनवनबहिर्विष्कम्भमानमाह—

नव चेव सहस्साइं, अद्धुट्ठाइं च जोयणसयाइं ।
बाहिरउ विक्खंभो, उ नंदणे होइ मेरूणं ॥ ६१ ॥

व्याख्या—मेर्वोः पूर्वार्धपश्चिमार्धगतयोः प्रत्येकं नन्दनवने बाह्यो बहिर्भावी विष्कम्भो भवति नव योजनसहस्राणि अर्धचतुर्थानि योजनशतानि ९३५० । तथाहि—धरणितलादूर्ध्वं पञ्च योजनशतानि गत इति पञ्च शतानि ध्रियन्ते ५०० । तेषां दशभिर्भागे हृते लब्धा पञ्चाशत्, तानि धरणितलविष्कम्भपरिमाणाच्चतुर्नवतिशतरूपादपनीयन्ते, ततो यथोक्तं बहिर्विष्कम्भपरिमाणं भवति ॥ ६१ ॥

साम्प्रतमन्तर्विष्कम्भपरिमाणमाह—

अठेव सहस्साइं, अद्धुठाइं च जोयणसयाइं ।
अब्भिंतरविक्खंभो, उ नंदणे होइ मेरूणं ॥ ६२ ॥

व्याख्या—द्वयोरपि मेर्वोः प्रत्येकं नन्दने नन्दनवने भवत्यभ्यन्तरविष्कम्भोऽष्टौ योजनसहस्राणि अर्धचतुर्थानि योजनशतानि ८३५० । तथाहि—नन्दनवने चक्रवालतया विष्कम्भः पञ्च योजनशतानि, तत एकतोऽपि पञ्च योजनशतान्यपनीयन्ते अपरतोऽपि पञ्च योजनशतानीति योजनसहस्रे बहिर्विष्कम्भपरिमाणादर्धचतुर्थशताधिकनवसहस्रादपनीते यथोक्तमभ्यन्तरविष्कम्भपरिमाणं भवति ॥ ६२ ॥

सम्प्रति सौमनसवनवक्तव्यतामाह—

तत्तो य सहस्साइं, उड्ढं गंतूण अद्धछप्पन्नं ।
सोमणसं नाम वणं, पंचसए होइ विच्छिन्नं ॥ ६३ ॥

व्याख्या—ततश्च तस्मान्नन्दनवनादूर्ध्वमर्धषट्पञ्चाशत्सार्धानि पञ्चपञ्चाशद्योजनसहस्राणि गत्वाऽतिक्रम्यात्रान्तरे सौमनसं नाम वनम्, तच्च पञ्च योजनशतानि विस्तीर्णम् ॥ ६३ ॥

सम्प्रति तत्र बहिर्विष्कम्भपरिमाणमाह—

तिन्नेव सहस्साइं, अट्ठेव सयाइं जोयणाणं तु ।
सोमणसवणे बाहिं, विक्खंभो होइ मेरूणं ॥ ६४ ॥

व्याख्या—द्वयोरपि मेर्वोः प्रत्येकं सौमनसवने बहिर्विष्कम्भस्त्रीणि सहस्राणि अष्टौ शतानि योजनानाम् । तथाहि—धरणितलादूर्ध्वं षट्पञ्चाशद्योजनसहस्राणि अवगाह्य सौमनसवनं, ततः षट्पञ्चाशत्सहस्राणि ध्रियन्ते ५६०००, तेषां दशभिर्भागे हृते लब्धानि षट्पञ्चाशद्योजनशतानि ५६००, तानि धरणितलविष्कम्भपरिमाणाच्चतुर्नवतिशतरूपादपनीयन्ते, शेषाण्यष्टात्रिंशच्छतानि तिष्ठन्ति ३८०० ॥६४॥

साम्प्रतमभ्यन्तरविष्कम्भपरिमाणमाह—

दो चेव सहस्साइं, अट्ठेव सयाइं जोयणाणं तु ।
अंतो सोमणसवणे, विक्खंभो होइ मेरूणं ॥ ६५ ॥

व्याख्या—द्वयोरपि मेर्वोः प्रत्येकं सौमनसवनेऽन्तर्विष्कम्भो भवति द्वे सहस्रे अष्टौ शतानि योजनानाम् २८०० । तथाहि—सौमनसवनं चक्रवालतया पञ्चयोजनशतविष्कम्भं, तत एकतोऽपि बहि-

विंष्कम्भपरिमाणात्प्रागुक्तस्वरूपात् ३८०० पञ्च शतान्यपनीयन्ते, अपरतोऽपि पञ्च शतानीति योजनसहस्रापगमे भवति यथोक्तमन्तर्विंष्कम्भपरिमाणमिति ॥ ६५ ॥

सम्प्रति पण्डकवनवक्तव्यतामाह—

अट्ठावीस सहस्सा, सोमणसवणा उ उप्पइत्ताणं ।
चत्तारि सए रुंदं, चउणउए पंडगवणं तु ॥ ६६ ॥

व्याख्या—सौमनसादूर्ध्वमष्टाविंशतियोजनसहस्राण्युत्प्लुत्यातिक्रम्य अत्रान्तरे शिरसि पण्डकवनम्, तच्च चक्रवालतया चत्वारि योजनशतानि चतुर्नवत्यधिकानि रुन्दं विस्तीर्णम् । तथाहि—शिरसि योजनसहस्रं विस्तारः, एतच्च प्रागेव भावितम् । मध्यभागे च चूला, सा च मूले द्वादशयोजनप्रमाणविष्कम्भा, ततो द्वादश सहस्रादपनीयन्ते, अपनीय च शेषमर्धीक्रियते, ततो यथोक्तं पण्डकवनस्य चक्रवालतया विष्कम्भपरिमाणं भवति ॥ ६६ ॥

सम्प्रति विजयादिवक्तव्यतामाह—

ईसिं अंतो अंता, विजया वक्खारपव्वया सलिला ।
धायइसंडे दीवे, दोसु वि अद्धेसु नायव्वा ॥ ६७ ॥

व्याख्या—धातकीखण्डे द्वीपे द्वयोरपि पूर्वापररूपयोरर्धयोः प्रत्येकमीषन्मनागन्तरं लवणदिशीत्यर्थः

अन्ताः प्रान्ताः संक्षिप्ता इत्यर्थः, क्षेत्रस्य संकीर्णत्वात् । विजयाः कच्छादयो, वक्षस्काराश्चित्रादयः पर्वताः, सलिला गाहावत्यादयो ज्ञातव्याः । कालोदाभिमुखं पुनः शनैः शनैर्विस्तीर्णाः ॥ ६७ ॥

सम्प्रत्येकैकस्य विजयस्य विष्कम्भानयनोपायमाह—

सीयासीओयवणा, एक्कारस सहस्स छ सय अमसीया ।
वक्खारठ्ठ सहस्सा, पन्नरस सया उ सलिलाओ ॥ ६८ ॥
मेरू चउणउइसए, मेरुस्सुभओ वणस्सि संमाणं ।
अमपन्ना सत्त सया, पन्नरस सहस्स दो लक्खा ॥ ६९ ॥

व्याख्या—शीताशीतोदावने एकत्र मीलिते एकादश सहस्राणि षट् शतानि अष्टाशीत्यधिकानि भवन्ति ११६८८ । तथाहि–शीतायाः समुद्रप्रवेशे शीतानदीसमीपे वनपृथुत्वं योजनानामष्टापञ्चाशत् शतानि चतुश्चत्वारिंशदधिकानि ५८४४ । शीतोदाया अपि समुद्रप्रवेशे शीतोदासमीपे वनपृथुत्वमेतावत्परिमाणम् ५८४४ । तत उभयमीलने यथोक्तं वनपरिमाणं भवति ११६८८ । वक्षस्काराणामष्टौ सहस्राणि, तथाहि–शीताशीतोदयोर्दक्षिणभागे उत्तरभागे वाऽष्टौ वक्षस्कारपर्वताः, एकैकस्य च पृथुत्वेन योजनसहस्रं, ततः सहस्रस्याष्टभिर्गुणने भवन्त्यष्टौ सहस्राणि ८००० । तथा सलिला नद्यो गाहाव-

त्यादयः पञ्चदश योजनशतानि, तथाहि—शीताशीतोदयोर्दक्षिणभागे उत्तरभागे वा षड् नद्यः, एकैकस्याश्च नद्याः पृथुत्वमर्धतृतीयानि योजनशतानि २५०, तेषां षड्भिर्गुणने भवन्ति पञ्चदश शतानि १५०० । तथा मेरुपृथुत्वं चतुर्नवतियोजनशतानि ९४००, मेरोश्चोभयपार्श्वयोर्वनस्य परिमाणमेकत्र मीलितं द्वे लक्षे पञ्चदश सहस्राणि सप्त शतानि अष्टापञ्चाशदधिकानि २१५७५८, एतच्च प्रागेव भावितम् ॥ ६८–६९ ॥

तेषां च पूर्वेषामपि एकत्र मीलने यज्जातं तदाह—

छायाला तिन्नि सया, छायालसहस्स दोन्नि लक्खा य ।

वणनगनइमेरुवणा–ण वित्थारो मेलिउ एसो ॥ ७० ॥

व्याख्या–शीताशीतोदयोर्दक्षिणभागे उत्तरभागे वा शीताशीतोदावनचित्रादिवक्षस्कारपर्वतगाहावत्यादिविजयान्तर्वर्तिनदीमेरुमध्यस्थितयुक्तपूर्वापरभद्रशालवनानां विस्तार एकत्र मीलितः सन् एष भवति द्वे लक्षे षट्चत्वारिंशत्सहस्राणि त्रीणि शतानि षट्चत्वारिंशदधिकानि २४६३४६ ॥ ७० ॥

ततः किमित्याह–

दीवस्स य विक्खंभा, एवं सोहेउ जं भवे सेसं ।

सोलसविहत्तलद्धं, विजयाणं होइ विक्खंभो ॥ ७१ ॥

व्याख्या-एतदनन्तरोक्तं वननगनदीमेरुवनविस्तारपरिमाणं द्वीपस्य धातकीखण्डस्य विष्कम्भाद्विष्कम्भपरिमाणाल्लक्षचतुष्टयरूपाच्छोधयेत्, शोधिते च तस्मिन् यद्भवति शेषं तस्य षोडशभिर्विभक्ते यल्लब्धं स विष्कम्भो विष्कम्भपरिमाणं भवति विजयानाम् ॥ ७१ ॥

एतदेवाह-

एगं च सयसहस्सं, तेवन्नं जोयणाण य सहस्सा ।
छच्च सया चउपन्ना, विसुद्धसेसं हवइ एयं ॥ ७२ ॥
नव चेव सहस्साइं, छच्चेव सया तिउत्तरा होंति ।
सोलसभागा छच्चिय, विजयाणं होइ विक्खंभो ॥ ७३ ॥

व्याख्या-धातकीखण्डस्य द्वीपस्य विष्कम्भपरिमाणाच्चतुर्लक्षरूपात् प्रागुक्ते वननगनदीमेरुवनविस्तारपरिमाणे २४६३४६ विशुद्धेऽपगते सति एतच्छेषं भवति-एकं शतसहस्रं त्रिपञ्चाशत्सहस्राणि षट् शतानि चतुःपञ्चाशदधिकानि १५३६५४, एतस्य षोडशभिर्भागो ह्रियते, हृते च भागे लब्धं नव सहस्राणि षट् शतानि त्र्युत्तराणि योजनानां षट् च षोडश भागा योजनस्य ९६०३ $\frac{6}{16}$ । एष विजयानां प्रत्येकं विष्कम्भपरिमाणं भवति ॥ ७२-७३ ॥

सम्प्रति वक्षस्काराणां विष्कम्भप्रतिपादनार्थमाह–

ठस्सय चउपन्नहिया, तेवन्न सहस्स सयसहस्सं च ।
विजयक्खित्तपमाणे, वणनइमेरूवणं बूढं ॥ ७४ ॥
बिणवइ सहस्स लक्ख–त्तियं च जायं तु दीवउ सोहे ।
सेसठहिए जागे, वक्कारगिरीण विक्खंजो ॥ ७५ ॥

व्याख्या–शीताशीतोदयोर्दक्षिणभागे उत्तरभागे वा षोडश विजयाः, तेषां समुदायेन पृथुत्वपरिमाणमेकं शतसहस्रं त्रिपञ्चाशत्सहस्राणि षट् शतानि चतुःपञ्चाशदधिकानि १५३६५४, ततोऽत्र विजयषोडशपृथुत्वपरिमाणे शीताशीतोदावनपृथुत्वपरिमाणं ११६८८, नदीषट्कपृथुत्वपरिमाणं १५००, मेरुविष्कम्भपरिमाणं ९४००, पूर्वापरभद्रशालवनपरिमाणं २१५७५८ प्रक्षिप्यते, एतेषु च प्रक्षिप्तेषु जातमिदम्–तिस्रो लक्षा द्विनवतिसहस्राणि ३९२०००, तदेतत् द्वीपात् धातकीखण्डद्वीपविष्कम्भाच्छोधयेत्, शोधिते च सति जातं शेषमष्टौ सहस्राणि ८००० । शीताशीतोदयोश्च दक्षिणभागे उत्तरभागे चाष्टौ वक्षस्कारपर्वताः, ततः शेषाणामष्टानां सहस्राणामष्टाभिर्भागे हृते लब्धं सहस्रं १००० । एतावान् वक्षस्कारगिरीणां प्रत्येकं विष्कम्भः ॥ ७४–७५ ॥

सम्प्रत्यन्तरनदीविष्कम्भपरिमाणप्रतिपादनार्थमाह—

पंच सया लक्खतियं, अडनउइ सहस्स दीवउ सोहे ।
सेसस्स य छब्भागे, विक्खंभो अंतरनईणं ॥ ७६ ॥

व्याख्या—शीताशीतोदयोर्दक्षिणभागे उत्तरभागे च षोडशानां विजयानां विष्कम्भपरिमाणं १५३६५४, शीताशीतोदावनद्वयपरिमाणं ११६८८, अष्टानां वक्षस्कारगिरीणां परिमाणं ८०००, मेरुपृथुत्वपरिमाणं ९४००, पूर्वापरभद्रशालवनपरिमाणम् २१५७५८, एतत्सर्वमेकत्र मील्यते, जातं तिस्रो लक्षा अष्टनवतिः सहस्राणि पञ्च शतानि ३९८५००, एतत् द्वीपात् धातकीखण्डद्वीपविष्कम्भपरिमाणाच्चतुःशतसहस्र-रूपाच्छोधयेत्, शोधिते च सति जातं शेषमिदं पञ्चदश शतानि १५०० । शीताशीतोदयोश्च दक्षिणभागे उत्तरभागे वा नद्यः षट्, ततः षड्भिर्भागो ह्रियते, हृते च भागे लब्धान्यर्धतृतीयानि योजनशतानि २५०, एतावानन्तरनदीनां पृथग्विष्कम्भः ॥ ७६ ॥

सम्प्रति शीताशीतोदयोरुभयकूलवर्तिवनमुखविष्कम्भप्रतिपादनार्थमाह—

बारसहिय तिन्नि सया, अडसीइ सहस्स तिन्नि लक्खा य ।
दीवाउ सोहेउं, सेसऽद्धं वणमुहाणं तु ॥ ७७ ॥

व्याख्या–शीताशीतोदयोर्दक्षिणभागे उत्तरभागे वा षोडशानां विजयानां विष्कम्भपरिमाणं १५३६५४, अष्टानां वक्षस्कारपर्वतानां ८०००, षण्णां नदीनां १५००, मेरोः ९४००, पूर्वापरभद्रशालवनपरिमाणं २१५७५८, एतत्सर्वमेकत्र मीलितं जातं तिस्रो लक्षा अष्टाशीतिः सहस्राणि त्रीणि शतानि द्वादशोत्तराणि ३८८३१२, एतत् द्वीपात् धातकीखण्डद्वीपविष्कम्भपरिमाणाच्चतुर्लक्षरूपाच्छोधयित्वा यच्छेषमुपलभ्यते एकादश सहस्राणि षट् शतानि अष्टाशीत्यधिकानि ११६८८, अस्यार्धं क्रियते, लब्धमष्टपञ्चाशतानि चतुश्चत्वारिंशदधिकानि ५८४४, एतद्वनमुखानां शीताशीतोदासमीपे पृथुत्वपरिमाणम् ॥७७॥

सम्प्रति मेरुपृथुत्वं पूर्वापरभद्रशालवनदैर्घ्यं चैकत्र मीलितं यावद्भवति तावत्प्रमाणप्रतिपादनार्थमाह–

बायाला अट्ठ सया, चउसयरि सहस्स सयसहस्सं च ।
धायइविक्खंभाओ, सोहेउं मंदरवणं तु ॥ ७८ ॥

व्याख्या—विजयषोडशकस्य पृथुत्वपरिमाणं १५३६५४, वनमुखद्वयस्य ११६८८, वक्षस्कारपर्वताष्टकस्य ८०००, नदीषट्कस्य १५००, एतदेकत्र मीलितं जातमेकं शतसहस्रं चतुःसप्ततिः सहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि १७४८४२, एतत् धातकीखण्डद्वीपविष्कम्भाच्चतुर्लक्षपरिमाणाच्छोध्यते, शोधयित्वा च यच्छेषमुपलभ्यते द्वे लक्षे पञ्चविंशतिः सहस्राणि शतमेकमष्टपञ्चाशदधिकं २२५१५८, एतन्मन्दरसहितं पूर्वापरभद्रशालवनपरिमाणं ज्ञातव्यम् । तत्र मेरोः पृथुत्वपरिमाणं चतुर्नवतिशतानि

९४००, पूर्वस्यापरस्य च भद्रशालवनस्य पृथक् परिमाणमेकं शतसहस्रं सप्त सहस्राणि अष्टौ शतानि एकोनाशीत्यधिकानि १०७८७९ ॥ ७८ ॥

सम्प्रति धातकीखण्डे चन्द्रादिसङ्ख्यामाह—

चउवीसं ससिरविणो, नक्खत्तसया य तिन्नि छत्तीसा ।
एगं च गहसहस्सं, छप्पन्नं धायईसंडे ॥ ७९ ॥
अट्ठेव सयसहस्सा, तिन्नि सहस्सा य सत्त य सयाउं ।
धायइसंडे दीवे, तारागणकोडिकोडीणं ॥ ८० ॥

व्याख्या—धातकीखण्डे द्वीपे शशिरवयो मिलिताश्चतुर्विंशतिर्भवन्ति । किमुक्तं भवति? धातकीखण्डद्वीपे द्वादश चन्द्रा द्वादश सूर्याः । तथा धातकीखण्डद्वीपे नक्षत्राणां त्रीणि शतानि षट्त्रिंशदधिकानि भवन्ति । तथाहि—एकैकस्य शशिनः परिवारो नक्षत्राणि अष्टाविंशतिरष्टाविंशतिश्च द्वादशभिर्गुणिता त्रीणि शतानि षट्त्रिंशदधिकानि भवन्ति, एवं ग्रहादिष्वपि भावना कार्या । तत्र ग्रहाणामेकं सहस्रं षट्पञ्चाशदधिकं १०५६ । तथा धातकीखण्डे तारागणकोटिकोटीनामष्टौ शतसहस्राणि त्रीणि सहस्राणि सप्त शतानि ८०३७ शून्यानि १६ ॥ ७९-८० ॥

साम्प्रतमधिकारोपसंहारमाह—

धायइसंडो दीवो, खित्तसमासस्स तइय अहिगारो ।
गाहापरिमाणेणं, नायव्वो एगसीईउ ॥ ८१ ॥

व्याख्या—क्षेत्रसमासस्य क्षेत्रसमासाभिधानस्य धातकीखण्डो द्वीप इतिनामा तृतीयोऽधिकारः समाप्तः । स च गाथापरिमाणेन एकाशीतिरेकाशीतिसङ्ख्यो ज्ञातव्यः ॥ ८१ ॥

इति श्रीमलयगिरिविरचितायां क्षेत्रसमासटीकायां तृतीयो धातकीखण्डद्वीप नामाऽधिकारः समाप्तः ॥ ३ ॥

---

## अथ चतुर्थोऽधिकारः

तदेवमुक्ता धातकीखण्डद्वीपवक्तव्यता । साम्प्रतमेतदनन्तरं कालोदवक्तव्यतामाह—

अठेव सयसहस्सा, कालोउ चक्कवालउ रुंदो ।
जोयणसहस्समेगं, उगाहेणं मुणेयव्वो ॥ १ ॥

व्याख्या—कालं कृष्णं माषराशिनिभमुदकं यस्मिन् स कालोदः, "उदकस्योदः" (सिद्धहेम ३-

२–१०४ ) इत्युदकशब्दस्योदभावः। यदिवा कालोदसमुद्रस्य द्वावधिपती, तद्यथा–कालो महाकालश्च, ततः कालमहाकालयोः संबन्ध्युदकमस्मिन्निति कालोदः, उदकशब्दस्योदभावः प्राग्वत्। उक्तं च जीवाभिगमे—"से केणट्ठेणं भंते एवं वुच्चइ कालोदे समुद्दे २ इति? गोयमा! कालोयस्स णं समुद्दस्स उदगे आसले मासले पेसले काले पगईए उदगरसे कालमहाकाला य एत्थ दुवे देवा जाव पलिओवमट्ठिईया परिवसंति, से एएणट्ठेणं गोयमा! कालोए एवं वुच्चइ कालोए समुद्दे" इति। स च कालोदसमुद्रश्चक्रवालतया रुन्दो विस्तीर्णः अष्टौ योजनशतसहस्राणि ८००००० । अवगाहेनोण्डत्वेन पुनः सर्वत्रापि योजनसहस्रमेकम् १००० ॥ १ ॥

सम्प्रत्यस्य परिधिमाह—

इगनउइ सयसहस्सा, हवंति तह सत्तरी सहस्सा य।
छच्च सया पंचहिया, कालोयहिपरिरओ एसो ॥ २ ॥

व्याख्या—एष कालोदधेः कालोदसमुद्रस्य परिरय एकनवतिलक्षाः सप्ततिसहस्राणि षट् शतानि पञ्चाधिकानि ९१७०६०५। तथाहि—कालोदसमुद्रस्यैकतोऽष्टौ लक्षा, अपरतोऽप्यष्टौ लक्षा, धातकीखण्डस्यैकतश्चतस्रो लक्षा अपरतोऽपि चतस्रः, लवणोदस्यैकतो द्वे लक्षे अपरतोऽपीति चतस्रः, एका लक्षा जम्बूद्वीपस्येति सर्वसङ्ख्ययैकोनत्रिंशल्लक्षाः २९०००००, तस्य वर्गो विधीयते, जातोऽष्टकः चतुष्कः एककः शून्यानि दश

८४१ शू० १०, ततो दशभिर्गुणने जातानि एकादश शून्यानि ८४१ शू० ११ एतेषां वर्गमूलानयने लब्धं यथोक्तपरिमाणं ९१७०६०५, शेषं त्रिकः नवकः त्रिकः त्रिकः नवकः सप्तकः पञ्चकः ३९३३९७५, इति यदवतिष्ठते तत्त्यक्तम् । कालोदसमुद्रस्यापि जम्बूद्वीपस्येव विजयादीनि चत्वारि द्वाराणि, तद्यथा—पूर्वस्यां दिशि विजयं नाम द्वारं, दक्षिणस्यां वैजयन्तम्, अपरस्यां जयन्तम्, उत्तरस्यामपराजितम् । एकैकस्य च द्वारस्य चत्वारि योजनानि पृथुत्वं, गव्यूतप्रमाणपृथुला चैकैकद्वारशाखा, सर्वसङ्ख्यया एकैकस्य द्वारस्य सार्धानि चत्वारि योजनानि पृथुत्वम् ॥ २ ॥

सम्प्रति द्वाराणां परस्परमन्तरप्रमाणमाह—

बायाला छच्च सया, बाणउइ सहस्स लक्ख बावीसं ।
कोसा य तिन्नि दारं—तरं तु कालोयहिस्स भवे ॥ ३ ॥

व्याख्या—द्वाविंशतिर्लक्षा द्विनवतिः सहस्राणि षट् शतानि षट्चत्वारिंशदधिकानि योजनानां त्रयश्च क्रोशा इति कालोदधेः कालोदसमुद्रस्य द्वाराणां परस्परमन्तरं भवति । तथाहि—चतुर्णामपि द्वाराणामेकत्र पृथुत्वमीलनेऽष्टादश योजनानि, तानि कालोदसमुद्रपरिधेः ९१७०६०५ अपनीयन्ते, अपनीतेषु (तेषु) जातमिदम् एकनवतिर्लक्षाः सप्ततिः सहस्राणि पञ्च शतानि सप्ताशीत्यधिकानि ९१७०५८७, एतेषां चतुर्भिर्भागे हृते लब्धं यथोक्तं द्वाराणां परस्परमन्तरपरिमाणम् २२९२६४६ क्रो० ३ ॥ ३ ॥

सम्प्रति चन्द्रादित्यद्वीपवक्तव्यतामाह—

जोयणसहस्स बारस, धायइवरपुव्वपच्छिमंताउ ।
गंतूणं कालोए, धायइसंडाण ससिरविणं ॥ ४ ॥

व्याख्या—धातकीखण्डात् द्वीपात् पूर्वस्यामपरस्यां च दिशि प्रत्येकं कालोदसमुद्रे द्वादश द्वादश योजनसहस्राणि गत्वाऽतिक्रम्यात्रान्तरे धातकीखण्डानां धातकीखण्डसत्कानां शशिरवीणां चन्द्रसूर्याणां द्वीपाः । इयमत्र भावना—धातकीखण्डात् द्वीपात् परतः पूर्वस्यां दिशि कालोदसमुद्रमध्ये द्वादश योजनसहस्राण्यवगाह्यात्रान्तरे धातकीखण्डसंबन्धिनां द्वादशसङ्ख्यानां चन्द्राणां द्वादश द्वीपाः, तथा धातकीखण्डात् परतः पश्चिमायां दिशि कालोदसमुद्रे द्वादश योजनसहस्राण्यवगाह्यात्रान्तरे धातकीखण्डसत्कानां द्वादशानां सूर्याणां द्वादश द्वीपा इति ॥ ४ ॥

तथा—

जोयणसहस्स बारस, पुक्करवरपुव्वपच्छिमंताउ ।
गंतूणं कालोए, कालोयाणं ससिरवीणं ॥ ५ ॥

व्याख्या—पुष्करवरद्वीपादर्वाक् पूर्वस्यामपरस्यां च दिशि प्रत्येकं कालोदसमुद्रे द्वादश द्वादश योजनसहस्राणि अतिक्रम्यात्रान्तरे कालोदानां कालोदसमुद्रसत्कानां शशिरवीणां द्वीपाः। अत्रापीयं भावना—

पुष्करवरद्वीपादर्वाक् पूर्वस्यां दिशि द्वादश योजनसहस्राणि अवगाह्यात्रान्तरे कालोदसमुद्रसंबन्धिनां द्विचत्वारिंशत्सङ्ख्यानां चन्द्राणां द्विचत्वारिंशत् द्वीपाः। तथा पुष्करवरद्वीपादर्वाक् पश्चिमायां दिशि द्वादश योजनसहस्राण्यवगाह्यात्रान्तरे कालोदसमुद्रसत्कानां द्विचत्वारिंशत्सङ्ख्यानां सूर्याणां द्विचत्वारिंशत् द्वीपाः ॥ ५ ॥

सम्प्रति द्वीपप्रमाणमाह—

जणिया दीवा रम्मा, गोयमदीवसरिसा पमाणेणं ।
नवरं सव्वत्थ समा, दोकोसुच्चा जलंताउ ॥ ६ ॥

व्याख्या—एतेऽनन्तरोक्ताः शशिनां सूर्याणां च द्वीपाः प्रमाणेन प्रमाणतो गौतमद्वीपसदृशा द्वादशयोजनसहस्रप्रमाणायामविष्कम्भा इत्यर्थः रम्या विचित्रमणिरत्नखचिततया रमणीयतरा जणितास्तीर्थंकरगणधरैः। नवरमत्र गौतमद्वीपादयं विशेषः—सर्वत्र द्वीपदिशि समुद्रदिशि च जलनिमग्नत्वमधिकृत्य समाः सर्वत्र कालोदसमुद्रस्य समावगाहत्वात्। जलान्ताच्च जलपर्यन्तादूर्ध्वं सर्वेऽपि द्वीपा द्वौ क्रोशावुच्चाः ॥ ६ ॥

सम्प्रति कालोदसमुद्रस्य जलस्वरूपं यथावत्प्रतिपादयति—

पगईए उदगरसं, कालोए उदग मासरासिनिभं ।

व्याख्या—कालोदे कालोदसमुद्रे उदकं माषराशिनिभमतीव कृष्णं, तथा प्रकृत्या स्वभावेन उदकरसं मेघसमुत्थोदकसमानास्वादं च, न च कदाचनापि लवणसमुद्र इव क्षोभमुपगच्छति, क्षोभहेतोः पातालकलशादेरभावात्, न खलु लवणसमुद्र इव वाय्वाश्रयभूताः पातालकलशाः सन्ति, ततो न क्षोभ इति। उक्तं च—"लवणे णं भंते ऊसिउदए पत्थडउदए खुभियजले अखुभियजले? गोयमा! लवणे समुद्दे ऊसिउदए नो पत्थडउदए खुभियजले नो अखुभियजले। जहा णं भंते लवणसमुद्दे ऊसिउदए नो पत्थडउदए खुभियजले नो अखुभियजले। तहा णं बाहिरगाऽवि समुद्दा किं ऊसिउदया पत्थडउदया खुभियजला अखुभियजला? गोयमा! बाहिरया णं समुद्दा नो ऊसिउदया पत्थडउदया नो खुभियजला अखुभियजला पुण्णा पुण्णपमाणा वोसट्टमाणा समभाए घडत्ता ते चिट्ठंति॥

सम्प्रति कालोदसमुद्रस्याधिपती आह—

**कालमहाकाला वि य, दो देवा अहिवई तस्स ॥ ७ ॥**

व्याख्या—तस्य कालोदसमुद्रस्य द्वौ देवावधिपती, तद्यथा—कालो महाकालश्च। तत्र पूर्वार्धे कालः पश्चिमार्धे महाकाल इति॥ ७॥

सम्प्रति तत्र चन्द्रादिसङ्ख्यामाह—

**बायालीसं चंदा, बायालीसं च दिणयरा दित्ता।**

कालोयहिम्मि एए, चरंति संबद्धलेसागा ॥ ८ ॥

व्याख्या—कालोदधौ द्विचत्वारिंशच्चन्द्राः, ते च सोमाः सोमलेश्याकत्वात् । तथा द्विचत्वारिंशद्दिनकरा आदित्याः, ते च दीप्ता दीप्तलेश्याकत्वात् । एते च सर्वेऽपि चरन्ति चारं कुर्वन्ति संबद्धलेश्याका । जम्बूद्वीप- गतचन्द्रादित्यैः सह समश्रेण्या प्रतिबद्धलेश्याकाः, अत एव यदा जम्बूद्वीपे मेरोर्दक्षिणभागे उत्तरभागे च दिवसः पूर्वपश्चिमयोश्च दिशो रजनी तदा कालोदेऽपि समुद्रे मेरोर्दक्षिणभागे उत्तरभागे च दिवसः पूर्वपश्चि- मयोश्च दिशो रजनी । यदा च जम्बूद्वीपे मेरोः पूर्वभागे पश्चिमभागे च दिवसो दक्षिणोत्तरयोर्भागयोश्च रजनी तदा कालोदेऽपि समुद्रे पूर्वपश्चिमभागयोर्दिवसो दक्षिणोत्तरयोर्भागयो रजनीति ॥ ८ ॥

सम्प्रति नक्षत्रग्रहसङ्ख्यामाह—

नक्खत्ताण सहस्सं, सयं च छावत्तरं मुणेयव्वं ।

छच्च सया छन्नउया, गहाण तिन्नेव य सहस्सा ॥ ९ ॥

व्याख्या—कालोदसमुद्रे नक्षत्राणामेकं सहस्रमेकं च शतं षट्सप्ततं षट्सप्तत्यधिकं ११७६ । ग्रहाणां त्रीणि सहस्राणि षट् शतानि षण्णवतानि षण्णवत्यधिकानि ३६९६ । एकैकस्य हि शशिनो नक्षत्राणि अष्टाविंशतिः, ग्रहाश्च अष्टाशीतिः, ततो द्विचत्वारिंशताऽष्टाविंशतेरष्टाशीतेश्च गुणनेन भवति यथोक्तं नक्षत्रग्रहपरिमाणमिति । एवं तारापरिमाणभावना कार्या ॥ ९ ॥

अधुना तारापरिमाणमाह—

अठावीसं कालो—यहिम्मि बार सयसहस्साइं ।
नव य सया पन्नासा, तारागणकोमिकोमीणं ॥ १० ॥

व्याख्या—कालोदधौ तारागणकोटिकोटीनां द्वादशानि द्वादशसहस्राधिकानि अष्टाविंशतिः शतसहस्राणि नव च शतानि पञ्चाशदधिकानि २८१२९५० शू० १५ ॥ १० ॥

साम्प्रतमधिकारमुपसंहरति—

कालोयही समत्तो, खित्तसमासे चउत्थ अहिगारो ।
गाहापरिमाणेणं, एक्कारस होंति गाहाउ ॥ ११ ॥

व्याख्या—अस्मिन् क्षेत्रसमासाभिधे प्रकरणे चतुर्थः कालोदधिनामाऽधिकारः समाप्तः, स च गाथापरिमाणेन चिन्त्यमान एकादशगाथापरिमाणो भवतीत्यर्थः ॥ ११ ॥

॥ इति मलयगिरिविरचितायां क्षेत्रसमासटीकायां कालोदधिनामा चतुर्थोऽधिकारः समाप्तः ॥

# अथ पञ्चमोऽधिकारः

तदेवमुक्ता कालोदसमुद्रवक्तव्यता । सम्प्रत्येतदनन्तरं पुष्करवरद्वीपवक्तव्यतामाह—

पुक्खरवरदीवेणं, वलयागिइसंठिएण कालोउं ।
परिवेढिउं समंता, सोलस लक्खा य पिहुलो सो ॥ १ ॥

व्याख्या—पुष्करैः पद्मैर्वक्ष्यमाणस्वरूपैर्वरः प्रधानः पुष्करवरः, स चासौ द्वीपश्च पुष्करवरद्वीपः तेन, वलयाकृतिसंस्थानेन समंततः सर्वासु दिक्षु विदिक्षु च कालोदः कालोदसमुद्रः परिवेष्टितः । स च पुष्करवरद्वीपश्चक्रवालतया पृथुलो विस्तीर्णः षोडश लक्षाः ॥ १ ॥

सम्प्रत्यस्यैव पुष्करवरद्वीपस्य मध्ये यः स्थितो मानुषोत्तरस्तद्वक्तव्यतामाह—

एयस्स मज्झयारे, नामेणं माणुसोत्तरो सेलो ।
जगई व जंबुदीवं, वेढेत्तु ठिउं मणुयलोयं ॥ २ ॥

व्याख्या—एतस्यानन्तरोद्दिष्टस्य पुष्करवरद्वीपस्य मध्यकारे मध्यभागे मानुषोत्तरः शैलः मानुषस्य मानुषक्षेत्रस्य सीमाकारितया उत्तरः परो मानुषोत्तरः । स च मनुष्यलोकं जगतीव जम्बूद्वीपं समन्ततो वेष्टयित्वा स्थितः ॥ २ ॥

सम्प्रत्यस्योच्छ्रयादिपरिमाणमाह—

सत्तरस जोयणसए, इगवीसे सो समूसिउ रम्मो ।
तीसे चत्तारि सए, कोसं च अहो समोगाढो ॥ ३ ॥

व्याख्या—मानुषोत्तरः पर्वतः सप्तदश योजनशतानि एकविंशानि एकविंशत्यधिकानि १७२१ समुच्छ्रितः । तथा त्रिंशानि त्रिंशदधिकानि चत्वारि योजनशतानि क्रोशं चैकमधोभूमौ समवगाढो निमग्नः ४३० क्रो० १ ॥ ३ ॥

तथा—

मूले दस बावीसे, रुंदो मज्झम्मि सत्त तेवीसे ।
उवरिं चत्तारि सए, चउवीसे होइ विच्छिन्नो ॥ ४ ॥

व्याख्या—मूले धरणितले रुन्दो विस्तीर्णो दश योजनशतानि द्वाविंशत्यधिकानि १०२२, मध्यभागे सप्त योजनशतानि त्रयोविंशत्यधिकानि ७२३, उपरि चत्वारि योजनशतानि चतुर्विंशत्यधिकानि ४२४ विस्तीर्णः । उपरितलभागादपि चाधोमुखमवतरणे विष्कम्भपरिमाणज्ञापनार्थं करणं प्रागेवोक्तं भावितं चेति न भूयोऽभिधीयते ॥ ४ ॥

सम्प्रत्यस्यैव मानुषोत्तरपर्वतस्याभ्यन्तरपरिरयपरिमाणमाह—

एगा जोयणकोडी, लक्खा बायाल तीस य सहस्सा ।
दो य सय अउणपन्ना, अब्भिंतरपरिरओ तस्स ॥ ५ ॥

व्याख्या—तस्य मानुषोत्तरपर्वतस्याभ्यन्तरः परिरय एका योजनानां कोटी द्विचत्वारिंशल्लक्षास्त्रिंशत्सहस्राणि द्वे शते एकोनपञ्चाशदधिके १४२३०२४९ । तथाहि—एकतोऽपि पुष्करवरार्धस्याष्टौ लक्षा अपरतोऽपीति षोडश, तथा एकतोऽपि कालोदसमुद्रेऽष्टौ लक्षा अपरतोऽपीति षोडश, तथा एकतोऽपि धातकीखण्डे चतस्रो लक्षा अपरतोऽपीत्यष्टौ, (तथा) एकतोऽपि लवणसमुद्रस्य द्वे लक्षे अपरतोऽपीति चतस्रः, (तथा) एका लक्षा जम्बूद्वीपस्येति सर्वसङ्ख्यया पञ्चचत्वारिंशल्लक्षाः, तासां वर्गो विधीयते, जातो द्विकः शून्यं द्विकः पञ्चकः शून्यानि दश २०२५ शू० १०, दशभिर्गुणने जातानि एकादश शून्यानि २०२५ शू० ११, एतेषां वर्गमूलानयने लब्धं यथोक्तं परिरयपरिमाणं १४२३०२४९, शेषं त्यक्तम् ॥ ५ ॥

सम्प्रति मानुषोत्तरपर्वतस्यैव बाह्यपरिरयपरिमाणमाह—

एगा जोयणकोडी, छत्तीस सहस्स लक्ख बायाला ।
तेरसहिय सत्त सया, बाहिरपरिही गिरिवरस्स ॥ ६ ॥

व्याख्या—गिरिवरस्य मानुषोत्तरपर्वतस्य बाह्यः परिधिरेका योजनानां कोटी द्विचत्वारिंशल्लक्षाः षट्त्रिंशत्सहस्राणि सप्त शतानि त्रयोदशाधिकानि। तथाहि—एकतोऽपि मानुषोत्तरपर्वतस्य धरणितले विष्कम्भो दश योजनशतानि द्वाविंशत्यधिकानि १०२२, अपरतोऽपीति मिलितानि विंशतिशतानि चतुश्चत्वारिंशदधिकानि २०४४, एतानि पञ्चचत्वारिंशल्लक्षेषु मध्ये प्रक्षिप्यन्ते ४५०२०४४, ततो वर्गो विधीयते, जातो द्विकः शून्यं द्विकः षट्कः अष्टकः चतुष्कः शून्यं शून्यं एककः सप्तकः सप्तकः नवकः त्रिकः षट्कः २०२६८४००१७७९३६, दशभिर्गुणने लब्धमधिकमेकं शून्यं २०२६८४००१७७९३६०, ततो वर्गमूलानयने लब्धं यथोक्तं बाह्यपरिरयपरिमाणं १४२३६७१३। शेषं त्यक्तम् ॥ ६ ॥

सम्प्रति मानुषोत्तरपर्वतस्यैव स्वरूपमाह—

जंबूनयामउ सो, रम्मो अध्धजवसंठिउ भणिउ।
सीहनिसाई जेणं, डुहा कउ पुक्खरद्दीवो ॥ ७ ॥

व्याख्या—येन मानुषोत्तरेण पर्वतेन पुष्करवरद्वीपो द्विधा कृतः, तद्यथा—एकमभ्यन्तरं पुष्करवरद्वीपार्धं द्वितीयं बाह्यं पुष्करवरद्वीपार्धमिति। स तीर्थकरगणधरैर्भणितो जाम्बूनदमयो हेममयो विचित्रमणिनिबद्धपुष्करिणीलतागृहमण्डपादिसंकुलतया रम्यो रमणीयोऽर्धयवसंस्थितो यवार्धसंस्थानसंस्थितः सिंहनिषादी यथा सिंहोऽग्रेतनपादयुगलमुत्तम्भ्य पश्चात्तनं तु पादयुग्मं संकोच्य पुताभ्यां

निषीदति, निषण्णश्च शिरःप्रदेशे उन्नतः पाश्चात्यभागे तु निम्नो निम्नतर एवं मानुषोत्तरोऽपि जम्बूद्वीपदिशि छिन्नटङ्कः सर्वोन्नतः पाश्चात्यभागे तूपरितनभागात्प्रदेशहान्या निम्नो निम्नतर इति । एवं यवार्धसंस्थानेऽपि भावना कार्या । अयं च मानुषोत्तरपर्वतो बाह्यपुष्करवरार्धभूमौ प्रतिपत्तव्यः ॥ ७ ॥

सम्प्रत्यभ्यन्तरपुष्करवरार्धे विष्कम्भमिषुकारपर्वतवक्तव्यतां च प्रतिपादयति—

अट्ठेव सयसहस्सा, अब्भिंतरपुक्खरस्स विक्खंभो ।
उत्तरदाहिणदीहा, उसुयारा तस्स मज्झम्मि ॥ ८ ॥
धायइसंडयतुल्ला, कालोयमाणुसोत्तरे पुट्ठा ।
तेहि दुहा निद्दिस्सइ, पुव्वद्धं पच्छिमद्धं च ॥ ९ ॥

व्याख्या—अभ्यन्तरपुष्करस्याभ्यन्तरपुष्करवरद्वीपार्धस्य चक्रवालतया विष्कम्भोऽष्टौ शतसहस्राणि ८००००००, तस्य चाभ्यन्तरपुष्करवरद्वीपार्धस्य मध्ये मध्यभागे द्वौ दक्षिणोत्तरदिग्भाविनौ दक्षिणोत्तरदीर्घाविषुकाराख्यौ पर्वतौ । तौ च किंविशिष्टावित्याह—धातकीखण्डतुल्यौ प्रमाणतो धातकीखण्डद्वीपगतेषुकारतुल्यौ । किमुक्तं भवति ? धातकीखण्डगतयोरिवानयोरिषुकारपर्वतयोः प्रत्येकं विष्कम्भो योजनसहस्रं १०००, उच्चैस्त्वं पञ्च योजनशतानि ५०० । पुनः किंविशिष्टावित्याह—कालोदमानुषोत्तरस्पृष्टौ इहत्यं प्रज्ञापकमपेक्ष्यार्वाग्भागेन कालोदसमुद्रं परभागेन मानुषोत्तरपर्वतं स्पृष्टौ

एकं स्पृष्टवन्तौ। ताभ्यां च द्वाभ्यामिषुकारपर्वताभ्यामभ्यन्तरपुष्करार्धं द्विधा निर्दिश्यते, तद्यथा—एकं पूर्वार्धमपरं पश्चिमार्धमिति ॥ ८–९ ॥

सम्प्रति कुरुवक्तव्यतामाह—

तिन्नेव सयसहस्सा, नवनउई खलु भवे सहस्सा य।
पुक्खरवरदीवड्ढे, उगाहित्ताण दो कुरा ॥ १० ॥
दो चेव सहस्साइं, विछिन्ना होंति आणुपुव्वीए।
दस चेव जोयणाइं, उव्वेहेणं भवे कुरा ॥ ११ ॥

व्याख्या—पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च प्रत्येकं कालोदसमुद्रवेदिकान्तात्परतो मानुषोत्तराच्च पर्वतादर्वाक् पृथक् त्रीणि शतसहस्राणि नवनवतिसहस्राणि च योजनानां ३९९००० गत्वाऽत्रान्तरे द्वे कुरू, तद्यथा—एकं पूर्वार्धे एकमपरार्धे, ते च द्वे अपि कुरू द्वे द्वे योजनसहस्रे विस्तीर्णे २०००, ते चेत्थं विस्तीर्णे आनुपूर्व्या क्रमेण, तद्यथा—अधोभागे स्तोकं विस्तीर्णे, ततः क्रमेण विस्तीर्णे विस्तीर्णतरे जायमाने धरणितले द्वे योजनसहस्रे विस्तीर्णे, उद्वेधेन च ते द्वे अपि कुरू प्रत्येकं दश योजनानि १० ॥ १०–११ ॥

१ उपरिभागे. २ इमे कुरू कस्मिन् क्षेत्रे ( स्थले ) वर्तेते इति न लिखितमत्र.

सम्प्रति वैताढ्यवक्तव्यतामाह—

उव्वेहो वेयड्ढाणं, जोयणाइं तु छस्सकोसाइं ।
पणुवीसं उव्विद्धा, दो चेव सयाइं विच्छिन्ना ॥ १२ ॥

व्याख्या—वैताढ्यानां भरतैरावतविजयसंबन्धिनां सर्वसङ्ख्ययाऽष्टषष्टिसङ्ख्यानां प्रत्येकमुद्वेधो भूमौ निमग्नत्वं षट् सक्रोशानि योजनानि यो० ६ क्रो० १, उद्विद्धा उच्चाः सर्वेऽपि योजनानां पञ्चविंशतिः पञ्चविंशतिश्च योजनान्युच्चा इत्यर्थः, तथा द्वे योजनानां शते विस्तीर्णे *२०० ॥ १२ ॥

सम्प्रति भरतादिक्षेत्राणां मुखमध्यबहिर्विष्कम्भानयनाय करणमभिधित्सुराह—

धायइसंडडुगुणा, वासहरा होंति पुक्खरद्धम्मि ।
उसुयारा साहस्सा, ते मिलिया होंतिमं खित्तं ॥ १३ ॥

व्याख्या—धातकीखण्डगेभ्यो धातकीखण्डगतेभ्यो हिमवदादिभ्यो वर्षधरेभ्यः सकाशात् पुष्करवरद्वीपार्धे वर्षधरा हिमवदादयो विष्कम्भमधिकृत्य द्विगुणा भवन्ति, इषुकारौ च द्वावपि प्रत्येकं पृथु-

* जम्बूद्वीप इव धातकीखण्डेऽपि वैताढ्यविस्तारो यो. ५० उक्तः ।

त्वमधिकृत्य साहस्रौ योजनसहस्रप्रमाणौ, ततस्ते वर्षधरास्तौ चेषुकारौ यदा बुद्ध्या एकत्र मील्यन्ते तदैवं वक्ष्यमाणस्वरूपं क्षेत्रं वर्षधरेषुकारावष्टब्धक्षेत्रपरिमाणं भवति ॥ १२ ॥

तदेवाह

पणपन्नं च सहस्सा, छच्चेव सया हवंति चुलसीया ।

तिन्नेव सयसहस्सा,

व्याख्या—त्रीणि शतसहस्राणि पञ्चपञ्चाशत्सहस्राणि षट् शतानि चतुरशीत्यधिकानि ३५५६८४। तथाहि—अत्र हिमवतः शिखरिणश्च प्रत्येकं पृथुत्वपरिमाणं द्विचत्वारिंशच्छतानि दशोत्तराणि योजनानां दश चैकोनविंशतिभागरूपाः कला योजनस्य ४२१०$\frac{10}{19}$। महाहिमवतो रुक्मिणश्च षोडश सहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि योजनानां द्वे च कले योजनस्य १६८४२$\frac{2}{19}$। निषधस्य नीलवतश्च सप्तषष्टिर्योजनानां सहस्राणि त्रीणि शतानि अष्टषष्ट्यधिकानि कलाश्चाष्टौ योजनस्य ६७३६८$\frac{8}{19}$। एतेषामेकत्र मीलनेन जातमेकं शतसहस्रं षट्सप्ततिः सहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि १७६८४२, शेषं कलाद्वयं त्यक्तं, एतावच्च वर्षधरावष्टब्धक्षेत्रपरिमाणमेकस्मिन्नर्धे, एतावच्च द्वितीयेऽप्यर्धे इत्युभयमीलने जातास्तिस्रो लक्षास्त्रिपञ्चाशत्सहस्राणि षट् शतानि चतुरशीत्यधिकानि ३५३६८४। इषुकारद्वयस्य च पृथुत्वपरिमाणं द्वे योजनसहस्रे, ते अप्यत्र प्रक्षिप्येते, ततो भवति यथोक्तं वर्षधरेषुकारावष्टब्धक्षेत्रपरिमाणमिति ॥

ततः किमित्याह—

वासविहीणं तु जं खित्तं ॥ १४ ॥

एयं पुण सोहिज्जा, कालोयहिपरिरया उ सेसमिणं ।

चउदस सहस्स नव सय, इगवीसइ लक्ख असीई ॥ १५ ॥

व्याख्या—एतदनन्तरोक्तं क्षेत्रपरिमाणं वर्षविरहितं भरतादिक्षेत्रपृथुत्वविरहितं क्षेत्रपरिमाणं तदवगन्तव्यम् । एतत् पुनः कालोदधिपरिरयात् कालोदसमुद्रपरिरयपरिमाणात् एकनवतिर्लक्षाः सप्ततिः सहस्राणि षट् शतानि पञ्चोत्तराणि ९१७०६०५ इत्येवंरूपाच्छोधयेत्, शोधिते च सति जातं शेषमिदम्—अष्टाशीतिर्लक्षाश्चतुर्दश सहस्राणि नव शतानि एकविंशत्यधिकानि ८८१४९२१, एष भरतादीनामभ्यन्तरविष्कम्भानयने ध्रुवराशिः ॥ १४–१५ ॥

ततः किमित्याह

वासहरविरहियं खलु, जं खित्तं पुक्खरद्धदीवम्मि ।

जावंतावेहि गुणं, भय दोहिं सएहिं बारेहिं ॥ १६ ॥

व्याख्या—वर्षधरैर्हिमवदादिभिर्विरहितं यत् खलु क्षेत्रपरिमाणं पुष्करवरार्धे प्रागनन्तरमुक्तं तत्

यावत्तावत्संज्ञैरीप्सितभरतक्षेत्रादिसत्कैर्गुणकारैरेकादिभिः तद्यथा—भरतक्षेत्र ऐरावते चैको गुणकारः १, हैमवते हैरण्यवते च चत्वारः ४, हरिवर्षे रम्यके च षोडश १६, महाविदेहे चतुःषष्टिः ६४, एतैर्गुणकारैर्गुणं गुणितं कृत्वा द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भज, ततो भरतादीनामभ्यन्तरविष्कम्भपरिमाणमागच्छति ॥ १६ ॥

तत्र भरतक्षेत्रेऽभ्यन्तरविष्कम्भमानमाह—

ईयालीस सहस्सा, पंचेव सया हवंति गुणसीया ।
तेवत्तरमंससयं, मुहविक्खंभो भरहवासे ॥ १७ ॥

व्याख्या—भरतवर्षे भरतक्षेत्रे मुखविष्कम्भोऽभ्यन्तरविष्कम्भः कालोददिशि विष्कम्भ इत्यर्थः एकचत्वारिंशत्सहस्राणि पञ्च शतानि एकोनाशीत्यधिकानि योजनानाम्, अंशानां च शतं त्रिसप्तत्यधिकम् । तथाहि—वर्षधरविहीनक्षेत्रपरिमाणरूपो ध्रुवराशिः ८८१४९२१ एकेन गुण्येत, एकेन च गुणितं तदेव भवति, ततो द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते लब्धं यथोक्तं भरतक्षेत्रेऽभ्यन्तरविष्कम्भपरिमाणम् ४१५७९ $\frac{१७३}{२१२}$ ॥ १७ ॥

सम्प्रति हैमवते मुखविष्कम्भमानमाह—

उणवीसा तिन्नि सया, छावट्ठि सहस्स सयसहस्सं च ।

अंसा वि य छप्पन्नं, मुहविक्खंभो उ हेमवए ॥ १८ ॥

व्याख्या—हैमवते क्षेत्रे मुखविष्कम्भ एकं लक्षं षट्षष्टिः सहस्राणि त्रीणि शतानि एकोनविंशत्यधिकानि योजनानाम्, अंशाश्च षट्पञ्चाशत्। तथाहि—ध्रुवराशिः ८८१४९२१ चतुर्भिर्गुण्यते, जातस्त्रिकः पञ्चको द्विकः पञ्चको नवकः षट्कः अष्टकः चतुष्कः ३५२५९६८४ एतेषां द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धं यथोक्तं हैमवतमुखविष्कम्भपरिमाणम् १६६३१९$\frac{56}{212}$ ॥ १८ ॥

सम्प्रति हरिवर्षे मुखविष्कम्भपरिमाणमाह—

सत्तत्तर दोन्नि सया, पणसट्ठि सहस्स छच्च लक्खा य।

बारस चेव य अंसा, मुहविक्खंभो उ हरिवासे ॥ १९ ॥

व्याख्या—हरिवर्षे मुखविष्कम्भः षट् लक्षाः पञ्चषष्टिः सहस्राणि द्वे शते सप्तसप्तत्यधिके योजनानाम्, अंशाश्च द्वादश। तथाहि—ध्रुवराशिः ८८१४९२१ षोडशभिर्गुणने जात एककः चतुष्कः एककः शून्यं त्रिकः अष्टकः सप्तकः त्रिकः षट्कः १४१०३८७३६, एतेषां द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धं यथोक्तं हरिवर्षे मुखविष्कम्भपरिमाणम् ६६५२७७$\frac{12}{212}$ यच्च भरतहैमवतहरिवर्षाणामभ्यन्तरविष्कम्भपरिमाणमुक्तं तदेव क्रमेणैरावतहैरण्यवतरम्यकानामभ्यन्तरविष्कम्भपरिमाणमवसेयम् ॥१९॥

सम्प्रति महाविदेहे मुखविष्कम्भमानमाह—

अडुत्तरसयमेगं, एगठि सहस्स लक्ख छव्वीसं ।

अडयालीसं अंसा, मुहविक्खंभो विदेहस्स ॥ २० ॥

व्याख्या—विदेहस्य विदेहक्षेत्रस्य मुखविष्कम्भः षड्विंशतिर्लक्षा एकषष्टिः सहस्राणि एकं च शतमष्टाधिकं योजनानाम्, अंशाश्चाष्टाचत्वारिंशत् । तथाहि—ध्रुवराशिः ७७१४९२१ चतुःषष्ट्या गुण्यते, जातः पञ्चकः षट्कः चतुष्कः एककः पञ्चकः चतुष्कः नवकः चतुष्कः चतुष्कः ५६४१५४९४४, एतेषां द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धं यथोक्तं महाविदेहमुखविष्कम्भपरिमाणम् २६६११०८$\frac{४८}{२१२}$ ॥ २० ॥

सम्प्रति भरतक्षेत्रादिषु मध्यविष्कम्भानयनाय ध्रुवराश्यन्तरं प्रक्रियां चाह—

तं चेव य सोहिज्जा, पुक्खर अद्धद्ध परिरया सेसं ।

जावंतावेहि गुणे, मज्झे खित्ताण विक्खंभो ॥ २१ ॥

व्याख्या—तदेव पूर्वोक्तं वर्षविहीनं क्षेत्रपरिमाणं पुष्करवरद्वीपार्धार्धपरिरयपरिमाणाच्छोध्यते, शोधिते च तस्मिन् यच्छेषमवतिष्ठते स मध्यभागे ध्रुवराशिः, ततः स यावत्तावत्संज्ञैः एकचतुःषोडशचतुष्षष्टिरूपैर्गु-

एयते, गुणयित्वा च द्वादशोत्तराभ्यां द्वाभ्यां शताभ्यां भागे हृते यल्लभ्यते स मध्ये मध्यभागे क्षेत्राणां भरतादीनां विष्कम्भो भवति ॥ २१ ॥

तत्र पुष्करवरद्वीपार्धार्धपरिरयपरिमाणमाह—

सत्तावीसा चउरो, सया उ सत्तरस सयसहस्सा य।

एगा य होइ कोडी, पुक्खरअद्धद्धपरिहीउ ॥ २२ ॥

व्याख्या—एका योजनकोटी सप्तदश लक्षाश्चत्वारि शतानि सप्तविंशत्यधिकानि। तथाहि—कालोदपरिधिरेकनवतिर्लक्षाः सप्ततिः सहस्राणि षट् शतानि पञ्चोत्तराणि ९१७०६०५, पुष्करवरद्वीपार्धपरिधिरेका योजनकोटी द्विचत्वारिंशल्लक्षसहस्राणि त्रिंशत्सहस्राणि द्वे शते एकोनपञ्चाशदधिके १४२३०२४९, एतयोरेकत्र मीलने जातो द्विकः त्रिकः चतुष्कः शून्यं शून्यम् अष्टकः पञ्चकः चतुष्कः २३४००८५४, अस्यार्धे भवति यथोक्तं पुष्करवरद्वीपार्धार्धपरिमाणम् ११७००४२७। एतस्मात्पर्वतविहीनक्षेत्रपरिमाणं तिस्रो लक्षाः पञ्चपञ्चाशत्सहस्राणि षट् शतानि चतुरशीत्यधिकानि ३५५६८४ शोध्यते, शोधिते च सति जातं शेषमिदम्—एका कोटी त्रयोदश लक्षाश्चतुश्चत्वारिंशत्सहस्राणि सप्त शतानि त्रिचत्वारिंशदधिकानि योजनानाम् ११३४४७४३, एष विष्कम्भानयने ध्रुवराशिः ॥ २२ ॥

तथा चाह—

कोडी तेरस लक्खा, चोयाल सहस्स सत्त तेयाला ।
पुक्खरवरस्स मज्झे, धुवरासी एस नायव्वो ॥ २३ ॥

व्याख्या—सुगमा ॥ २३ ॥

सम्प्रति भरतक्षेत्रे मध्यविष्कम्भमानमाह—

तेवन्नं च सहस्सा, पंच सया बारसुत्तरा होंति ।
नवणउयं अंससयं, मज्झे भरहस्स विक्खंभो ॥ २४ ॥

व्याख्या—पुष्करवरद्वीपार्धे भरतक्षेत्रस्य मध्यभागे विष्कम्भः त्रिपञ्चाशत्सहस्राणि पञ्च शतानि द्वादशोत्तराणि योजनानाम्, अंशानां च शतं नवनवत्यधिकम् । तथाहि—ध्रुवराशिः ११३४४७४३ एकेन गुण्यते, एकेन च गुणितं तदेव भवति, ततो द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धं यथोक्तं भरतक्षेत्रे मध्यविष्कम्भमानम् ५३५१२ $\frac{१९९}{२१२}$ ॥ २४ ॥

अधुना हैमवते मध्यविष्कम्भमानमाह—

एगावन्ना चउदस, सहस्स दो चेव सयसहस्सा य ।
सट्ठिं अंसाण सयं, हेमवए मज्झविक्खंभो ॥ २५ ॥

व्याख्या—हैमवते क्षेत्रे मध्यविष्कम्भो द्वे योजनानां लक्षे चतुर्दश सहस्राणि एकपञ्चाशानि एकपञ्चाशदधिकानि षष्ट्युत्तरमंशानां शतमिति । तथाहि—ध्रुवराशिः ११३४४७४३ चतुर्भिर्गुण्यते, जातः चतुष्कः पञ्चकः त्रिकः सप्तकः अष्टकः नवकः सप्तकः द्विकः ४५३७८९७२, तत एतेषां द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धं यथोक्तं हैमवते मध्यविष्कम्भमानम् २१४-०५१ $\frac{१६०}{२१२}$ ॥ २५ ॥

सम्प्रति हरिवर्षे मध्यविष्कम्भमानमाह—

**सत्तहिया दोन्नि सया, छप्पन्न सहस्स अठ लक्खा य ।**
**चत्तारि चेव अंसा, हरिवासे मझविक्खंभो ॥ २६ ॥**

व्याख्या—हरिवर्षे क्षेत्रे मध्यविष्कम्भोऽष्टौ लक्षाः षट्पञ्चाशत्सहस्राणि द्वे शते सप्तोत्तरे योजनानाम्, अंशाश्चत्वारः। तथाहि—ध्रुवराशिः ११३४४७४३ षोडशभिर्गुण्यते, जात एककः अष्टकः एककः पञ्चकः एककः पञ्चकः अष्टकः अष्टकः अष्टकः १८१५१५८८८, ततो द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धं यथोक्तं हरिवर्षे मध्ये विष्कम्भमानम् ८५६२०७ $\frac{४}{२१२}$ । यच्च भरतहैमवतहरिवर्षाणां मध्यविष्कम्भपरिमाणमुक्तं तदेव क्रमेणैरावतहैरण्यवतरम्यकानां मध्ये विष्कम्भपरिमाणमवसेयम् ॥ २६ ॥

अधुना महाविदेहक्षेत्रे मध्यविष्कम्भमानमाह—

अडवीसा अठ सया, चउवीस सहस्स लक्ख चउतीसं।
सोलस चेव य अंसा, मज्झविदेहस्स विक्खंभो ॥ २७ ॥

व्याख्या—महाविदेहक्षेत्रस्य मध्ये विष्कम्भश्चतुस्त्रिंशल्लक्षाश्चतुर्विंशतिः सहस्राणि अष्टौ शतानि अष्टाविंशत्यधिकानि योजनानाम्, अंशाश्च षोडश। तथाहि—ध्रुवराशिः ११२४५७४२ चतुःषष्ट्या गुण्यते, जातः सप्तकः द्विकः षट्कः शून्यं षट्कः त्रिकः पञ्चकः पञ्चकः द्विकः ७२६०६३५५२, एषां द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धं यथोक्तं महाविदेहक्षेत्रे मध्यविष्कम्भमानम् ३४२४८२८ $\frac{१६}{२१२}$ ॥ २७ ॥

सम्प्रति भरतादिषु क्षेत्रेषु बहिर्विष्कम्भानयनाय ध्रुवराश्यन्तरं प्रक्रियां चाह—

तं चेव य सोहिज्जा, माणुसखेत्तस्स परिरया सेसं।
जावंतावेहि गुणं, बाहिरखेत्तस्स विक्खंभो ॥ २८ ॥

व्याख्या—तदेव प्रागुक्तं वर्षत्रिरहितक्षेत्रपरिमाणं मानुषक्षेत्रपरिरयाच्छोध्यते, शोधिते च तस्मिन् यच्छेषमवतिष्ठते स बहिर्विष्कम्भानयने ध्रुवराशिः, ततः स यावत्तावत्संज्ञकैरेकचतुःषोडशचतुःषष्टिलक्षणैर्गुणकारैर्गुण्यते, गुणयित्वा च द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, ततो भरतादिषु बहिर्विष्कम्भ आगच्छति। तत्र मनुष्यक्षेत्रस्य परिरयपरिमाणं प्रागेवोक्तम्, तच्चैका योजनकोटिः द्विचत्वारिंश-

द्वात्रिंशत्सहस्राणि द्वे शते एकोनपञ्चाशदधिके १४२३०२४९। अस्माद्वर्षविहीनं क्षेत्रपरिमाणं तिस्रो लक्षाः पञ्चपञ्चाशत्सहस्राणि षट् शतानि चतुरशीत्यधिकानि ३५५६८४ शोध्यते, शोधिते च तस्मिन् जातं शेषमिदम्—एका कोटी अष्टात्रिंशल्लक्षाश्चतुःसप्ततिः सहस्राणि पञ्चशतानि पञ्चषष्ट्यधिकानि १३८७४५६५॥२८॥

एतदेवाह—

अठत्तीसं लक्खा, कोडी चउहत्तरी सहस्सा य।
पंच सया पन्नठा, विसुद्धसेसं हवइ एवं॥ २९॥

व्याख्या—सुगमा। एष ध्रुवराशिः॥ २९॥

सम्प्रति भरतक्षेत्रे बाह्यविष्कम्भमानमाह—

पन्नठि सहस्साइं, चत्तारि सया हवंति छायाला।
तेरस चेव य अंसा, बाहिरउ भरहविक्खंभो॥ ३०॥

व्याख्या—भरतक्षेत्रे बाह्यो विष्कम्भः पञ्चषष्टिः सहस्राणि चत्वारि शतानि षट्चत्वारिंशदधिकानि योजनानाम्, अंशाश्च त्रयोदश। तथाहि—ध्रुवराशिः १३८७४५६५ एकेन गुण्यते, एकेन च गुणितं तदेव भवति १३८७४५६५, ततो द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धं यथोक्तं भरतक्षेत्रे बहिर्विष्कम्भमानम् ६५४४६ $\frac{13}{212}$॥ ३०॥

सम्प्रति हैमवते वहिर्विष्कम्भमानमाह—

चुलसीया सत्त सया, एगठि सहस्स दोन्नि लक्खा य ।
अंसा वि य बावन्नं, हेमवए वाहिविक्खंभो ॥ ३१ ॥

व्याख्या—हैमवते क्षेत्रे वहिर्विष्कम्भो द्वे लक्षे एकषष्टिः सहस्राणि सप्त शतानि चतुरशीत्यधिकानि योजनानाम्, अंशाश्च द्विपञ्चाशत् । तथाहि—ध्रुवराशिः १३८७४५६५ चतुर्भिर्गुण्यते, जातः पञ्चकः पञ्चकः चतुष्कः नवकः अष्टकः द्विकः षट्कः शून्यं ५५४९८२६०, एतेषां द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धं यथोक्तं हैमवते वहिर्विष्कम्भपरिमाणम् २६१७८४$\frac{५२}{२१२}$ ॥ ३१ ॥

सम्प्रति हरिवर्षे वहिर्विष्कम्भमानमाह—

सयमेगं छत्तीसं, सीयाल सहस्स दस य लक्खाइं ।
अठहिया दोन्नि सया, भागा हरिवासविक्खंभो ॥ ३२ ॥

व्याख्या—हरिवर्षे वहिर्विष्कम्भो दश लक्षाः सप्तचत्वारिंशत्सहस्राणि शतमेकं षट्त्रिंशदधिकं योजनानाम्, अंशानां च द्वे शते अष्टोत्तरे । तथाहि—ध्रुवराशिः १३८७४५६५ षोडशभिर्गुण्यते जातः द्विकः द्विकः एककः नवकः नवकः त्रिकः शून्यं चतुष्कः शून्यं २२१९९३०४०, एतेषां द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धं यथोक्तं हरिवर्षे वहिर्विष्कम्भपरिमाणम् १०४७१३६$\frac{२०८}{२१२}$ । यदेव

भरतहैमवतहरिवर्षेषु बहिर्विष्कम्भपरिमाणमुक्तं तदेव क्रमेणैरावतहैरण्यवतरम्यकेषु बहिर्विष्कम्भपरिमाणमवसातव्यम् ॥ ३२ ॥

सम्प्रति महाविदेहक्षेत्रे बहिर्विष्कम्भमानमाह—

सीयाला पंच सया, अडसीइ सहस्स लक्ख ईयाला ।
छन्नउयं अंससयं, विदेहविक्खंभु बाहिरउं ॥ ३३ ॥

व्याख्या—विदेहक्षेत्रे बाह्यो विष्कम्भ एकचत्वारिंशल्लक्षा अष्टाशीतिः सहस्राणि पञ्च शतानि सप्तचत्वारिंशदधिकानि योजनानाम्, अंशानां च शतं षण्णवत्यधिकम् । तथाहि—ध्रुवराशिः १३०७४५६५ चतुःषष्ट्या गुण्यते, जातः अष्टकः अष्टकः सप्तकः नवकः सप्तकः द्विकः एककः षट्कः शून्यं ८८७९७२१६०, एतेषां द्वाभ्यां द्वादशोत्तराभ्यां शताभ्यां भागो ह्रियते, लब्धं यथोक्तं महाविदेहक्षेत्रे बहिर्विष्कम्भमानं ४१८८५४७$\frac{१९६}{२१२}$ ॥ ३३ ॥

अधुना हिमवदादिगिरिविष्कम्भानयनार्थमाह—

वासविहूणं खित्तं, दुसहस्सूणं तु पुक्खरद्धम्मि ।
जावंतावेहि गुणं, चुलसीइहियम्मि गिरिवासो ॥ ३४ ॥

व्याख्या—पुष्करवरद्वीपार्धे वर्षविहीनं यत्क्षेत्रं क्षेत्रपरिमाणं तत् द्विसहस्रोनमिषुकारपर्वतद्वयगतसह-

स्त्रद्विकहीनं क्रियते । ततो यावत्तावत्संज्ञकैरेककचतुष्कषोडशकलक्षणैर्गुण्यते, गुणितं कृत्वा चतुरशीत्या ह्रियते, चतुरशीतिहृते च यल्लभ्यते स हिमवदादीनां गिरीणां व्यासो विष्कम्भपरिमाणम् । इह हिमवति एको गुणकारः, चत्वारो महाहिमवति, षोडश निषधपर्वते, षोडश नीलपर्वते, चत्वारो रुक्मिणि, शिखरिण्येकः ॥ ३४ ॥

तत्र प्रथमतो हिमवति विष्कम्भपरिमाणमाह—

दसहिय बायाल सया, चोयाल कला य चुल्लहिमवंते ।

व्याख्या—पुष्करवरद्वीपार्धे क्षुल्लहिमवति विष्कम्भपरिमाणं दशाधिकानि द्विचत्वारिंशद्योजनशतानि चतुश्चत्वारिंशच्च कलाश्चतुरशीतिभागरूपा योजनस्य । तथाहि—वर्षविहीनं क्षेत्रपरिमाणं तिस्रो लक्षाः पञ्चपञ्चाशत्सहस्राणि षट् शतानि चतुरशीत्यधिकानि ३५५६८४, एतत् इषुकारगतेन सहस्रद्वयेन हीनं क्रियते, जातं ( जातानि ) तिस्रो (त्रीणि) लक्षाणि त्रिपञ्चाशत्सहस्राणि षट् शतानि चतुरशीत्यधिकानि ३५३६८४, एष वर्षधरपर्वतानां विष्कम्भानयने ध्रुवराशिरवसातव्यः । तत एष (एकेन गुण्यते), एकेन च गुणितं तदेव भवति, ततश्चतुरशीत्या भागो ह्रियते, लब्धं यथोक्तं हिमवति विष्कम्भपरिमाणम् ४२१० $\frac{४४}{८४}$ ॥

सम्प्रति महाहिमवति विष्कम्भमाह—

बीए कलऽड सोलस, सहस्स बायाल अड सया ॥ ३५ ॥

व्याख्या—द्वितीये महाहिमवति पर्वते विष्कम्भपरिमाणं षोडश सहस्राणि अष्टौ शतानि द्विचत्वा-

रिंशदधिकानि योजनानां कलाश्चाष्टौ । तथाहि—ध्रुवराशिः २५३६७४ चतुर्भिर्गुण्यते, जात एककः चतुष्कः एककः चतुष्कः सप्तकः त्रिकः षट्कः १४१४७३६, एतेषां चतुरशीत्या भागे हृते लब्धं यथोक्तं महाहिमवतो विष्कम्भमानम् १६७४२ $\frac{८}{८४}$ ॥ ३५ ॥

सम्प्रति निषधमानमाह—

सत्तट्ठि सहस्साइं, तिन्नेव सया हवंति अट्ठट्ठा ।

बत्तीस कला निसढे, विक्खंभो पुक्खरद्धम्मि ॥ ३६ ॥

व्याख्या—पुष्करार्धे पुष्करवरद्वीपार्धे निषधे वर्षधरपर्वते विष्कम्भः सप्तषष्टिः सहस्राणि त्रीणि शतानि अष्टषष्ट्यधिकानि योजनानां, कलाश्चतुरशीतिभागरूपा द्वात्रिंशत् । तथाहि—ध्रुवराशिः २५३६७४ षोरुशभिर्गुण्यते, जातः पञ्चकः षट्कः पञ्चकः अष्टकः नवकः चतुष्कः चतुष्कः ५६५८९४४, एतेषां चतुरशीत्या भागे हृते लब्धं यथोक्तं निषधे विष्कम्भपरिमाणम् ६७३६८ $\frac{३२}{८४}$ । यथा च हिमवन्महाहिमवन्निषधानां विस्तारपरिमाणमुक्तं तथा क्रमेण शिखरिरुक्मिनीलपर्वतानामपि विस्तारपरिमाणमवसेयम् ॥ ३६ ॥

सम्प्रति प्रकारान्तरेण पुष्करवरद्वीपार्धे हिमवदादीनां विस्तारपरिज्ञानोपायमाह—

अहवा धायइदीवे, जो विक्खंभो उ होइ उ नगाणं ।

सो दुगुणो नायव्वो, पुक्खरद्धे नगाणं तु ॥ ३७ ॥

व्याख्या—अथवेति प्रकारान्तरताद्योतने धातकीखण्डद्वीपे यो नगानां हिमवदादीनां वर्षधरपर्वतानां विष्कम्भो भवति स द्विगुणः सन् पुष्करवरद्वीपार्धे नगानां हिमवदादीनां क्रमेण विष्कम्भो ज्ञातव्यः। तथाहि—धातकीखण्डे हिमवति शिखरिणि च प्रत्येकं विष्कम्भ एकविंशतिर्योजनशतानि पञ्चोत्तराणि द्वाविंशतिश्चतुरशीतिभागा योजनस्य २१०५$\frac{२२}{८४}$ पुष्करवरद्वीपार्धे द्विचत्वारिंशद्योजनशतानि दशोत्तराणि चतुश्चत्वारिंशच्चतुरशीतिभागा योजनस्य ४२१०$\frac{४४}{८४}$। धातकीखण्डे महाहिमवति रुक्मिणि च प्रत्येकं विष्कम्भश्चतुरशीतिर्योजनशतानि एकविंशत्यधिकानि चत्वारश्चतुरशीतिभागा योजनस्य ८४२१$\frac{४}{८४}$ पुष्करवरद्वीपार्धे षोडश योजनसहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि अष्टौ च चतुरशीतिभागा योजनस्य १६८४२$\frac{८}{८४}$। तथा धातकीखण्डे निषधे नीले च प्रत्येकं विष्कम्भस्त्रयस्त्रिंशत्सहस्राणि षट् शतानि चतुरशीत्यधिकानि योजनानां षोडश च चतुरशीतिभागा योजनस्य ३३६८४$\frac{१६}{८४}$ पुष्करवरद्वीपार्धे सप्तषष्टिः सहस्राणि त्रीणि शतानि अष्टषष्ट्यधिकानि योजनानां द्वात्रिंशच्च चतुरशीतिभागा योजनस्य ६७३६८$\frac{३२}{८४}$ ॥ ३७ ॥

सम्प्रति वर्षधरवक्षस्कारादीनां विस्तारोच्छ्रयपरिमाणमाह—

वासहरा वक्खारा, दहनइकुंडा वणा य सीयाए।
दीवे दीवे दुगुणा, वित्थरओ उस्सए तुल्ला ॥ ३८ ॥

व्
६॥

व्याख्या—वर्षधरा हिमवदादयो, वक्षस्काराश्चित्रादयो विजयाद्यन्तर्वर्तिनः पर्वता, विद्युत्प्रभादयश्च गजदन्ताकृतयो, ह्रदाः पद्मह्रदादयो, नद्यो गङ्गानद्यादयः, कुण्डानि गङ्गाप्रपातकुण्डादीनि, वनानि च शीतायाः, उपलक्षणमेतत्, शीतोदायाश्च समीपे यानि वनानि तान्यपि द्वीपे द्वीपे विस्तारमधिकृत्य पूर्वस्मात् पूर्वस्मात् द्विगुणानि वेदितव्यानि । उच्छ्रये च चिन्त्यमाने पुनः सर्वाण्यप्येतानि तुल्यानि । तथाहि—जम्बूद्वीपे हिमवति शिखरिणि च प्रत्येकं विष्कम्भो दश योजनशतानि द्विपञ्चाशदधिकानि द्वादश चैकोनविंशतिभागा योजनस्य१०५२$\frac{१२}{१९}$ धातकीखण्डे एकविंशतिर्योजनशतानि पञ्चोत्तराणि पञ्च चैकोनविंशतिभागा योजनस्य २१०५$\frac{५}{१९}$ पुष्करवरद्वीपार्धे द्विचत्वारिंशद्योजनशतानि दशोत्तराणि दश चैकोनविंशतिभागा योजनस्य ४२१०$\frac{१०}{१९}$ । उच्चत्वं सर्वत्रापि योजनशतम् १०० । तथा जम्बूद्वीपे महाहिमवति रुक्मिणि च प्रत्येकविष्कम्भो द्विचत्वारिंशद्योजनशतानि दशोत्तराणि दश चैकोनविंशतिभागा योजनस्य ४२१०$\frac{१०}{१९}$ धातकीखण्डे चतुरशीतिर्योजनशतानि एकविंशत्यधिकानि एकश्चैकोनविंशतिभागो योजनस्य ८४२१$\frac{१}{१९}$ पुष्करार्धे पूर्वार्धेऽपरार्धे च षोडश योजनसहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि द्वौ चैकोनविंशतिभागौ योजनस्य १६८४२$\frac{२}{१९}$ । उच्चत्वं पुनः सर्वत्रापि द्वे योजनशते २०० । तथा जम्बूद्वीपे निषधे नीले च प्रत्येकं विष्कम्भः षोडश योजनसहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि द्वौ चैकोनविंशतिभागौ योजनस्य १६८४२$\frac{२}{१९}$ । धातकीखण्डे पूर्वार्धेऽपरार्धे च त्रयस्त्रिंशद्योजनसहस्राणि षट् शतानि चतुरशीत्यधिकानि चत्वारश्चैकोनविंशतिभागा योजनस्य ३३६८४$\frac{४}{१९}$ । पुष्कर-

वरद्वीपार्धे पूर्वार्धेऽपरार्धे च सप्तषष्टिर्योजनानां सहस्राणि त्रीणि शतानि अष्टषष्ट्यधिकानि अष्टौ चैकोनविंशतिभागा योजनस्य ६७३६८$\frac{८}{१९}$। उच्चत्वं सर्वत्रापि चत्वारि योजनशतानि ४००। तथा जम्बूद्वीपे चित्रादीनां वक्षस्कारपर्वतानां प्रत्येकं विष्कम्भः पञ्च योजनशतानि ५००। धातकीखण्डे पूर्वार्धेऽपरार्धे च योजनसहस्रं १०००। पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च द्वे योजनसहस्रे २०००। उच्चत्वं सर्वत्रापि वर्षधरप्रत्यासत्तौ चत्वारि योजनशतानि ४००। शीताशीतोदासमीपे पञ्च योजनशतानि ५००। जम्बूद्वीपे विद्युत्प्रभादीनां गजदन्ताकृतीनां पर्वतानां वर्षधरसमीपे विष्कम्भः पञ्च योजनशतानि ५००। धातकीखण्डे पूर्वार्धेऽपरार्धे च योजनसहस्रं १०००। पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च द्वे योजनसहस्रे २०००। सर्वत्रापि मन्दरप्रत्यासत्तौ अङ्गुलासङ्ख्येयभागः, उच्चत्वं पुनः सर्वत्र वर्षधरसमीपे चत्वारि योजनशतानि ४००, मेरुसमीपे पञ्च योजनशतानि ५००। तथा जम्बूद्वीपे पद्महृदस्य पुण्डरीकहृदस्य च प्रत्येकं विष्कम्भः पञ्च योजनशतानि ५००, आयामो योजनसहस्रं १०००। धातकीखण्डे पूर्वार्धेऽपरार्धे च विष्कम्भो योजनसहस्रं १०००, आयामो द्वे योजनसहस्रे २०००। पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च विष्कम्भो द्वे योजनसहस्रे २०००, आयामश्चत्वारि योजनसहस्राणि ४०००। तथा जम्बूद्वीपे महापद्महृदस्य महापुण्डरीकहृदस्य च प्रत्येकं विष्कम्भो योजनसहस्रं १०००, आयामो द्वे योजनसहस्रे २०००। धातकीखण्डे पूर्वार्धेऽपरार्धे च विष्कम्भो द्वे योजनसहस्रे २०००, आयामश्चत्वारि योजनसहस्राणि ४०००। पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च विष्कम्भश्चत्वारि योजनसहस्राणि ४०००, आयामोऽष्टौ योजनसह-

स्राणि ८००० । तथा जम्बूद्वीपे तिगिञ्छिह्रदस्य केसरिह्रदस्य च प्रत्येकं विष्कम्भो द्वे योजनसहस्रे २०००, आयामश्चत्वारि योजनसहस्राणि ४००० । धातकीखण्डे पूर्वार्धेऽपरार्धे च विष्कम्भश्चत्वारि योजनसहस्राणि ४०००, आयामोऽष्टौ योजनसहस्राणि ८००० । पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च विष्कम्भोऽष्टौ योजनसहस्राणि ८०००, आयामः षोडश योजनसहस्राणि १६००० । तथा जम्बूद्वीपे देवकुरुषूत्तरकुरुषु च ह्रदानां विष्कम्भः पञ्च योजनशतानि ५००, आयामो योजनसहस्रं १००० । धातकीखण्डे पूर्वार्धेऽपरार्धे च तेषां विष्कम्भो योजनसहस्रं १०००, आयामो द्वे योजनसहस्रे २००० । पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च विष्कम्भो द्वे योजनसहस्रे २०००, आयामश्चत्वारि योजनसहस्राणि ४००० । तथा जम्बूद्वीपे सर्वासां गङ्गासिन्धुनदीनां रक्तारक्तवतीनदीनां च प्रवहे विष्कम्भः षड् योजनानि सक्रोशानि ६ क्रो० १, उण्डत्वं क्रोशार्धमेकं, समुद्रप्रवेशे विष्कम्भो द्वाषष्टिर्योजनानि द्वे च गव्यूते यो० ६२ ग० २, उण्डत्वं योजनमेकमेकं च गव्यूतं यो० १ क्रो० १ । धातकीखण्डे पूर्वार्धेऽपरार्धे च प्रवहे विष्कम्भो द्वादश योजनानि द्वौ च क्रोशौ यो० १२ क्रो० २, उण्डत्वमेकं क्रोशं १, समुद्रप्रवेशे विष्कम्भः पञ्चविंशं योजनशतं १२५, उण्डत्वं द्वे योजने द्वे च गव्यूते यो० २ क्रो० २ । पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च प्रवहे विष्कम्भः पञ्चविंशतिर्योजनानि २५, उण्डत्वं द्वौ क्रोशौ २, समुद्रप्रवेशे विष्कम्भो द्वे योजनशते पञ्चाशदधिके २५०, उण्डत्वं पञ्च योजनानि ५ । तथा जम्बूद्वीपे रोहितांशारोहितासुवर्णकूलारूप्यकूलानां विजयान्तर्वर्तिनीनां द्वादशानां गाहावत्यादीनां नदीनां प्रवहे विष्कम्भो द्वादश

योजनानि द्वौ च क्रोशौ यो० १२ क्रो० २, उण्डत्वं क्रोश एकः १, समुद्रप्रवेशे विष्कम्भः पञ्चविंशं योजनशतं १२५, उण्डत्वं द्वे योजने द्वौ च क्रोशौ यो० २ क्रो० २ । धातकीखण्डे पूर्वार्धेऽपरार्धे च प्रवहे विष्कम्भः पञ्चविंशतिर्योजनानि २५, उण्डत्वं द्वौ क्रोशौ २, समुद्रप्रवेशे विष्कम्भो द्वे योजनशते पञ्चाशदधिके २५०, उण्डत्वं पञ्च योजनानि ५ । पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च प्रवहे विष्कम्भः पञ्चाशद्योजनानि ५०, उण्डत्वं योजनमेकं १, समुद्रप्रवेशे विष्कम्भः पञ्च योजनशतानि ५००, उण्डत्वं दश योजनानि १० । तथा जम्बूद्वीपे हरिकान्ताहरिसलिलानारीकान्तानरकान्तानां प्रवहे विष्कम्भः पञ्चविंशतिर्योजनानि २५, उण्डत्वं द्वौ क्रोशौ २, समुद्रप्रवेशे विष्कम्भो द्वे योजनशते पञ्चाशदधिके २५०, उण्डत्वं पञ्च योजनानि ५ । धातकीखण्डे पूर्वार्धेऽपरार्धे च विष्कम्भः पञ्चाशद्योजनानि ५०, उण्डत्वं योजनमेकं १, समुद्रप्रवेशे विष्कम्भः पञ्च योजनशतानि ५००, उण्डत्वं दश योजनानि १० । पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च प्रवहे विष्कम्भो योजनशतं १००, उण्डत्वं द्वे योजने २, समुद्रप्रवेशे विष्कम्भो योजनसहस्रं १०००, उण्डत्वं विंशतिर्योजनानि २० । तथा जम्बूद्वीपे शीताशीतोदयोः प्रवहे विष्कम्भः पञ्चाशद्योजनानि ५०, उण्डत्वं योजनमेकं १, समुद्रप्रवेशे विष्कम्भः पञ्च योजनशतानि ५००, उण्डत्वं दश योजनानि १० । धातकीखण्डे पूर्वार्धेऽपरार्धे च प्रवहे विष्कम्भो योजनशतं १००, उण्डत्वं द्वे योजने २, समुद्रप्रवेशे विष्कम्भो योजनसहस्रमेकं १०००, उण्डत्वं विंशतिर्योजनानि २० । पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च प्रवहे विष्कम्भो द्वे योजनशते २००, उण्डत्वं

चत्वारि योजनानि ४, समुद्रप्रवेशे विष्कम्भो द्वे योजनसहस्रे २०००, उण्डत्वं चत्वारिंशद्योजनानि ४०। तथा जम्बूद्वीपे गङ्गासिन्धुरक्तारक्तवतीप्रपातकुण्डानामष्टषष्टिसङ्ख्यानां प्रत्येकं विष्कम्भ आयामश्च षष्टिर्योजनानि ६० । धातकीखण्डे पूर्वार्धेऽपरार्धे च विंशं योजनशतं १२० । पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च द्वे शते चत्वारिंशदधिके योजनानां २४० । तथा जम्बूद्वीपे रोहितांशारोहितासुवर्णकूलारूप्यकूलाप्रपातकुण्डानां विजयान्तर्वर्तिगाहावत्यादिनदीप्रपातकुण्डानां च प्रत्येकमायामो विष्कम्भश्च विंशं योजनशतं १२० । धातकीखण्डे पूर्वार्धेऽपरार्धे च द्वे योजनशते चत्वारिंशदधिके २४० । पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च चत्वारि योजनशतानि अशीत्यधिकानि ४८० । तथा जम्बूद्वीपे हरिकान्ताहरिसलिलानारीकान्तानरकान्ताप्रपातकुण्डानां प्रत्येकं विष्कम्भ आयामश्च द्वे योजनशते चत्वारिंशदधिके २४० । धातकीखण्डे पूर्वार्धेऽपरार्धे च चत्वारि योजनशतानि अशीत्यधिकानि ४८० । पुष्करवरद्वीपारार्धे पूर्वार्धेऽपरार्धे च नव योजनशतानि षष्ट्यधिकानि ९६० । तथा जम्बूद्वीपे शीताशीतोदाप्रपातकुण्डानां विष्कम्भ आयामश्च प्रत्येकं चत्वारि योजनशतान्यशीत्यधिकानि ४८० । धातकीखण्डे पूर्वार्धेऽपरार्धे च नव योजनशतानि षष्ट्यधिकानि ९६० । पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च एकोनविंशतियोजनशतानि विंशत्यधिकानि १९२० । उण्डत्वं सर्वत्र सर्वेषां दश योजनानि १० । तथा जम्बूद्वीपे गङ्गासिन्धुरक्तारक्तवतीप्रपातकुण्डगतानां द्वीपानामष्टषष्टिसङ्ख्यानामायामो विष्कम्भश्च प्रत्येकमष्टौ योजनानि ८ । धातकीखण्डे पूर्वार्धेऽपरार्धे च षोडश योजनानि १६ । पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च पृथग् द्वात्रिं-

शद् द्वात्रिंशद्योजनानि ३२। तथा जम्बूद्वीपे रोहितांशारोहितासुवर्णकूलारूप्यकूलाविजयान्तर्वर्तिगाहावत्यादिनदीप्रपातकुण्डगतानां द्वीपानां प्रत्येकमायामो विष्कम्भश्च षोडश योजनानि १६। धातकीखण्डे पूर्वार्धेऽपरार्धे च द्वात्रिंशद्योजनानि ३२। पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च चतुःषष्टिर्योजनानि ६४। तथा जम्बूद्वीपे हरिकान्ताहरिसलिलानारीकान्तानरकान्ताप्रपातकुण्डगतानां द्वीपानां प्रत्येकमायामो विष्कम्भश्च द्वात्रिंशद्योजनानि ३२। धातकीखण्डे पूर्वार्धेऽपरार्धे च चतुःषष्टिर्योजनानि ६४। पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे चाष्टाविंशतियोजनशतं १२८। तथा जम्बूद्वीपे शीताशीतोदाप्रपातकुण्डगतयोर्द्वीपयोः प्रत्येकमायामो विष्कम्भश्च चतुःषष्टिर्योजनानि ६४। धातकीखण्डे पूर्वार्धेऽपरार्धे चाष्टाविंशं योजनशतं १२८। पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च द्वे योजनानां शते षट्पञ्चाशदधिके २५६। सर्वत्र द्वीपानां जलादूर्ध्वमुच्छ्रयो द्वे गव्यूते २। तथा जम्बूद्वीपे निषधनीलवर्षधरसमीपे वनानां विष्कम्भो योजनस्य एक एकोनविंशतिभागः $\frac{1}{19}$। धातकीखण्डे पूर्वार्धेऽपरार्धे च द्वौ एकोनविंशतिभागौ $\frac{2}{19}$। पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च चत्वार एकोनविंशतिभागाः $\frac{4}{19}$। तथा जम्बूद्वीपे शीताशीतोदासमीपे तेषां विष्कम्भ एकोनत्रिंशद्योजनशतानि द्वाविंशत्यधिकानि २९२२। धातकीखण्डे पूर्वार्धेऽपरार्धे चाष्टापञ्चाशद्योजनशतानि चतुश्चत्वारिंशदधिकानि ५८४४। पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च एकादश योजनसहस्राणि षट् शतानि अष्टाशीत्यधिकानि ११६८८॥ ३८॥

साम्प्रतमिपुकारादिपर्वतगतमतिदेशमाह—

उसुयारजमगकंचण–चित्तविचित्ता य वट्टवेयड्ढा ।
दीवे दीवे तुल्ला, दुमेहला जे य वेयड्ढा ॥ ३९ ॥

व्याख्या—य इपुकारपर्वता ये चोत्तरकुरुषु यमकपर्वता ये च देवकुरूत्तरकुरुषु ह्रदप्रत्यासन्नाः काञ्चनगिरयो ये च देवकुरुषु चित्रविचित्राभिधाः पर्वता ये च वृत्तवैताढ्या ये च मेखलाद्वयकलिता भरतैरावतविजयगता वैताढ्या एते सर्वेऽपि द्वीपे द्वीपे तुल्याः । किमुक्तं भवति ? यदेवैषां जम्बूद्वीपे परिमाणमुक्तं तदेव धातकीखण्डे पुष्करवरद्वीपार्धेऽप्यवगन्तव्यमिति ॥ ३९ ॥

सम्प्रति समस्तमानुषक्षेत्रान्तर्वर्तिमन्दरवर्जशेषपर्वतानामुद्वेधप्रमाणमाह—

सव्वेऽवि पव्वयवरा, समयक्खित्तम्मि मंदरविहूणा ।
धरणियलं उगाढा, उस्सेहचउब्भयं भागं ॥ ४० ॥

व्याख्या—समयक्षेत्रे मनुष्यक्षेत्रे सर्वेऽपि मन्दरवर्जाः शेपा वैताढ्यादयः पर्वतवरा धरणितलमवगाढा भूमौ प्रविष्टाः स्वस्य स्वस्योत्सेधप्रमाणस्य चतुर्थं भागमिति ॥ ४० ॥

सम्प्रति कुरुविष्कम्भानयनाय करणमाह—

चउणउइसयं मेरुं, विदेहमज्झा विसोहइत्ता णं ।

सेसस्स य जं अद्धं, तं विक्खंभो कुरूणं तु ॥ ४१ ॥

व्याख्या—पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च प्रत्येकं मेरुर्भूतलप्रदेशे पृथुत्वेन चतुर्नवतियोजनशतानि, ततो मेरुविष्कम्भं चतुर्नवतियोजनशतानि विदेहमध्यात् विदेहमध्यविष्कम्भाच्चतुस्त्रिंशल्लक्षाश्चतुर्विंशतिसहस्राणि अष्टौ शतानि अष्टाविंशत्यधिकानि योजनानां, षोडश च द्वादशोत्तरद्विशतभागा योजनस्य ३४२४८२८ १६/२१२ इत्येवंपरिमाणाच्छोध्यते, शोधिते च सति यच्छेषमवतिष्ठते चतुस्त्रिंशल्लक्षाः पञ्चदश सहस्राणि चत्वारि शतानि अष्टाविंशत्यधिकानि योजनानां, षोडश च द्वादशोत्तरद्विशतभागा योजनस्य ३४१५४२८ १६/२१२ एतस्य शेषस्यार्धे यल्लब्धं सप्तदश लक्षाः सप्त सहस्राणि सप्त शतानि चतुर्दशाधिकानि योजनानामष्टौ च द्वादशोत्तरद्विशतभागा योजनस्य १७०७७१४ ८/२१२ स विष्कम्भः कुरूणां देवकुरूणामुत्तरकुरूणां च ज्ञातव्यः ॥ ४१ ॥

तथा चाह—

सत्तत्तरिसयाइं, चउदसअहियाइं सत्तरसलक्खा ।

होइ कुरुविक्खंभो, अठ य भागा य परिसेसा ॥ ४२ ॥

व्याख्या—सुगमा ॥ ४२ ॥

सम्प्रति नीलवर्षधरस्य यमकपर्वतयुगलस्य यदन्तरालमेकं, यानि च यमकपर्वतयुगलह्रदपञ्चकयोरन्तराणि, यच्च पञ्चमह्रदवक्षस्कारपर्वतयोरन्तरं, तेषां सप्तानामन्तराणां परिमाणानयनाय करणमाह—

ह्रया चउसहस्सा, जमगाण सहस्स सोह्य कुरूउ ।
सेसस्स सत्तभागं, अंतरमो जाण सव्वेसिं ॥ ४३ ॥

व्याख्या—ह्रदाः पञ्चापि प्रत्येकं चतुःसहस्राश्चतुर्योजनसहस्रप्रमाणाः, यमकपर्वतयोः सहस्रं, ततो ह्रदपञ्चकं यमकपर्वतपरिमाणमेकत्र मीलितं सत् यद्भवति तत् कुरुभ्यः कुरुविष्कम्भात् प्रागुक्ताच्छोधय, शोधिते च सति तस्मिन् शेषस्य सप्तभिर्भागो ह्रियते, यल्लभ्यते तज्जानीहि सर्वेषामन्तरम् ॥ ४३ ॥

तदेवाह—

चत्तालीस सहस्सा, दो लक्खा नव सया य अउणट्ठा ।
एगो य सत्तभागो, ह्रयनगाणंतरं भणियं ॥ ४४ ॥

व्याख्या—देवकुरुषूत्तरकुरुषु च प्रत्येकं ह्रदानां नगानां च परस्परमन्तरं भणितं तीर्थंकरगणधरैः द्वे लक्षे चत्वारिंशत्सहस्राणि नव शतानि एकोनषष्ठ्यधिकानि योजनानामेकश्च सप्तभागो योजनस्य ।

तथाहि—कुरूणां विष्कम्भः सप्तदश लक्षाः सप्त सहस्राणि सप्त शतानि चतुर्दशोत्तराणि योजनानाम्, अंशास्त्यक्ताः १७०७७१४, यमकदैर्घ्यं योजनसहस्रं १०००, ह्रदपञ्चकदैर्घ्यं विंशतिर्योजनसहस्राणि २०००० मिलितान्येकविंशतियोजनसहस्राणि २१०००, एतान्यनन्तरोक्तात् कुरुविष्कम्भपरिमाणाच्छोध्यन्ते, शोधितेषु च तेषु शेषमवतिष्ठते षोडश लक्षाः षडशीतिः सहस्राणि सप्त शतानि चतुर्दशोत्तराणि १६८६७१४, एतेषां सप्तभिर्भागे हृते लब्धं यथोक्तं ह्रदनगानां परस्परमन्तरपरिमाणं २४०९९९ ३/७ । एतेन किमुक्तं भवति ? नीलवर्षधरयमकपर्वतद्वयह्रदपञ्चकवक्षस्काराणां परस्परमन्तरं तुल्यपरिमाणमिति ॥ ४४ ॥

सम्प्रति भद्रशालवनदैर्घ्यमाह—

अडवन्ना सत्त सया, पन्नरस सहस्स दुन्नि लक्खा य ।
वासो उ भद्दसाले, पुव्वेणेमेव अवरेण ॥ ४५ ॥

व्याख्या—पुष्करवरद्वीपार्धे पूर्वार्धेऽपरार्धे च प्रत्येकं मेरोः पूर्वस्यां दिशि भद्रशालवनस्य व्यासो दैर्घ्यं द्वे लक्षे पञ्चदश सहस्राणि सप्त शतानि अष्टापञ्चाशदधिकानि २१५७५८ । एवमेव यथोक्तपरिमाणमेव पूर्वार्धेऽपरार्धे च प्रत्येकं मेरोरपरेणापरस्यां दिशि भद्रशालवनस्य दैर्घ्यमवसेयम् २१५७५८॥४५॥

सम्प्रति कुरुजीवानयनाय करणमाह—

तस्सायामा दुगुणा, मंदरसहिया दुसेलविक्खंभं ।
सोहित्ता जं सेसं, कुरूण जीवा उ जाणाहि ॥ ४६ ॥

व्याख्या—तस्य भद्रशालवनस्यायामात् द्विगुणात् मन्दरपृथुत्वेन सहितात् द्विशैलविष्कम्भं गजदन्ताकृतिपर्वतद्वयविस्तारं शोधयित्वा यच्छेषमुपलभ्यते तां कुरूणां जीवां जीवापरिमाणं जानीहि ॥ ४६ ॥

तामेवाह—

चत्तारि लक्ख छत्तीस, सहस्सा नव सया य सोलहिया ।

व्याख्या—चत्वारि लक्षाणि षट्त्रिंशत्सहस्राणि नव शतानि षोडशाधिकानि ४३६९१६, एषा कुरूणां जीवा । तथाहि—भद्रशालवनदैर्घ्यपरिमाणं द्वे लक्षे पञ्चदश सहस्राणि सप्त शतानि अष्टापञ्चाशदधिकानि २१५७५८, एतत् द्विगुणीक्रियते, जाताश्चतस्रो लक्षा एकत्रिंशत्सहस्राणि पञ्च शतानि षोडशाधिकानि ४३१५१६, एतत् मेरुपृथुत्वपरिमाणेन चतुर्नवतिशतरूपेण ९४०० सहितं क्रियते, जाताश्चतस्रो लक्षाश्चत्वारिंशत्सहस्राणि नव शतानि षोडशाधिकानि ४४०९१६, एतस्माच्छैलविष्कम्भमानं चतुःसहस्ररूपं ४००० शोध्यते, ततः शेषं यथोक्तं कुरुजीवाप्रमाणं भवति ४३६९१६ ॥

सम्प्रति धनुःपृष्ठानयनाय करणमाह—

दोण्ह गिरीणायामो, संखित्तो तं धणु कुरूणं ॥ ४७ ॥

व्याख्या—द्वयोर्गजदन्ताकृत्योः पर्वतयोरायाम एकत्र संक्षिप्तो मीलितः सन् यावान् भवति तत् कुरूणां देवकुरूणामुत्तरकुरूणां च प्रत्येकं धनुः धनुःपृष्ठपरिमाणं जानीहि ॥ ४७ ॥

तत्र गिरीणामायामप्रमाणमाह—

सोमणसमालवंतो, दीहा वीसं भवे सयसहस्सा ।
तेयालीस सहस्सा, अउणावीसा य दुन्नि सया ॥ ४८ ॥

व्याख्या—सौमनसो देवकुरूणां पूर्वदिशि, माल्यवानुत्तरकुरूणां पूर्वदिशि, एतौ द्वावपि पर्वतौ दीर्घौ पृथग्विंशतिशतसहस्राणि त्रिचत्वारिंशत्सहस्राणि द्वे शते एकोनविंशत्यधिके २०४३२१९ ॥ ४८ ॥

तथा—

सोलसहिय सयमेगं, छवीसहस्स सोलस य लक्खा ।
विज्जुप्पभो नगो गं-धमायणो चेव दीहाउ ॥ ४९ ॥

व्याख्या—विद्युत्प्रभो नगो देवकुरूणां पश्चिमदिशि, गन्धमादन उत्तरकुरूणां पश्चिमदिशि, एतौ

द्वावपि पर्वतौ पृथगायामेन षोडश लक्षाः षड्विंशतिः सहस्राणि शतमेकं षोडशाधिकम् १६२६११६ इदं तु प्रमाणं पूर्वमेरौ द्रष्टव्यं, पश्चिममेरौ तु यदनयोर्दैर्घ्यं मानमुक्तं तत्सौमनसमाल्यवतोरवसेयं, तयोस्तत्र संकीर्णक्षेत्रव्यवस्थितत्वात्, यच्च सौमनसमाल्यवतोर्दैर्घ्यमुक्तं तदनयोरवसातव्यम् अनयोस्तत्र पृथुल-क्षेत्रव्यवस्थितत्वात् ॥ ४९ ॥

तदेवमुक्तं गिरीणामायामपरिमाणं, सम्प्रति धनुःपृष्ठपरिमाणमाह—

अउणत्तरी सहस्सा, लक्खा छत्तीस तिन्नि य सयाइं ।
पणतीस जोयणाणि य, धणुपुठाइ कुरूणं तु ॥ ५० ॥

व्याख्या—कुरूणां देवकुरूणामुत्तरकुरूणां च धनुःपृष्ठे एकैकं धनुःपृष्ठं परिमाणतो लक्षाः षट्त्रिंशत् एकोनसप्ततिः सहस्राणि त्रीणि शतानि पञ्चत्रिंशद्योजनानि। तथाहि—विद्युत्प्रभस्यायामः १६२६११६, सौमनसस्य २०४३२१९, उभयमीलने भवति यथोक्तं देवकुरूणां धनुःपृष्ठपरिमाणं ३६६९३३५। एव-मुत्तरकुरुषु गन्धमादनमाल्यवदायामपरिमाणमीलने धनुःपृष्ठपरिमाणमुक्तरूपं परिभावनीयम् ॥ ५० ॥

सम्प्रति भद्रशालवने पृथुत्वानयनाय करणमाह—

पुव्वेण मंदराणं, जो आयामो उ भद्दसालवणे ।
सो अरूसीइ विहत्तो, विक्खंभो दाहिणुत्तरउ ॥ ५१ ॥

व्याख्या—मन्दरयोः पूर्वार्धपश्चिमार्धगतयोः प्रत्येकं यः पूर्वेण पूर्वस्यां दिशि, उपलक्षणमेतत्, पश्चिमायां वा दिशि भद्रशालवनस्य य आयाम आयामपरिमाणं सोऽष्टाशीत्या विभक्तः सन् यावान् भवति तावान् विष्कम्भो भद्रशालवनस्य दक्षिणत उत्तरतश्च प्रत्येकमवसेयः ॥ ५१ ॥

तमेवाह—

इगवन्ना चउवीसं, सया उ सयरि अरूसीइ भागा य ।

जम्मुत्तरवित्थारो,

व्याख्या—याम्योदीच्ययोर्भागयोर्दक्षिणभागे उत्तरभागे चेत्यर्थः, भद्रशालवनस्य प्रत्येकं विस्तारो योजनानां चतुर्विंशतिशतानि एकपञ्चाशदधिकानि सप्ततिश्चाष्टाशीतिभागा योजनस्य २४५१ ७०/८८ । तथाहि—भद्रशालवनस्य पूर्वस्यामपरस्यां च दिशि दैर्घ्यं द्वे लक्षे पञ्चदश सहस्राणि सप्त शतानि अष्टापञ्चाशदधिकानि २१५७५८, एतेषामष्टाशीत्या भागे हृते लब्धं यथोक्तं दक्षिणभागे उत्तरभागे वा प्रत्येकं विस्तारपरिमाणमिति ॥

सम्प्रति भद्रशालवन एव दैर्घ्यानयनाय करणमाह—

अरूसीइ गुणो उ विवरीउ ॥ ५२ ॥

व्याख्या—स एवानन्तरोक्तो विष्कम्भोऽष्टाशीत्या गुणितः सन् विपरीत आयामः पूर्वस्यामपरस्यां

च दिशि प्रत्येकं भवति । तथाहि—चतुर्विंशतिशतानि एकपञ्चाशदधिकानि अष्टाशीत्या गुण्यन्ते, जातं द्वे लक्षे पञ्चदश सहस्राणि षट् शतानि अष्टाशीत्यधिकानि २१५६८८ । येऽप्युपरि सप्ततिरष्टाशीतिभागास्तेऽप्यष्टाशीत्या गुण्यन्ते, जातानि षष्ट्यधिकानि एकषष्टिशतानि ६१६०, एतेषामष्टाशीत्या भागे हृते लब्धानि सप्ततियोजनानि, तानि पूर्वराशौ प्रक्षिप्यन्ते इति भवति यथोक्तमायामप्रमाणमिति ॥ ५२ ॥

सम्प्रति पूर्वार्धेऽपरार्धे च प्रत्येकमुत्तरकुरुषु वृक्षवक्तव्यतामाह—

पउमे य महापउमे, रुक्खा उत्तरकुरूसु जंबुसमा ।
एएसु वसंति सुरा, पउमे तह पुंडरीए य ॥ ५३ ॥

व्याख्या—पूर्वार्धे उत्तरकुरुषु नीलवगिरिसमीपे पद्मो नाम वृक्षः पश्चिमार्धे उत्तरकुरुषु नीलवगिरिसमीपे महापद्म इति नाम वृक्षः, तौ च द्वावपि वृक्षौ प्रागुक्तजम्बूवृक्षसमौ वेदितव्यौ । तयोश्च वृक्षयोरधिपती यथाक्रमं पद्मः पुण्डरीकश्च, पद्मवृक्षस्याधिपतिः पद्मः महापद्मवृक्षस्याधिपतिः पुण्डरीक इति ॥५३॥

सम्प्रति मेरुवक्तव्यतामतिदेशेनाह—

धायइसंडयमेरूहिं, समाणा दोऽवि मेरुणो नवरिं ।
आयामो विक्खंभो उ, दुगुणिउं भद्दसालवणे ॥ ५४ ॥

व्याख्या—पुष्करवरद्वीपार्धे द्वावपि पूर्वार्धापरार्धगतौ मेरू धातकीखण्डद्वीपगतमेरुभ्यां समानौ

१ देवकुरुवृक्षवक्तव्यताऽत्र नोक्ता, तत्कारणं न ज्ञायते.

प्रतिपत्तव्यौ । किमुक्तं भवति ? पुष्करवरद्वीपार्धगतयोरपि मेर्वोर्धातकीखण्डगतमेर्वोरिव भूप्रवेशो योजनसहस्रं १०००, उच्चत्वेन चतुरशीतियोजनसहस्राणि ८४०००, कन्दे विष्कम्भः पञ्चनवतियोजनशतानि ९५००, भूतलविष्कम्भः चतुर्नवतियोजनशतानि ९४००, शिरसि विष्कम्भो योजनसहस्रं १०००, नवरमायामो विष्कम्भश्च भद्रशालवने धातकीखण्डद्वीपगतभद्रशालवनापेक्षया द्विगुणः प्रतिपत्तव्यः । तथाहि—धातकीखण्डे भद्रशालवनस्यायामो लक्षमेकं सप्त सहस्राणि अष्टौ शतानि एकोनाशीत्यधिकानि १०७८७९, विष्कम्भो द्वादश योजनशतानि पञ्चविंशत्यधिकानि एकोनाशीतिश्च अष्टाशीतिभागा योजनस्य १२२५ $\frac{७९}{८८}$ पुष्करवरद्वीपार्धे भद्रशालवनस्यायामो द्वे लक्षे पञ्चदश सहस्राणि सप्त शतानि अष्टापञ्चाशदधिकानि २१५७५८, विष्कम्भश्चतुर्विंशतिशतानि एकपञ्चाशदधिकानि योजनानां सप्ततिश्चाष्टाशीतिभागा योजनस्य २४५१ $\frac{७०}{८८}$ ॥ ५४ ॥

सम्प्रति विजयपृथुत्वानयाय करणमाह—

सीयासीउंयवणा, तेवीस सहस्स ति सय छस्सयरा ।
सलिला तिन्नि सहस्सा, वक्खारा सोलस सहस्सा ॥ ५५ ॥
मेरु चउणउइ सए, मेरुस्सुभओ वणस्सिमं माणं ।
सोलसहिय पंच सया, इगतीस सहस्स लक्ख चऊ ॥ ५६ ॥

व्याख्या—शीताशीतोदयोर्दक्षिणभागे उत्तरभागे वा शीताशीतोदावने एकत्र मीलिते त्रयोविंशतिसहस्राणि त्रीणि शतानि षट्सप्तत्यधिकानि । तथाहि—शीतायाः समुद्रप्रवेशे शीतानदीसमीपे वनपृथुत्वं योजनानामेकादश सहस्राणि षट् शतानि अष्टाशीत्यधिकानि ११६८८, शीतोदाया अपि मानुषोत्तरपर्वतस्याधः प्रवेशे शीतोदानदीसमीपे वनपृथुत्वमेतावत्परिमाणं ११६८८, तत उभयमीलने यथोक्तं वनपरिमाणं भवति २३३७६। तथा सलिलागाहावत्यादयो नद्यस्त्रीणि योजनसहस्राणि, तथाहि—शीताशीतोदयोर्दक्षिणभागे उत्तरभागे वा षट् नद्यः, एकैकस्याश्च नद्याः पृथुत्वं पञ्च योजनशतानि ५००, तेषां षड्भिर्गुणने त्रीणि सहस्राणि ३००० । तथा वक्षस्काराः षोडश सहस्राणि, यतः शीताशीतोदयोर्दक्षिणभागे उत्तरभागे वाऽष्टौ वक्षस्कारपर्वताः, एकैकस्य च पृथुत्वं द्वे द्वे योजनसहस्रे २०००, ततः सहस्रद्वयस्याष्टभिर्गुणने भवन्ति षोडश सहस्राणि १६००० । ( तथा ) मेरुश्चतुर्नवतियोजनशतानि ९४०० । मेरोरुभयोः पार्श्वयोर्भद्रशालवनस्य परिमाणमिदम्—चतस्रो लक्षा एकत्रिंशत्सहस्राणि पञ्च शतानि षोडशाधिकानि ४३१५१६ ॥ ५५–५६ ॥

ततः—

सव्वं पि इमं मिलियं, हवंति चत्तारि सयसहस्साइं ।
तेसीइं च सहस्सा, बाणउया दोन्नि उ सयाइं ॥ ५७ ॥

दीवस्स उ विक्खंभा, एयं सोहेउ जं भवे सेसं ।
सोलसविहत्तलद्धं, जाणसु विजयाण विक्खंभं ॥ ५८ ॥

व्याख्या—सर्वमपीदमनन्तरोक्तमेकत्र मीलितं भवति चत्वारि शतसहस्राणि त्र्यशीतिसहस्राणि द्वे शते द्विनवत्यधिके ४८३२९२, एतत् द्वीपस्य पुष्करवरद्वीपार्धस्य विष्कम्भात् अष्टयोजनलक्षपरिमाणात् ८००००० शोधयेत्, शोधिते च सति यच्छेषमवतिष्ठते तिस्रो लक्षाः षोडश सहस्राणि सप्त शतानि अष्टोत्तराणि ३१६७०८, तत् षोडशभिर्विभज्यते, विभक्ते च सति लब्धानि एकोनविंशतिसहस्राणि सप्त शतानि चतुर्नवत्यधिकानि चत्वारश्च षोडश भागा योजनस्य १९७९४ $\frac{४}{१६}$ एतावन्तं विष्कम्भं विजयानां प्रत्येकं जानीहि ॥ ५७–५८ ॥

एतदेवाह—

उणवीस सहस्साइं, सत्तेव सया हवंति चउणउया ।
भागा चउरो य भवे, विजयाणं होइ विक्खंभो ॥ ५९ ॥

व्याख्या—सुगमा ॥ ५९ ॥

सम्प्रति वक्षस्काराणां विष्कम्भप्रतिपादनार्थमाह—

अठ्ठहिया सत्त सया, सोलस साहस्सिया तिलक्खं च ।
विजया खित्तपमाणे, वणनइमेरूवणे वूढे ॥ ६० ॥

जायं चुलसीइ सह—स्सा सत्त लक्खा उ दीवड्ढे सोहे ।
सेसठ्ठहिए भागे, वक्खारगिरीण विक्खंभो ॥ ६१ ॥

व्याख्या—शीताशीतोदयोर्दक्षिणभागे उत्तरभागे वा षोडश विजयाः, तेषामिदं क्षेत्रपरिमाणम्—तिस्रो लक्षाः षोडश सहस्राणि सप्त शतानि अष्टोत्तराणि ३१६७०८, एतच्चैकस्य विजयस्य यदनन्तरं पृथुत्वपरिमाणं पूर्वमुक्तं, तस्य षोडशभिर्गुणने भावनीयम् । शीताशीतोदावनपरिमाणं २३३७६, नदीषट्कपरिमाणं ३०००, मेरुपृथुत्वपरिमाणं ९४००, भद्रशालवनपूर्वापरायाममानं ४३१५१६, एतेषामेकत्र मीलने जातं सप्त लक्षाः चतुरशीतिसहस्राणि ७८४०००, एतत् द्वीपात् पुष्करवरद्वीपार्धाच्छोधयेत्, शोधिते च सति जातं शेषं षोडश सहस्राणि १६०००, तेषामष्टभिर्भागे हृते लब्धे द्वे सहस्रे २०००, एतावान् वक्षस्कारगिरीणां प्रत्येकं विष्कम्भः ॥ ६०—६१ ॥

अन्तरनदीविष्कम्भमानमाह—

सत्ताणउइ सहस्सा, सत्त य लक्खा उ दीवउं सोहे ।
सेसस्स य छप्पाए, विक्खंभो अंतरनईणं ॥ ६२ ॥

व्याख्या–शीताशीतोदयोर्दक्षिणभागे उत्तरभागे वा षोडशानां विजयानां विष्कम्भपरिमाणं ३१६७०८, वनमुखद्वयविष्कम्भमानं २३३७६, वक्षस्कारपर्वताष्टकविष्कम्भमानं १६०००, मेरुपृथुत्वं ९४००, पूर्वापरभद्रशालवनायामः ४३१५१६, एतेषामेकत्र मीलने जातानि सप्त शतसहस्राणि सप्तनवतिसहस्राणि ७९७०००, एतत् द्वीपात् पुष्करवरद्वीपार्धात् ८००००० शोधयेत्, जातं शेषं त्रीणि सहस्राणि ३०००, एतेषां षड्भिर्भागे हृते लब्धानि पञ्च शतानि ५००, एतावान् अन्तरनदीनां प्रत्येकं विष्कम्भः ॥ ६२ ॥

सम्प्रति वनमुखविष्कम्भपरिमाणप्रतिपादनार्थमाह—

णवत्तरी सहस्सा, सत्त य लक्खा य छ सय चउवीसा ।
दीवाउ सोहेउं, सेसऽद्धं वणमुहं जाण ॥ ६३ ॥

व्याख्या—शीताशीतोदयोर्दक्षिणभागे उत्तरभागे वा षोडशानां विजयानां विष्कम्भपरिमाणं३१६७०८, षण्णामन्तरनदीनां ३०००, अष्टानां वक्षस्कारपर्वतानां १६०००, मेरोः ९४००, पूर्वापरभद्रशालवनायामः ४३१५१६, एतेषामेकत्र मीलने जातानि सप्त शतसहस्राणि षड्नवतिसहस्राणि षट् शतानि

चतुर्विंशत्यधिकानि ७७६६२४, एतत् द्वीपात् पुष्करवरद्वीपार्धविष्कम्भात् ८००००० शोधयेत्, शोधिते च सति यच्छेषमवतिष्ठते त्रयोविंशतिसहस्राणि त्रीणि शतानि षट्सप्तत्यधिकानि २३३७६, तस्यार्धमेकादश सहस्राणि षट् शतानि अष्टाशीत्यधिकानि ११६८८ वनमुखं वनमुखस्यैकैकस्य विष्कम्भपरिमाणं जानीहि ॥ ६३ ॥

सम्प्रति मेरुपृथुत्वं पूर्वापरभद्रशालवनायामं च मिलितमाह—

अडणठि सहस्साइं, चुलसीइ जोयणा तिलक्खं च ।
सोहित्तु पुक्खरद्धा, मेरुवणं होइ मंतं च ॥ ६४ ॥
चत्तालीस सहस्सा, चउरो लक्खा य नव सया सोला ।
पुक्खरवरदीवड्ढे, मेरुवणस्सेस आयामो ॥ ६५ ॥

व्याख्या–शीताशीतोदयोर्दक्षिणभागे उत्तरभागे वा पोरुशानां विजयानां विष्कम्भपरिमाणं ३१६७०८, वनमुखयोः २३३७६, षण्णामन्तरनदीनां ३०००, अष्टानां वक्षस्कारगिरीणां १६०००, एतेषामेकत्र मीलने जातानि त्रीणि शतसहस्राणि एकोनषष्टिः सहस्राणि चतुरशीत्यधिकानि ३५९०८४, एतत् पुष्करवरार्धात् पुष्करवरद्वीपार्धपरिमाणात् ८००००० शोधयेत्, शोधिते च सति मेरुवनं भवति मेरुसहितपूर्वापरभद्रशालवनायामपरिमाणं भवति, तच्चेदम्–चतस्रो लक्षाश्चत्वारिंशत्सहस्राणि नव शतानि

षोमशोत्तराणि ४४०ए१६, एष पुष्करवरद्वीपार्धे मेरुपृथुत्वसहितपूर्वापरजद्रशालवनस्यायामः ६४–६५ ॥

सम्प्रति चन्द्रादिवक्तव्यतामाह—

बावत्तरिं च चंदा, बावत्तरिमेव दिणयरा दित्ता ।
पुक्खरवरदीवड्ढे, चरंति एए पयासंता ॥ ६६ ॥

व्याख्या—पुष्करवरद्वीपार्धे द्विसप्ततिश्चन्द्राः ७२, द्विसप्ततिश्च दीप्ता दिनकरा आदित्याः ७२, एते च सर्वेऽपि चरन्ति पुष्करवरद्वीपार्धे प्रकाशयन्तः प्रकाशं कुर्वाणाः ॥ ६६ ॥

तथा—

तिन्नि सया बत्तीसा, छच्च सहस्सा महग्गहाणं तु ।
नक्खत्ताणं तु जवे, सोलाणि डुवे सहस्साणि ॥ ६७ ॥

व्याख्या—पुष्करवरद्वीपार्धे महाग्रहाणां षट् सहस्राणि त्रीणि शतानि षट्त्रिंशानि षट्त्रिंशदधिकानि जवन्ति ६३३६ । नक्षत्राणां तु पुष्करवरद्वीपार्धे जवन्ति द्वे सहस्रे षोमशोत्तरे २०१६ ॥ ६७ ॥

अमयाल सयसहस्सा, वावीसं खलु नवे सहस्साइं ।
दो य सय पुक्करध्धे, तारागणकोमिकोमीणं ॥ ६८ ॥

व्याख्या—पुष्करवरद्वीपार्धे तारागणकोटिकोटीनामष्टाचत्वारिंशत्शतसहस्राणि भवन्ति द्वाविंशतिसहस्राणि द्वे च शते ४८२२२ शून्यानि १६ ॥ ६८ ॥

सम्प्रत्येकस्य शशिनः परिवारभूतानां ग्रहादीनां परिमाणमाह—

अठासीइं च गहा, अठावीसं तु होंति नरकत्ता ।
एगससीपरिवारो, इत्तो ताराण वोछामि ॥ ६९ ॥

व्याख्या—एकस्य शशिनः परिवारो ग्रहा मङ्गलादयोऽष्टाशीतिसङ्ख्याः, नक्षत्राणि तु भवन्ति अष्टाविंशतिः अष्टाविंशतिसङ्ख्यानि । अत ऊर्ध्वं ताराणामेकस्य शशिनः परिवारभूतानां परिवारं वक्ष्ये ॥ ६९ ॥

प्रतिज्ञातमेव निर्वाहयति—

बवठि सहस्साइं, नव चेव सयाइं पंचसयरीइं ।
एगससीपरिवारो, तारागणकोडिकोमीणं ॥ ७० ॥

व्याख्या—एकस्य शशिनस्तारागणरूपः परिवारस्तारागणकोटिकोटीनां षट्षष्टिः सहस्राणि नव शतानि पञ्चसप्तत्यधिकानि ६६९७५ शून्यानि १४ ॥ ७० ॥

सम्प्रति जम्बूद्वीपादारभ्य सर्वद्वीपसमुद्रेषु चन्द्रसूर्यपरिमाणं प्रतिपिपादयिषुराह—

ससिरविणो इक्किक्का, दुगुणा दीवे चउग्गुणा लवणे ।
लावणिगा य तिगुणिया, ससिसूरा धायईसंडे ॥ ७१ ॥

व्याख्या—शशिरवी चन्द्रसूर्यौ एकैकौ द्विगुणौ सन्तौ द्वीपे जम्बूद्वीपे भवतः, एतदुक्तं भवति—द्वौ चन्द्रौ द्वौ सूर्यौ जम्बूद्वीपे स्तः । तथा तावेवैकैकौ चंद्रसूर्यौ चतुर्गुणौ लवणसमुद्रे भवतः चत्वारश्चन्द्राः चत्वारः सूर्या लवणसमुद्रे भवन्तीत्यर्थः । लावणिका लवणसमुद्रभवाः शशिसूरास्त्रिगुणिता धातकीखण्डे भवन्ति द्वादश चन्द्रा द्वादश सूर्या धातकीखण्डे भवन्तीत्यर्थः ॥ ७१ ॥

एतदेवाह—

दो चंदा इह दीवे, चत्तारि य सायरे लवणतोए ।
धायइसंडे दीवे, बारस चंदा य सूरा य ॥ ७२ ॥

व्याख्या—सुगमा ॥ ७२ ॥

सम्प्रति कालोदसमुद्रादिषु चन्द्रादित्यप्रमाणानयनाय करणमाह—

धायइसंरूप्पभिई, उद्दिठा तिगुणिया भवे चंदा ।
आइल्लचंदसहिया, अणंतराणंतरे खित्ते ॥ ७२ ॥

व्याख्या—धातकीखण्डः प्रभृतिरादिर्येषां ते धातकीखण्डप्रभृतयः तेषु धातकीखण्डप्रभृतिषु द्वीपेषु समुद्रेषु च ये उद्दिष्टाश्चन्द्रा द्वादशादयः, उपलक्षणमेतत् (तेन) सूर्या वा तैस्त्रिगुणितास्त्रिगुणीकृताः सन्तः 'आइल्लचंदसहिय त्ति' उद्दिष्टचन्द्रयुक्तात् द्वीपात् समुद्राद्वा प्राग्जम्बूद्वीपमादिं कृत्वा ये प्राक्तनाश्चन्द्रास्ते आदिमचन्द्रास्तैरादिमचन्द्रैः, उपलक्षणमेतत् (तेन) आदिमसूर्यैश्च सहिता यावन्तो भवन्ति तावत्प्रमाणा अनन्तरे कालोदादौ भवन्ति । तत्र धातकीखण्डे द्वीपे उपदिष्टाश्चन्द्रा द्वादश, ते त्रिगुणाः क्रियन्ते, जाताः षट्त्रिंशत्, आदिमचन्द्राः षट्, तद्यथा–द्वौ जम्बूद्वीपे चत्वारो लवणसमुद्रे, एतैरादिमचन्द्रैः सहिता द्विचत्वारिंशद्भवन्ति, एतावन्तः कालोदसमुद्रे चन्द्राः । एष एव करणविधिः सूर्याणामपि, तेन सूर्या अपि तत्रैतावन्तो वेदितव्याः । तथा कालोदसमुद्रे द्विचत्वारिंशच्चन्द्रमस उद्दिष्टाः, ते त्रिगुणाः क्रियन्ते, जातं षड्विंशं शतम्, आदिमचन्द्रा अष्टादश, तद्यथा–द्वौ जम्बूद्वीपे चत्वारो लवणसमुद्रे द्वादश धातकीखण्डे, एतैरादिमचन्द्रैः सहितं षड्विंशं शतं जातं चतुश्चत्वारिंशं शतम्, एतावन्तः पुष्करवरद्वीपे चन्द्रा एतावन्त एव सूर्याः । एवं सर्वेष्वपि द्वीपसमुद्रेषु एतत्करणवशाच्चन्द्रसूर्यसङ्ख्या प्रतिपत्तव्या ॥ ७२ ॥

सम्प्रति प्रतिद्वीपं प्रतिसमुद्रं च ग्रहनक्षत्रताराप्रमाणपरिज्ञानोपायमाह—

रिक्खग्गहताराणं, दीवसमुद्दे जइच्छसे नाउं ।
तस्स ससीहियगुणियं, रिक्खग्गहतारगग्गं तु ॥ ७४ ॥

व्याख्या—अत्राग्रशब्दः परिमाणवाची यत्र द्वीपे समुद्रे वा नक्षत्रपरिमाणं ग्रहपरिमाणं तारापरिमाणं वा ज्ञातुमिच्छसि तस्य द्वीपस्य समुद्रस्य वा संबन्धिभिः शशिभिः एकस्य शशिनः परिवारभूतं नक्षत्रपरिमाणं ग्रहपरिमाणं तारापरिमाणं (वा) गुणितं सत् यावद्भवति तावत्प्रमाणं तत्र द्वीपे समुद्रे वा नक्षत्रपरिमाणं ग्रहपरिमाणं तारापरिमाणमिति । यथा लवणसमुद्रे किल नक्षत्रादिपरिमाणं ज्ञातुमिष्टं, लवणसमुद्रे च शशिनश्चत्वारः, तत एकस्य शशिनः परिवारभूतानि यानि अष्टाविंशतिनक्षत्राणि तानि चतुर्भिर्गुण्यन्ते, जातं द्वादशोत्तरं शतम्, एतावन्ति लवणसमुद्रे नक्षत्राणि । तथाऽष्टाशीतिर्ग्रहा एकस्य शशिनः परिवारभूतास्ते चतुर्भिर्गुण्यन्ते, जातानि त्रीणि शतानि द्विपञ्चाशदधिकानि ३५२, एतावन्तो लवणसमुद्रे ग्रहाः । तथैकस्य शशिनः परिवारभूतानि तारागणकोटिकोटीनां षट्षष्टिः सहस्राणि नव शतानि पञ्चसप्तत्यधिकानि, तानि चतुर्भिर्गुण्यन्ते, जातानि कोटिकोटिनां द्वे लक्षे सप्तषष्टिः सहस्राणि नव शतानि २६७९०० शून्यानि १६, एतावत्यो लवणसमुद्रे तारागणकोटिकोटयः, एतच्च "चत्तारि चेव चंदा चत्तारि य सूरिया लवणतोए" इत्यादिना ग्रन्थेन प्रागेवोक्तम् । एवं सर्वेष्वपि द्वीपसमुद्रेषु परिभावनीयम् ॥ ७४ ॥

सम्प्रति समस्तस्यापि क्षेत्रसमासप्रकरणस्य गाथापरिमाणमाह—

गाहाणं छच्च सया, सत्तत्तीसा य होंति पडिपुन्ना ।
खित्तसमासं पगरणं, निद्दिट्ठं पुव्वसूरीहिं ॥ ७५ ॥

व्याख्या—इदं क्षेत्रसमासप्रकरणं सर्वसङ्ख्यया निर्दिष्टं गाथानां षट् शतानि सप्तत्रिंशानि सप्तत्रिंशदधिकानि ६३७ परिपूर्णानि भवन्ति ॥ ७५ ॥

अधुना क्षेत्रसमासप्रकरणे पठनाय श्रवणाय च प्रवृत्तानामुत्तमफलसंप्राप्तिविषयमाशीर्वादमाह—

समयक्खित्तसमासं, जो पढइ य जो य णं निसामेइ ।
तेसिं सुयंगदेवी, उत्तमसुयसंपयं देउ ॥ ७६ ॥

व्याख्या—योऽमुं क्षेत्रसमासं सम्यग्भावसारं पठति यश्च निशामयति आकर्णयति तेभ्यः श्रुताङ्गदेवी द्वादशाङ्गश्रुतरूपिणी उत्तमां श्रुतसम्पदं ददातु ॥ ७६ ॥

जिनवचनगतं विषमं, भावार्थं यो विविच्य शिष्येभ्यः ।
इत्थमुपादिशदमलं, परोपकारैककृतचेताः ॥ १ ॥
तं नमत बोधिजलधिं, गुणमन्दिरमखिलवाग्मिनां श्रेष्ठम् ।
चरणश्रियोपगूढं, जिनभद्रगणिक्षमाश्रमणम् ॥ २ ॥

---

१ "पण्णत्ता इति इत्थ सत्थम्मि" इति प्रत्यन्तरे पाठः, टीका तु न तथा.

वाचः क्व तस्य गम्भीराः, परभागमुपागताः ।
क्व चाहं जडधीरेष, स्वल्पशास्त्रकृतश्रमः ॥ ३ ॥

तथापि गुरुपादार–विन्दद्वन्द्वप्रसादतः ।
जातकिञ्चिन्मतिस्फूर्ति–रेनां टीकां व्यधादहम् ॥ ४ ॥

यद्गदितमल्पमतिना, जिनवचनविरुद्धमत्र टीकायाम् ।
विद्वद्भिस्तत्त्वज्ञैः, प्रसादमाधाय तच्छोध्यम् ॥ ५ ॥

इदमतिगम्भीरतरं, क्षेत्रसमासं विवृण्वता कुशलम् ।
यदवापि मलयगिरिणा, सिद्धिं तेनाश्नुतां लोकः ॥ ६ ॥

अर्हतः शरणं सिद्धान्, शरणं संयतानपि ।
शरणं जिननिर्दिष्टं, धर्मं शरणमाश्रिताः ॥ ७ ॥

अर्हन्तो मङ्गलं सिद्धा, मङ्गलं मम साधवः ।
मङ्गलं मङ्गलं धर्मः, तान्मङ्गलमशिश्रियम् ॥ ८ ॥

॥ इति श्रीमलयगिरिविरचिता क्षेत्रसमासटीका पारमुपागमत् इति ॥

॥ इति श्रीबृहत्क्षेत्रसमासवृत्तिः ॥

